श्रीमधुसूदनसरस्वतीविरचितः

# सिद्धान्ततत्त्वबिन्दुः

श्रीनारायणतीर्थकृतलघुव्याख्यया
तथा
श्रीपुरुषोत्तमसरस्वतीकृतबिन्दुसंदीपनेन च
सनाथीकृतः ।



धी न्युस प्रिंटींग प्रेस—मुम्बई.

मूल्यं सार्धो रूप्यकः

श्रीमधुसूदनसरस्वतीविरचितः

# सिद्धान्ततत्त्वबिन्दुः

श्रीनारायणतीर्थकृतलघुव्याख्यया
तथा
श्रीपुरुषोत्तमसरस्वतीकृतबिन्दुसंदीपनेन च
सनाथीकृतः ।



वाक्रेइत्युपाह्वगङ्गाधरभट्टसुत–महादेवशर्मणा
संशोधितः

स च

मुम्बय्यां
मणिलाल इ. देशाई इत्यनेन स्वीये 'गुजराती' पत्रस्य
"न्यूस मुद्रणयन्त्रालये"
मुद्रयित्वा प्रकाशितः ।
कालाघोडा, फोर्बस स्ट्रीट, बेक–हाउस लेन, फोर्ट ।



शकाब्दाः १८५० खिस्ताब्दाः १९२९

मूल्यं सार्धो रूप्यकः

श्रीः

# विज्ञापनम् ।

ॐ ६ नमः श्रीगुरुचरणारविन्दाभ्याम् ।

अथैष **सिद्धान्तबिन्दुर्नाम** वेदान्तप्रकरणग्रन्थष्टीकाद्वयसंवलितो मुद्रयित्वा प्रकाश्यते विद्वज्जनमनःप्रमोदाय ।

श्री १००८ मत्परमहंसपरिव्राजकाचार्य**शंकरभगवत्पाद**प्रणीतां **दशश्लोकी**मालम्ब्य तद्व्याख्यानरूपः श्रीमत्प० **श्रीमधुसूदनसरस्वतीचरणैः** संक्षेपतः समावेशितसकलवेदान्तप्रक्रियोऽन्तेवासिबलभद्रभट्टाचार्यप्रार्थनया प्रणीतः **सिद्धान्तबिन्दुर्नाम** लघुः प्रबन्धः। यत्र च दर्शनान्तरादिदृष्टाद्वैतमताक्षेपान्निरस्यता ग्रन्थकृता नव्यतार्किकरीतिरनुसृतेति न केवलमनधीतन्यायैरयं दुरवगमः किंतु नव्यनये दृढपरिशीलनवद्भिः सूक्ष्मधिषणैरपि दर्शनान्तरेष्वकृतभूरिपरिश्रमैर्दुरवगमाभिसंधिरिति साधारणजनोपकाराय पूर्वैर्विद्वद्भिः स व्याख्यायि । तस्यास्य चतस्रो व्याख्याः श्रूयन्ते। तत्रैकैतद्ग्रन्थकृतां मधुसूदनसरस्वतीनां विद्याशिष्येण **पुरुषोत्तमेन** प्रणीता **बिन्दुसंदीपनाख्या** । अपरे द्वे श्रीमत्प० प० **नारायणतीर्थ**प्रणीते **बृहल्लघुव्याख्ये** । चतुर्थी च श्रीनारायणतीर्थशिष्यश्री**ब्रह्मानंद**सरस्वतीप्रणीता **न्यायरत्नावलीसमाख्या** । तासु **न्यायरत्नावली** कुम्भघोणनगरे प्राङ्मुद्रिताऽपि सूक्ष्मतमविचारबहुलतया मूलादप्यतिगहना केवलं पण्डितधुरीणवेद्या साधारणजनोपकाराय नालमिति सुगमां ग्रन्थतात्पर्यावबोधनक्षमां च व्याख्यामन्वेषयद्भिरस्माभिः 'एल्फिन्स्टन् कॉलेज' संज्ञकाङ्ग्लमहाविद्यालये संस्कृताध्यापकानां पं० शिन्त्रे शिवरामशास्त्रिणां मुखादस्त्याळंदीक्षेत्रे **साधकाश्रमे** नारायणतीर्थप्रणीता सुगमा चारुतरा च सिद्धान्ततत्त्वबिन्दुव्याख्या, मया तामाश्रित्यैव प्राक्पाठितः सिद्धान्ततत्त्वबिन्दुरिति श्रुतम् । ततोऽस्माकं तन्मुद्रणेच्छां विदित्वा शिन्त्रेशास्त्रिभिरस्मदर्थं प्रार्थितैरुक्ताश्रमकुलपतिभिः 'साखरे'इतिप्रथितापरनामधेयैर्ब्रह्मश्री '**विनायकशास्त्री जोशी**' इत्येतैः, स्वगुरुभिः श्रीमत्प० प० **दक्षिणामूर्त्याश्रमै**रात्मने प्रसादतयाध्ययनावसाने समर्पितं श्रीनारायणतीर्थकृतलघुव्याख्यासनाथीकृतं सिद्धान्ततत्त्वबिन्दुपुस्तकं

मुद्रणाय परमया प्रीत्याऽस्मदधीनमकारि । यच्चाक्षराणां चारुतरविन्यासेन मधुरदर्शनं प्रायः शुद्धं च। बिन्दुसंदीपनपुस्तकं च भडकमकरहस्तलिखितपुस्तकसंग्रहात्तदध्यक्षैः प्रो० हरी दामोदर वेलणकरैर्मुद्रणाय दत्तमित्येतेषां सर्वेषां भूयांसमुपकारं मुहुर्मुहुः स्मरामः । उभयोरपि टीकयोरेकैकपुस्तकाश्रयणेन शोधनात्क्वचिदशुद्धिसमुपलब्धौ क्षन्तव्यं विद्वद्भिरिति प्रार्थयते—

विदुषां विधेयः—

बाक्रेइत्युपाह्वो गङ्गाधरभट्टसुतो महादेवशर्मा ।



# सिद्धान्ततत्त्वबिन्दुविषयानुक्रमणिका ।

समाप्तानुक्रमणिका ।



श्रीः

श्रीमधुसूदनसरस्वतीविरचितः

# सिद्धान्ततत्त्वबिन्दुः

नारायणतीर्थकृतलघुव्याख्या–पुरुषोत्तमकृतसंदीपनाभ्यां सहितः ।

श्रीशंकराचार्यनवावतारं विश्वेश्वरं विश्वगुरुं प्रणम्य ।
वेदान्तशास्त्रश्रवणालसानां वोधाय कुर्वे कमपि प्रयत्नम् ॥ १ ॥

---

## नारायणतीर्थीया सिद्धान्तबिन्दुलघुव्याख्या.

श्रीगणेशाय नमः ।

श्रीशं शान्तमनन्तमद्वयसुखं स्वाध्यस्तसत्ताप्रदं
नत्वाचार्यवरं गुरूंश्च सततं सिद्धान्तविन्दोर्गिरः
सत्प्रीत्यै श्रुतिमुख्यमाननिवहैः सिद्धान्तसंग्राहिका
दुर्बोधाः प्रकटीकरोति मतिमान्नारायणाख्यो यतिः ॥ १ ॥

परमात्मा परं ब्रह्म निर्विशेषः स्वसाक्षिकः ॥ सच्चित्सुखघनोऽद्वैतोऽनृताधिष्ठानकारणम् ॥२॥
तदभेदधिया स्वस्य जाग्रत्स्वप्नादिसाक्षिणः ॥ स्वाध्यस्तानर्थविलयान्मोक्षस्तद्रूपसंस्थितिः ॥३॥
इति वेदान्तसिद्धान्तो भगवत्पादसंमतः ॥ कृष्णद्वैपायनाभीष्ट इति सन्तोऽत्र सादराः ॥४॥

एको वशी सर्वभूतान्तरात्मा, 'एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्, 'ब्रह्मविदाप्नोति परं, 'ब्रह्म वेद ब्रह्मैव भवतीत्यादि-श्रुत्याऽद्वैतज्ञानस्यैव नित्यनिरतिशयानन्दरूपमोक्षसाधनत्वनिश्चयात्, तादृशानन्दरूपश्चात्मैव, तस्यैव स्वारसिकेष्टत्वात् । तत्र यद्यपि सुखमात्मरूपतया नित्यप्राप्तं तथाप्यनिर्वचनीयानाद्य-विद्यया विस्मृतग्रैवेयकादेरिवाप्राप्तत्वभ्रमात्सांसारिकसुखाभासप्राप्तयेऽनेककर्माण्याचरंस्तज्जनि-तसुखदुःखे अनुभवन् सर्वोऽपि जीवो दुरन्तदुर्वारसंसारचक्रे बम्भ्रमीति । अतः सर्वानर्थहेतु-रात्मानवबोध इति नित्यनिरतिशयस्वप्रकाशसच्चिदानन्दरूपयोर्जीवब्रह्मणोरैक्यरूपशुद्धचिन्मा-त्रगोचरनिर्विकल्पकसाक्षात्कारद्वारा तदपनयनेन स्वस्वरूपसाम्राज्यदाने प्रवृत्तापि 'तत्त्वमस्यहं ब्रह्मास्मीत्यादिश्रुतिः प्रत्यक्षाद्यविरोधाय कणभक्षाक्षचरणजैमिनिकपिलपतञ्जलिभिरसद्भिः साध्वीव स्वस्वपक्ष आकृष्यमाणा स्वाभिप्रायमनर्पयन्ती न फलाय कल्पत इति तदभिप्रेतैक-तरतत्त्वप्रकाशनाय भगवद्बादरायणसूत्रतद्भाष्यादीनि । तानि च कठिनत्वाद्बहुतरत्वाच्च मन्दम-ध्यमयोरनतिप्रयोजनानीति मत्वा शिष्टाग्रणीर्ग्रन्थकारः कमपि बह्वर्थवहं निबन्धं करिष्यंस्तस्य

निर्विघ्नपरिसमाप्तये गुरुदेवतानमस्कारात्मकं मङ्गलं शिष्यान् शिक्षयितुमादौ निबध्नन् ग्रन्थारम्भं प्रतिजानीते–श्रीशङ्करेत्यादिना। श्रीशङ्कराचार्यश्चासौ नवावतारश्चेति कर्मधारयः। रामकृष्णादिशरीरापेक्षया नवं शरीरमवतरति गच्छतीति नवावतारः। तथा च शङ्कराचार्यरूपेण नवतयाऽवतीर्णं विश्वेश्वरं प्रणम्येत्यर्थः। विश्वेश्वरमित्यनेन शास्त्रार्थेष्वनावरणं ज्ञापितम्। जगदीशितुरावरणायोगात्। विश्वगुरुमित्यनेन ज्ञानमार्गप्रवर्तकावतारत्वोक्त्याऽवतारान्तरतोऽप्युत्कर्षः सूचितः। प्रमाणं चात्र—

व्याकुर्वन् व्याससूत्राणि श्रुतेरर्थं यथोचिवान्। श्रुतेर्न्याय्यः स एवार्थः शङ्करः सविता न ना॥

इति शैवपुराणम्।

चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति!

इति वायुपुराणम्।

भविष्यत्यवतारेण शङ्करो नीललोहितः। श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया॥
उपदेक्ष्यति तज्ज्ञानं भक्तानां ब्रह्मसंहितम्। सर्ववेदार्थसारं हि धर्माद्वेदनिदर्शनात्॥
ये तद्विप्रा निषेवन्ते संन्यासेनोपचारतः। विजित्य कलिजान् दोषान् यान्ति तन्मयतां हि ते॥

इत्यादिकूर्मपुराणं चेति। वेदान्तेति। वेदान्तो नामोपनिषत्। सा चोप समीपे प्रत्यगात्मपराणां सहेतुसंसारमवसादयति नाशयतीति व्युत्पत्त्या ब्रह्मविद्या, सा शिष्यते निर्धार्यतेऽनेनेति शास्त्रम्, उपनिषन्मूलकतद्भाष्यादीनि, तच्छ्रवणेऽलसानां संक्षिप्तसाररूपेण तदर्थं श्रोतुकामानां बोधाय तत्प्रतिपाद्यार्थनिश्चयाय कमपि अपूर्वं सर्वसिद्धान्तग्राहकम्॥ १॥

## पुरुषोत्तमकृतं बिन्दुसंदीपनम्.

### श्रीगणेशं वन्दे।

यद्बोधादिदं भाति शुक्तिकारजतं यथा। यद्बोधादस्तमायाति तद्ब्रह्माद्वयमस्म्यहम्॥ १॥
श्रीरामं मुहुरानम्य वक्ति श्रीपुरुषोत्तमः। सिद्धान्तबिन्दोस्तत्त्वार्थसाधकं किमपि स्फुटम्॥२॥
परमेष्ठिगुरुं रामं श्रीपादं परमादरात्। नत्वा हरिहरानन्दं नमामि परमं गुरुम्॥ ३॥
श्रीधरं श्रीगुरुं नत्वा नौमि श्रीपादमादरात्। विद्यागुरुं गुरुमिव सुराणां मधुसूदनम्॥ ४॥

विघ्नविघातार्थं मङ्गलं कुर्वन्नारभ्यमाणग्रन्थस्य प्रयोजनमाह—श्रीशङ्कराचार्येति॥ विश्वेश्वरनामानं गुरुं प्रणम्येत्यन्वयः। तं किंभूतं, विश्वगुरुं विश्वेषां हितोपदेष्टारम् श्रीशब्द उत्कर्षवाचकः श्रीशङ्कराचार्याणां भाष्यकृतामभिनवावतारम्। यद्वा विश्वेश्वरं सगुणं ब्रह्म प्रणम्य श्रीरित्युपलक्षणम् वाणीभवान्योः। शं कल्याणं करोतीति व्युत्पत्त्या ब्रह्मा विष्णुः शम्भुश्च। आचार्या उपदेष्टारो व्यासवैयासकिकपिलशङ्कराचार्यप्रभृतयः। एत एव नवीना उत्कृष्टा आधुनिकाश्च अवतारा यस्य तम्॥ शेषं पूर्ववत्। प्रयोजनमाह वेदान्तेति। कमप्यनिर्वचनीयम्॥ १॥

**इह खलु साक्षात्परंपरया वा सर्वानेव जीवान्समुद्दिधीर्षुर्भगवाञ्छ्रीमच्छंकराचार्योऽनात्मभ्यो विवेकेनात्मानं नित्यशुद्धबुद्धमुक्तस्वभावं संक्षेपेण बोधयितुं दशश्लोकीं प्रणिनाय।**

( लघुव्याख्या. )

प्रेक्षावत्प्रवृत्तये विषयप्रयोजनाधिकारिसंबन्धान् दर्शयितुं भूमिकामारचयति—**इहेत्यादिना।** इह भुवि खलु वाक्यालङ्कारे साक्षाद्ब्राह्मणादित्रैवर्णिकान् शूद्रादींस्त्वेतद्ग्रन्थार्थज्ञानवद्वक्तृकेतिहासादिश्रवणद्वारा परम्परया केनचित्पुण्येन मनुष्यादिभावप्राप्तान् कीटादीन् समुद्दिधीर्षुः दुःखेनात्यन्तं विमुमोचयिषुः भगवान्—

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना ॥

इत्युक्तषड्गुणवान् श्रीशङ्करः मोक्षरूपश्रीमान् शङ्कराचार्यः अनात्मभ्यः अविद्यातत्कार्येभ्यः विवेकेन भेदेन अनात्मप्रतियोगिकभेदेनोपलक्षितमात्मानं बोधयितुमित्यर्थः। नित्यं ध्वंसप्रागभावाऽप्रतियोगिनं शुद्धं रागादिरहितं बुद्धं बोधरूपं मुक्तं अविद्यारूपबन्धरहितं स्वभावं स्वमेव भावः सत्ता यस्येति स्वस्वरूपसत्ताकमात्मानमनात्मनामधिष्ठानं संक्षेपेण प्रासंगिकोपासनादिविचारराहित्येन बोधयितुमप्रतिबद्धाऽपरोक्षसाक्षात्कारार्थम्। अत्रात्मानं बोधयितुमित्यनेनात्मज्ञानं विषयः ग्रन्थविषययोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः समुद्दिधीर्षुरित्यनेनाविद्यादिनिवृत्त्या स्वस्वरूपानन्दावाप्तिः फलं तत्कामोऽधिकारी च सूचितः ॥

( संदीपनम् )

ननु कमपि प्रयत्नं कुर्वे इति प्रतिज्ञातं तस्य च विषये स्वतन्त्रो ग्रन्थः कस्यचिद्व्याख्यानं वा ? तत्र द्वितीयमभिप्रेत्याह—**इहेति।** इह अद्वैतविचारे शारीरकविचारे वा, खलु वाक्यालङ्कारे। असंभावनाविपरीतभावनारहितान्युत्तमाधिकारिणोऽभिप्रेत्याह—**साक्षादिति।** श्लोकोपदेशमात्रेणेत्यर्थः। असंभावनाविपरीतभावनावतो मध्यमाधिकारिणोऽभिप्रेत्याह—**परंपरयेति॥** शास्त्रजन्यज्ञानानन्तरं श्रवणादिद्वारेत्यर्थः। यद्वा स्वसंनिकृष्टा ये तान् **साक्षा**दन्यांस्तु शिष्यादिद्वारा **परंपरयेति। अनात्मभ्य इति ॥** अनात्मभ्यो देहेन्द्रियमनोबुद्धिप्राणाहङ्कारचित्तादिभ्यो विवेकेनात्मानं बोधयितुमित्यन्वयः। एतेनात्मनो ब्रह्माभेदो ध्वनितः, नहि ब्रह्मातिरिक्तः कश्चिन्मुक्तस्वभावोऽस्ति। **नित्यशुद्धबुद्धमुक्तेत्यनन्तरं** सत्यसूक्ष्मसद्विभ्वद्वितीयपरमानन्देति पूरणीयम्। तथा चोक्तं **संक्षेप**शारीरके—

नित्यः शुद्धो बुद्धमुक्तस्वभावः सत्यः सूक्ष्मः सद्विभुश्चाद्वितीयः।
आनन्दाब्धिर्यः परः सोऽहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ इति।

द्वन्द्वात्परो यः श्रूयते स प्रत्येकमभिसम्बध्यत इति न्यायेन नित्यस्वभाववत्त्वशुद्धस्वभाववत्त्वादित्यर्थः। अत्र च प्रमाणमुत्तरनृसिंहतापिनीयनवमखण्डस्थवाक्यानि 'तद्यथा...एवमेवैषा माया स्वाव्यतिरिक्तानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति सैषा चित्रा सुदृढा बह्वङ्कुरेत्यादिकमुक्त्वा 'तस्माद्द्वय एवायमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यगेकरसः इति, तथा तत्रैव 'स होवाच तद्वा एतद्ब्रह्माद्वयं बृहत्त्वान्नित्यं शुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सदानन्दचिन्मात्रमात्मैवाव्यवहार्यमिति। **नित्यत्वं** कालपरिच्छेदशून्यत्वं, तच्च अज आत्मा महान् ध्रुवः, अविनाशी वा अरेयमात्मेत्यादिश्रुत्यर्थापत्तिप्रमितं, **शुद्धत्वमविद्यामलरहितत्वं** तच्च असङ्गोह्ययं पुरुषः, 'असङ्गमगुणमविक्रियमित्यादिश्रुतिप्रमितं, **बुद्धत्वं** स्वप्रकाशानुभवस्वरूपत्वं, भावेक्त-

प्रत्ययात् ॥ अत्र च प्रमाणं 'चेतनश्चेतनानां, 'सत्यं विज्ञानमानन्दं ब्रह्म, 'अत्रायं पुरुषः स्वयं ज्योतिरित्यादि श्रुतिः । मुक्तत्वं प्रमातृत्वादिबन्धरहितत्वं परमानन्दस्वरूपत्वं वा । अत्र प्रमाणं 'तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते । एवं च बन्धस्य काल्पनिकत्वेन मुक्तस्वभावत्वं बोध्यम् अन्यथा बन्धस्य सत्यत्वे ज्ञाननिवर्त्यत्वं न स्यात् । नहि सत्यस्य ज्ञाननिवर्त्यत्वं क्वचिद्दृष्टम् 'विमुक्तश्च विमुच्यत इति श्रुतेश्च । 'ब्रह्म वेद ब्रह्मैव भवतीत्यनेन ब्रह्मस्वरूपत्वं च मुक्तत्वं ब्रह्म च परमानन्दस्वरूपम् । तत्र च प्रमाणम् 'एष एव च परमानन्दः, कं ब्रह्म खं ब्रह्म, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्तीत्याद्याः श्रुतयः । सत्यत्वं पारमार्थिकत्वं, तच्चाबाध्यत्वं, सूक्ष्मत्वमिन्द्रियाग्राह्यत्वं दुर्ज्ञेयत्वं वा । अत्र च प्रमाणान्तरं–'नित्यं विभुं सर्वगतं सुसूक्ष्ममित्याद्याः श्रुतयः । सद्भावरूपं 'सदेवसोम्येत्यादिश्रुतेः । विभुत्वं सर्वगतत्वं, तच्च देशपरिच्छेदशून्यत्वं स्वातन्त्र्यं वा । तत्र प्रमाणान्तरं 'महान्तं विभुमात्मानं मत्वा धीरो न शोचतीति श्रुतिः । अद्वितीयत्वं स्वसमानसत्ताकद्वितीयरहितत्वं स्वसमानसत्ताकप्रतियोगिकसामान्यभेदरहितत्वमिति, सजातीयविजातीयस्वगतभेदशून्यत्वं वा । आनन्दत्वमपरिच्छिन्नसुखस्वरूपत्वमिति ॥ नन्वत्रार्थे सन्ति बहवो निबन्धाः किमनेनेत्याह–संक्षेपेणेति ।

**नन्विदंकारास्पदेभ्योऽनात्मभ्यो विवेकेनाहंकारास्पदमात्मानं सर्वो लोकोऽहमस्मीति प्रत्येति दुःखं चानुभवति, तेन ज्ञातज्ञापकत्वान्निष्प्रयोजनत्वाच्चात्मतत्वप्रतिपादनं व्यर्थमिति चेन्न, चिद्भास्यत्वेन लक्षणेनेदंकारास्पदानामपि देहेन्द्रियमनसां प्रतिभासतोऽहंकारास्पदत्वेन तदविवेकात्, तेन च शुद्धेऽप्यात्मनि दुःखित्वाद्यभिमानाच्छास्त्रीयेणैव ब्रह्मात्मैक्यज्ञानेन समूलस्य तस्य निवृत्तेः; तस्मादज्ञातज्ञापकत्वात् सप्रयोजनत्वाच्चात्मतत्त्वप्रतिपादनं न व्यर्थम् ।**

( लघुव्याख्या. )

सन्दिग्धापूर्वसप्रयोजन एव प्रेक्षावत्प्रवृत्तेरात्मनश्चातथात्वान्न तत्प्रतिपादनमुचितमित्यभिप्रेत्याहंप्रत्ययस्य प्रमात्वाभिमानी शङ्कते–नन्वित्यादिना । इदंकारास्पदेभ्यः इदमितिधीविषयेभ्यः द्रष्टृभिन्नेभ्य इति यावत् । अत एव अनात्मभ्यः परिच्छिन्नेभ्यः विवेकेन भेदेन अहङ्कारास्पदं अहमितिधीगोचरं सर्वो लोकः आस्तिकनास्तिकसाधारणो जनः प्रत्येति अनुभवति । अयं भावः–देहेन्द्रियादीनामवस्थाभेदेषु व्यभिचारित्वान्नानुवृत्ताहम्प्रत्ययविषयत्वं युक्तम् । बुद्धिमनसोश्चक्षुरादिवत्करणत्वादेव न तथात्वं युक्तम् । अहम्प्रत्ययस्य कर्तृमात्रविषयत्वात् । अतो देहेन्द्रियमनोव्यतिरिक्त आत्मैव विषयः । गौरोऽहमन्धोऽहमित्यादयस्तु प्रयोगा असत्यपि अभेदे कथं चित्'मञ्चाः क्रोशन्तीत्यादिवदौपचारिका एव । अतः प्रतिबन्धकभेदग्रहसत्त्वे तादात्म्यारोपासंभवादनावृतत्वेनासंदिग्धत्वादपूर्वत्वाभावाच्च शास्त्रं निरर्थकमिति । अपिच शास्त्रजन्यज्ञानान्नैव दुःखनिवृत्तिरूपपुरुषार्थसंभवः, प्रत्यक्षप्रमयापि तस्यानिवृत्तेरित्यभिप्रेत्याह–दुःखं चेति । तथाच धारयाऽनादिदुःखादिरूपबन्धस्य प्रत्यक्षप्रमयाप्यनिवृत्तेर्न शास्त्रजन्यज्ञानेन तन्निवृत्तिः संभाविता, शास्त्रजज्ञानस्य परोक्षत्वाद्दैघत्वाभावेन चादृष्टद्वारकत्वरूपोत्कर्षाभावाच्च । अतोऽपि शास्त्रमनर्थकं सप्रयोजन एव शास्त्रस्य प्रामाण्यादिति भावः ।

पूर्वपक्षार्थमुपसंहरति—तेनेति । इतरभेदावगाहिप्रत्यक्षसत्त्वेन चेत्यर्थः । ज्ञातज्ञापकत्वात् इतरभिन्नतया ज्ञातस्यैव ज्ञापकत्वात् प्रमापकत्वात् निष्प्रयोजनत्वात् परोक्षप्रमाया उत्कर्षाभावेन बन्धनिवृत्तिरूपप्रयोजनशून्यत्वात् प्रतिपादनं प्रतिपत्त्यनुकूलो व्यापारः शास्त्रं तदेकदेशप्रकरणं च व्यर्थं पुरुषार्थसाधनतारहितम् । 'अहमस्मीति' प्रत्ययस्य प्रमात्वे स्यादेवं न तु तथा, गौरोऽहमित्यादिप्रतीतेरौपचारिकत्वायोगात् तद्वद् भ्रमत्वमेवेत्यभिप्रेत्य समाधत्ते—चिद्भास्यत्वेनेत्यादि । चिद्भास्यत्वेन लक्षणेन हेतुना इदङ्कारास्पदानामपि इदमितिधीविषयाणामपि द्रष्टृभिन्नानामिति यावत् । प्रतिभासतः गौरोऽहं काणोऽहं कर्तास्मीत्यादिभ्रमात् अहंकारास्पदत्वेन अहमितिधीविषयत्वेन तदविवेकात् आत्मन इतरभिन्नत्वेनाज्ञानात् । तेन च अज्ञानेन च दुःखित्वाद्यभिमानात् दुःखित्वादिभ्रमात् शास्त्रीयेण तत्त्वमस्यादिवाक्यजनितेन ब्रह्मात्मैक्यज्ञानेन ब्रह्मात्मनोः परजीवयोरखण्डाभेदार्थज्ञानेन समूलस्य तस्य अज्ञानरूपमूलसहितस्याहङ्काराद्यध्यासस्य निवृत्तेः नाशात् । नाशश्चाग्रे निरूपणीयः । अयं भावः—श्रुतिस्मृतिपुराणादिषु समस्तोपाध्यनवच्छिन्नानन्तानन्दैकरसमद्वितीयमात्मतत्त्वं पठ्यते इति नाहंप्रत्ययस्य सोपाधिकार्थस्यात्मतत्त्वावगाहित्वं वक्तुं शक्यम्, स्वतःप्रमाणश्रुत्यादिविरोधात् । 'अहमिहैवास्मिसदने' इत्यादिप्रतीतेर्भ्रमत्वावश्यकत्त्वाच्च, आत्मनो व्यापकत्वात् । नापि तादृशप्रतीतीनां गौणत्वं वक्तुं शक्यं, भेदाग्रहात् । अतोऽहंप्रत्ययाविशेषाद्गौरोऽहंकर्तेत्यादिप्रत्यया अपि भ्रमरूपा एवेति संक्षेपः । फलितार्थमुपसंहरति—तस्मादिति । तस्माच्छास्त्रजप्रमातः पूर्वमध्यासानुगुणाज्ञानकल्पनात् । अज्ञातज्ञापकत्वात् अज्ञानविषयतावद्विषयकत्वात् । तथाचाहम्प्रत्ययस्य केवलात्मविषयत्वाभावादात्मनः संदिग्धत्वापूर्वत्वादिसंभवात्तत्र प्रमाणं सच्छास्त्रं सार्थकमेवेति भावः । अत एव प्रयोजनसद्भावादपीत्याह—सप्रयोजनेति । भ्रमनिवृत्तिरूपप्रयोजनसद्भावाच्चेत्यर्थः । न व्यर्थं न पुरुषार्थसाधनतारहितम् ।

## ( संदीपनम् )

नन्वनात्मभ्यो घटपटादिभ्यो भिन्नत्वेनात्मनि ज्ञातेऽपि दुःखानुभवदर्शनान्नात्मज्ञानं दुःखनिवर्तकं ज्ञातज्ञापकत्वाच्च शास्त्रं न प्रमाणमित्याशङ्कते—नन्विति । अथ इदङ्कारास्पदत्वं नाम इदमितिप्रतीतिविषयत्वं तच्चात्मन्यपि 'अयमात्मा ब्रह्म, 'अनेन जीवेनेत्यादिना इदंत्वेनात्मनो बोधनात् । तथाचानुपपन्नतरोऽयमनुभवः । नहि कश्चिदनात्मभ्योऽभेदेनात्मानमनुभवतीत्यभिप्रेत्याह—अनात्मभ्य इति घटपटादिभ्य इत्यर्थः । एवं च घटपटाद्यन्यतमत्वं जडत्वं वा इदंत्वं, न पूर्वोक्तमत उपपन्नतम उक्तानुभव इति भावः । कियद्भ्यो भेदेनात्मनि गृहीतेऽपि अनात्मभ्यो देहेन्द्रियादिभ्यो भेदेनाग्रहणादनात्मसामान्येभ्यो भेदाग्रहात्तादृशं ज्ञानं जातमपि न प्रयोजनक्षममिति परिहरति—नेति । वस्तुत इदङ्कारास्पदानां देहेन्द्रियमनसां चिद्भास्यत्वलक्षणरूपेणासाधारणधर्मेणानात्मनामप्यहङ्कारास्पदत्वेनाहमितिप्रत्ययालम्बनत्वेनात्मत्वेन प्रतिभासतो ज्ञातत्वादित्यन्वयः । तदविवेकादिति देहेन्द्रियमनोहङ्कारादिभ्यो भेदेनाग्रहादित्यर्थः । एवं च तदविवेकादित्यन्तेनाशङ्कितात्मभेदग्रहः परास्तः ॥ चिद्भास्यत्वमनात्मत्वसाधने हेतुः । अनात्मत्वेन ज्ञातत्वं विवेकाग्रहे हेतुरिति मन्तव्यम् । एवं च देहेन्द्रियादयः अनात्मानः, चिद्भास्यत्वात्; देहादय

आत्मनो न गृहीतभेदकाः, आत्मत्वेन ज्ञातत्वाद्वेति प्रयोगः। चिद्भास्यत्वं चैतन्यप्रकाश्यत्वम्। तत्र च प्रमाणं 'तस्य भासा सर्वमिदं विभातीत्याद्या श्रुतिः। आशङ्कितदुःखानुभवमपनुदति—तेनेति॥ तेनाविवेकेनागृहीतभेदेनेति यावत्। अभिमानादिति। आत्मनि दुःखभ्रममात्रं न दुःखमिति भावः। यदीदं ज्ञानं न प्रयोजनक्षमं तर्हि कीदृशमात्मतत्वज्ञानं प्रयोजनक्षमं तत्राह—शास्त्रीयेण चेति। शास्त्रं च—

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते। इत्यादि।

एवं च शुद्धजीवब्रह्मणोरभेदावगाहिज्ञानं शास्त्रजन्यं तच्च बन्धनिवर्तकमिति फलितम्। उपसंहरति—तस्मादिति॥

**तस्य चात्मतत्त्वस्य 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिवेदान्तमहावाक्यमेव प्रमापकम्। वाक्यं च पदार्थज्ञानद्वारेणैव बोधकमिति तत्-त्वम्-पदार्थयोः प्रकृतवाक्यार्थानुकूलयोरन्यतोऽसिद्धत्वात्तावपि शास्त्रेणैव प्रमातव्यौ यूपाहवनीयादिपदार्थवत्।**

( लघुव्याख्या. )

ननु तथापि शास्त्रं व्यर्थं, तस्य परोक्षज्ञानजननस्वाभाव्यात्, परोक्षज्ञानस्य चापरोक्षाध्यासाप्रतिक्षेपकत्वात्। अन्यथा श्वैत्याद्यनुमानादिना 'पीतः शङ्खः' इत्यादिभ्रमस्य निवृत्त्यापत्तिस्तत्राह—तस्य चेति। ब्रह्मात्मैकत्वलक्षणस्याखण्डार्थस्येत्यर्थः। आदिना 'प्रज्ञानं ब्रह्म, 'अयमात्मा ब्रह्मेत्यादिपरिग्रहः। प्रमापकं साक्षात्काररूपप्रमाया जनकम्। ज्ञानस्य वस्तुमाहात्म्यकृतमेव परोक्षत्वमपरोक्षत्वं च नतु प्रमाणस्वभावकृतं, ब्रह्म च 'यत्साक्षादपरोक्षाद्-ब्रह्मेति श्रुतेः स्वतोऽपरोक्षमेव। अतः तद्गोचरं वाक्यजन्यं ज्ञानं दशमस्त्वमसीत्यादाविवापरोक्षमेवेति संक्षेपः।

'वाक्यबोधकरीतिस्तु संक्षेपेण प्रदर्श्यते। पदयोस्तु समानाधिकरणत्वं पदार्थयोः ॥ १ ॥
विशेषणविशेष्यत्वं लक्ष्यलक्षणतापि च। संबन्धः सोऽयमित्यादाविव तस्माद्विरुद्धकम् ॥२॥
त्यक्त्वा विरुद्धं तत्रैव विशिष्टपरमात्मनोः। स्वरूपं लक्षयत्येकं तत्त्वमस्यादिका श्रुतिः ॥३॥
उपक्रमादिलिङ्गेन नैव भिन्नार्थिका ततः' ॥

अयमर्थः—पदयोर्भिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्नर्थे वृत्तित्वरूपं सामानाधिकरण्यम्। पदार्थयोः परस्परोद्देश्यविधेयभावेन परस्परभेदव्यावर्तकत्वाद् व्यावर्त्यव्यावर्तकभावरूपो विशेषणविशेष्यभावः। पदयोः पदार्थयोश्च विरुद्धविशिष्टत्वांशपरित्यागेनाविरुद्धनिष्कृष्टधर्मिमात्रेण सह लक्ष्यलक्षणभावः। पदप्रत्यगात्मनोः प्रतिपाद्यप्रतिपादकभावरूपः, पदार्थप्रत्यगात्मनोस्तूपपाद्योपपादकभावरूपश्चेति सम्बन्धत्रयस्य 'सोऽयं पुरुषः' इत्यादिवाक्येष्विव तत्त्वमस्यादिवाक्येष्वपि सद्भावात्। तेन श्रुतिरपि निष्कृष्टयोरैक्यरूपं शुद्धं स्वरूपं बोधयति। तथाहि—यथा 'सोऽयं पुरुषः' इति वाक्ये स इति तत्पदस्य तद्देशतत्कालवैशिष्ट्यं प्रवृत्तिनिमित्तम्, अयंशब्दस्यैतत्कालैतद्देशवैशिष्ट्यं, भिन्नप्रवृत्तिनिमित्तयोः सोऽयंशब्दयोरेकस्मिन् पुरुषपदोप-

स्थापिते पिण्डे तात्पर्यम् । सोऽयमयं स इति च विशेषणविशेष्यभावः । विशिष्टशक्त्योः सोऽयंशब्दयोर्विरुद्धविशिष्टत्वांशत्यागेन पुरुषेण सह लक्ष्यलक्षणभावश्च, तथा तत्त्वमस्यादि-वाक्येष्वपि जगत्कर्तृत्वादिवैशिष्ट्यं तत्पदस्य प्रवृत्तिनिमित्तं, त्वंपदस्यावस्थात्रयवत्त्वं, भिन्न-प्रवृत्तिनिमित्तयोस्तत्त्वंपदयोरेकस्मिन् शुद्धे तात्पर्यम् । तत्त्वं, त्वं तदिति विशेषणविशेष्यभावः। विरुद्धार्थधर्मत्यागेन शुद्धेन सह लक्ष्यलक्षणभावश्चेति विशिष्टयोस्तत्त्वंपदाभ्यां शक्त्योपस्थापि-तयोर्भिन्नयोरभेदायोगेन लक्षणया बोधितयोः शुद्धपदार्थयोरैक्यं सामानाधिकरण्यमर्यादया प्राप्तमुपासीतेतिपदकल्पनाभ्रमनिरासद्वाराऽसीत्यादिपदेन दृढीक्रियते । एवमन्यत्रापीति दिक् । नच तत्त्वमसीतिवाक्यस्य तस्य त्वमसीत्यर्थ इति वाच्यम् । एकमेवाद्वितीयमित्युपक्रम्यैत-दात्म्यमिदं सर्वमित्युपसंहारादिलिङ्गविरोधात् । कौशीतक्यां तत्त्वमसीत्यात्मावगम्य इत्युक्त्वा तत्त्वमसिवाक्यस्याहंब्रह्मास्मीत्यर्थप्रदर्शनाच्चेन्यत्र विस्तरः । ननु तत्त्वंपदार्थयोर्मानान्तरगम्य-त्वमस्ति न वा । आद्ये मानान्तरानधिगतत्वरूपापूर्वत्वलिङ्गभङ्गप्रसङ्गः । अन्त्ये शास्त्रादपि वद्बोधासंभवः, मानान्तरेण प्रमिते पदार्थे गृहीतवृत्तिकस्य पदस्य ज्ञानेनोपस्थापने सति वाक्यार्थबोधस्यानुभवसिद्धत्वात् । न तयो रूपाद्यभावान्मानान्तरगम्यत्वं संभवति, वक्तुं वा युक्तं सिद्धान्तभङ्गप्रसङ्गादित्यत आह—वाक्यं चेति । पदकदम्बात्मकं वाक्यं चेत्यर्थः । पदार्थज्ञानद्वारैव वृत्त्या पदजन्यपदार्थोपस्थितिद्वारैव ज्ञापकं वाक्यार्थप्रमापकम् । तत्त्वंपदार्थयोः तत्त्वंपदाभ्यां वाच्ययोर्लक्ष्ययोश्च प्रकृतवाक्यार्थानुकूल्योः प्रकृतवाक्यार्थबुद्धि-प्रयोजकीभूतोपस्थितिविषययोः अन्यतोऽसिद्धत्वात् उपनिषद्भिन्नमानतोऽप्रमितत्वात् तावपि तत्त्वंपदवाच्यलक्ष्यावपि शास्त्रेणैव वाक्यशेषरूपश्रुत्यैव । जन्यत्वं तृतीयार्थः । प्रमातव्यौ प्रमा-र्हौ । श्रुतिप्रमाणमात्रजन्यप्रमाविषयाविति यावत् । तथा च मानान्तरतोऽप्रमितत्वेऽपि वाक्य-शेषैरेव प्रमिते तत्त्वंपदार्थे गृहीतवृत्तिकस्य तत्पदादेर्ज्ञानेनोपस्थापने सति वाक्यार्थबोधसंभवा-न्नानुपपत्तिरिति भावः । तत्र दृष्टान्तमाह——यूपेति । यथा 'यूपे पशुं बध्नातीति वाक्याद्यूपे पशुबन्धनसंसर्गे प्राप्ते यूपपदार्थाकाङ्क्षायामन्यतोऽप्राप्तं यूपपदार्थं 'यूपं तक्षतीति वाक्यं यूपोद्दे-शेन तक्षणादिसंस्कारविधायकं तक्षणादिसंस्कारविशेषविशिष्टं काष्ठं यूप इतिवाक्यमर्यादया प्रमापयति, एवमाहवनीये जुहोतीतिवाक्येनाहवनीये होमसंसर्गे प्राप्ते आहवनीयपदार्थाकाङ्क्षा-यामन्यतोऽप्राप्तमाहवनीयपदार्थं 'वसन्ते ब्राह्मणोऽग्नीनादधीत, नक्तं गार्हपत्यं दिवा आहव-नीय' मिति वाक्यं दिवाधानादिसामग्रीविशिष्टोऽग्निराहवनीय इति । एवं गार्हपत्यादिकमपि । आदिपदात्स्वर्गादिपरिग्रहः । एतेन युपाहवनीयादेः केवलस्य प्रत्यक्षयोग्यत्वेऽपि न हानिः स्वर्गादेरतथात्वादिति दिक् ।

## ( संदीपनम् )

शास्त्रमेवाह—तस्य चेति आत्मतत्त्वस्य जीवब्रह्मणोरभेदस्य। एवकारेण लौकिकप्रमाणव्यावृत्तिः कृता। नन्वेवमपि पदार्थबोधकाभावान्न वाक्यार्थबोध इत्याशङ्क्याह—वाक्यं चेत्यादिना। असिद्ध-त्वादज्ञातत्वात्। नन्विदमदृष्टचरमेव कल्प्यते, नेत्याह—यूपेति। 'यूपे पशुं बध्नातीति श्रूयते । तत्रैव 'यूपं तक्षति 'यूपमष्टाश्रीकरोतीति च। तेनाष्टाश्रीतक्षणविशिष्टखदिरादिकाष्ठविशेषो यूपपदवाच्य

इति यथा वेदाच्छक्तिग्रहस्तथा तत्त्वंपदार्थयोरपि वेदाच्छक्तिग्रह इत्यर्थः । आहवनीयेति । यद्यपि 'वसन्ते ब्राह्मणोऽग्नीनादधीतेत्याद्युत्पत्तिविधिषु आहवनीयत्वादिरूपेणाग्नेराधानकर्मत्वं न श्रूयते तथापि तस्य स्वरूपेणाग्नित्वेन वा, उत्पाद्याप्यविकार्यकर्मत्वाद्यनुपपत्तेः, आहवनीयादिशब्दार्थाज्ञानाद्याधानविधिप्रवृत्तितः प्रागपूर्वसाधनत्वस्य ज्ञातुमशक्यत्वात्तेन रूपेण व्रीह्यादिवत्संस्कार्यत्वानुपपत्तेः केन रूपेण कीदृशं कर्मेत्यपेक्षायां 'नक्तं गार्हपत्यमादधाति, दिवा आहवनीयं, 'भूरितिगार्हपत्यमादधाति, भुव इत्याहवनीयमित्यादि गुणवाक्येषु गार्हपत्याहवनीयत्वरूपेणाग्न्याधानकर्मत्वावगमात्तद्रूपस्य चाधानात्प्रागसिद्धत्वात्तेन रूपेण उत्पाद्यकर्मत्वं प्रतीयते । आधानेनाग्नी गार्हपत्याहवनीयौ कुर्यादिति, खदिरादि काष्ठं तक्षणादिभिर्यूपं कुर्यादितिवत् ततश्चाधानजन्योऽग्निगतोऽतिशय एव आहवनीयादिपदवाच्यो भवतीति । आदिपदग्राह्यं तु स्वर्गाद्यपि वेदबोधितशक्तिकम् । तथा हि वेदः—

> यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम् ।
> अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम् ॥ इत्यादि ।

**ततश्च 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति' इत्याद्याः सृष्ट्यादिश्रुतयस्तत्पदवाच्यार्थस्य समर्पिकाः, 'सत्यं ज्ञानमनन्तम्' इत्याद्यास्तु लक्ष्यार्थस्य । एवं जाग्रत्स्वप्नसुषुप्त्यादिश्रुतयः, 'तद्यथा महामत्स्य उभे कूले अनुसंचरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं च, इत्याद्यास्त्वंपदवाच्यार्थस्य समर्पिकाः, 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषो न दृष्टेर्द्रष्टारं पश्येः, इत्याद्यास्तु लक्ष्यस्य ।**

( लघुव्याख्या. )

उपपादनफलमाह—ततश्चेति । मानान्तरेणाप्रमितार्थस्य वाक्यशेषैरेव प्रमित्यङ्गीकारादेवेत्यर्थः । यतो वेत्यादि । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' इत्याद्याः सृष्टिस्थितिप्रलयबोधिकाः श्रुतय इत्यर्थः । श्रुत्यर्थस्तु—यतः यस्मादुपादानात् वै एव इमानि प्रत्यक्षाद्यवगतानि, नामरूपात्मकानि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि जायन्ते उत्पद्यन्ते येन निमित्तभूतेन जातानि उत्पन्नानि जीवन्ति वर्धन्ते यत्प्रयन्ति यद् ब्रह्म लयसुषुप्त्यादौ वासनारूपेण गच्छन्ति अभिसंविशन्ति बाधेन ज्ञानकाले तन्मात्रस्वरूपाणि भवन्ति तद्विजिज्ञासस्व तद्विचारय, विचार्यमाणे यत्सृष्ट्यादिकर्तृ तद् ब्रह्मेत्यर्थः । तत्पदवाच्यस्य तत्पदशक्यार्थस्य ब्रह्मणः समर्पिकाः प्रमापिकाः । एवं प्रमिते विशिष्टे गृहीतशक्तिकेन तत्पदेन लक्षणया शुद्धोपस्थितौ कारणीभूतानुभवजनकं वाक्यमाह—सत्यमिति । 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां सोऽश्नुते सर्वान् कामानित्याद्याः श्रुतय इत्यर्थः । लक्ष्यस्य तत्पदलक्ष्यस्य लक्षणया तत्पदबोध्यस्येति यावत् । प्रमापिका इति शेषः । श्रुत्यर्थस्तु—यः पुरुषधौरेयः ब्रह्म व्यापकं सत्यं कालत्रयाबाध्यं ज्ञानं ज्ञानस्वरूपं अनन्तं न विद्यतेऽन्तो यस्येति परिच्छेदत्रयरहितं गुहायां पञ्चकोशाख्यायां निहितं साक्षित्वेन स्थितं जानाति सर्वान् कामान् सर्वानानन्दान् अश्नुते

अनुभवति 'ब्रह्मविदाप्नोति परमित्यादिना शुद्धस्यैव प्रक्रान्तत्वात्सत्यादिवाक्यं शुद्धतात्पर्यकमिति भावः। तत्पदार्थस्योभयविधस्य बोधिकामुक्त्वा त्वंपदवाच्यस्य समर्पिकामाह—तद्यथेति। तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं च। आदिना 'तद्यथा श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः पक्षौ संहृत्य सल्लयायैव ध्रियते एवमेवायं पुरुष एतस्मा अन्ताय धावतीत्याद्याः श्रुतयः। अयमर्थः—तत्र स्वप्नबुद्धान्तयोः संचरन्नथात्मासङ्गत्वात्कर्तृतद्धर्मैरवशीकृतएव यथा लोके महामत्स्यो नादेयस्रोतसाऽवशीकृत एव पूर्वं च परं चेत्युभे कूले तटावनु क्रमेण सञ्चरति ताभ्यां भिन्नः सन् एवमेवायं पुरुष उपाधिभिन्नः सन्नुपाधिनाऽवशीकृत एव अंतौ कर्मफलपरिपाकौ अनुसंचरति स्वप्नान्तं स्वप्नभोगरूपं बुद्धान्तं जाग्रद्भोगरूपं, सुपर्णः गरुडजातिः श्येनः शरभजातिः विपरिपत्य नानादेशेषु पतित्वा श्रान्तः खिन्नः सन् पक्षौ संहृत्य संप्रसार्य सल्लयाय नीडाय ध्रियते यतते अन्ताय उपरतावस्थानार्थं धावति यतते तथाचात्मावस्थात्रयवान् त्वंपदार्थ इति सिद्धम्। एवं प्रमिते विशिष्टे गृहीतवृत्तिकेन त्वंपदेन लक्षणया शुद्धोपस्थितौ कारणीभूतानुभवजनकं वाक्यमाह—योऽयमिति। अयं अहमितिधीगोचरः, यः तवापि संमतः विज्ञानमयः विज्ञानप्रायः विज्ञानाभिमानीति यावत्। प्राणेषु ज्ञानकर्मेन्द्रियप्राणपञ्चकेषु अन्तर्यामितया स्थितः हृदि बुद्धौ अन्तर्ज्योतिः आदित्याग्निवाचामभावेऽपि प्रकाशकज्योतिः स्वप्रकाशः पुरुषः सर्वदृश्यानुस्यूतः। श्रुत्यन्तरं 'न दृष्टेरिति'। दृष्टेः प्रमाणजन्यवृत्तेः द्रष्टारं भासकं न पश्येः न पश्यसि, सर्वभासकं भास्यभिन्नं निर्धर्मकत्वात्प्रमाणायोग्यं यत्साक्षादपरोक्षाद् ब्रह्म तन्मे व्याचक्ष्वेति पृष्टं त्वंपदलक्ष्यं ब्रह्मेत्यर्थः।

## ( संदीपनम् )

तैत्तिरीयकस्थतृतीयप्रपाठकस्थं वाक्यमुदाहरति—यतो वेत्यादि। जीवन्तीत्यनन्तरं यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति श्रुतिशेषभागो बोध्यः। एवं च यत्प्रयन्तीत्यंशेन ब्रह्मण उपादानत्वमपि ध्वनितम्। अन्यथा तत्र लयासंभवात्। नहि कपालातिरिक्ते समवायिकारणनाशजन्यघटनाश इति कश्चिचेतनो ब्रवीतीत्यवधेयम्। पुनरपि तैत्तिरीयकश्रुतिमुदाहरति—सत्यमित्यादि। ब्रह्म यो वेद निहितं गुहायामिति श्रुतिशेषः। लक्ष्यस्य तत्पदलक्ष्यस्य। एवमित्यस्य समर्पिका इत्यनेनान्वयः। त्वंपदवाच्यार्थसमर्पिका बृहदारण्यकषष्ठाध्यायस्थज्योतिर्ब्राह्मणमध्यपातिश्रुतिमुदाहरति—तद्यथा महामत्स्य इति। अस्य शेषभागस्तु 'उभे कूले अनुसंचरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तानुसंचरति स्वप्नान्तं च बुद्धान्तं चेति। ज्योतिर्ब्राह्मणस्थं लक्ष्यसमर्पकं वाक्यमुदाहरति—योऽयमित्यादि 'हृद्यन्तर्ज्योतिः पुरुष इत्यनन्तरं स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव, इत्यन्तो द्रष्टव्यः। उषस्तब्राह्मणस्थवाक्यं लक्ष्यसमर्पकं पुनरुदाहरति—न दृष्टेरिति। न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयान्नमतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीथा एष त आत्मा अतोन्यदार्तमित्यन्तं बोध्यम्। लक्ष्यस्य त्वंपदलक्ष्यस्य।

तेन प्रथममवान्तरवाक्येभ्योऽनुभूतयोः शुद्धजीवब्रह्मणोस्तत्त्वमस्यादिवाक्ये मुख्यार्थान्वयानुपपत्तेर्लक्षणया स्मरणोपपत्तिः, सुषुप्तौ निर्विकल्पक-

**साक्षिचैतन्यानुभवाङ्गीकाराच्च, अद्वितीयब्रह्मविजिज्ञापयिषया प्रवृत्तानां सत्यज्ञानादिपदानामुपाधिविशिष्टचैतन्यशक्तत्वेऽपि चैतन्यमात्रे तात्पर्येण तत्रैव संस्कारोद्बोधाच्च। इच्छन्ति ह्याकाशादिपदादपि निर्विकल्पकं, तात्पर्याधीनत्वाच्छब्दवृत्तेः।**

( लघुव्याख्या. )

धर्मिप्रमापकं प्रदर्श्य वाक्यार्थबोधमुपसंहरति—तेनेत्यादि। तेन वाच्यलक्ष्यसमर्पणेन। तत्र लक्षणाबीजभूतवाच्यसमर्पणफलमाह—प्रथमं तत्त्वमस्यादिवाक्ये मुख्यार्थयोः तत्त्वंपदशक्यार्थयोः विशेषणभेदाद्भिन्नयोः अन्वयानुपपत्त्या तादात्म्यसंसर्गरूपान्वयस्य बाधितत्वप्रतिसंधानेन वाच्यसमर्पणे सत्येव वाच्ययोरन्वयानुपपत्तिप्रतिसन्धानं ततो वाच्यज्ञानाद्वाच्यसंबन्धिनो लक्ष्यस्यावान्तरवाक्यैरनुभवे सति तन्मूलकस्मृत्या वाक्यार्थप्रमा भवतीति वाच्यलक्ष्योभयसमर्पणफलमाह—अवान्तरेत्यादि। 'सत्यं ज्ञानमनन्तं, 'योऽयं विज्ञानमय इत्याद्यवान्तरवाक्यजन्यानुभवविषययोर्निरतिशयपरमानन्दरूपयोः परापरात्मनोरित्यर्थः। लक्षणया जहदजहत्स्वार्थलक्षणया स्मरणोपपत्तिः स्मृतिसंभवः। तत्त्वमादिपदैरिति शेषः। तथाच लक्षणयोपस्थितयोः शुद्धयोरन्वयबोधोऽयत्नसिद्ध एवेति भावः। अवान्तरवाक्येभ्योऽप्यनुभवे हेतुभूतमनुभवमाह—सुषुप्ताविति। अथवा न केवलमवान्तरवाक्येभ्य एव तत्त्वंपदलक्ष्ययोरनुभवः, किंतु सौषुप्तप्रत्यक्षतोऽपीत्याह—सुषुप्ताविति। अन्तःकरणवृत्त्युपरमावस्थायामित्यर्थः। निर्विकल्पकेति। निर्विकल्पको यः साक्षिचैतन्यविषयकोऽनुभवो ज्ञानाख्याऽविद्यापरिणामस्तस्य सुखमहमस्वाप्समिति स्मृत्यन्यथानुपपत्त्या विवरणाचार्यादिभिः स्वीकृतत्वादित्यर्थः। ननूत्थितस्य तादृशप्रत्ययो न स्मृतिः। साक्षिणोऽव्यवधानेनोत्थानकालस्यानुभवकालत्वात्। अत एवोक्तं वार्तिके—

न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः।
कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक्॥ इति।

तथा च तादृशस्मृत्यन्यथानुपपत्त्या सुषुप्तावनुभवायोगात्, उत्थानकाले च सर्वानुस्यूतरूपेणैव साक्षिणो भानादनुपहितरूपेण भानासंभवात्कथं पदैः स्मृतिसंभवस्तत्राह—अद्वितीयेति। अथवा नन्वेवं शुद्धयोरपूर्वत्वभङ्गप्रसङ्गः, सौषुप्तप्रत्यक्षेण ग्रहादत आह—अद्वितीयब्रह्मविजिज्ञापयिषया विशेषेणाखण्डसच्चिदात्मना ज्ञापयितुमिच्छया प्रमार्थमिति यावत्। प्रवृत्तानां किं तद्ब्रह्मेत्याकाङ्क्षापरिपूरकत्वेन पठितानां सत्यादिपदानां सत्यज्ञानानन्तविज्ञानमयादिपदानामुपाधिविशिष्टचैतन्यशक्तत्वेऽपि पदस्वाभाव्यादिना सत्यत्वादिधर्मविशिष्टचैतन्ये कल्प्यमानशक्तिमत्त्वेऽपि चैतन्यमात्रे अनुपहितचैतन्ये तात्पर्येण गृह्यमाणतात्पर्येण तदंश एव विशिष्टस्यांशे विशेष्ये शुद्ध एव संस्कारोद्बोधाच्च संस्कारोद्बोधकत्वाच्च सत्यादिपदानामिति शेषः। सत्यत्वादिविशिष्टविषयकशक्त्यनुभवजनितसंस्कारस्यैव धर्मांशमोषेण शुद्धस्मृतिहेतुत्वं कल्प्यते। तात्पर्यानुगृहीतसत्यादिपदज्ञानरूपोद्बोधकत्वादिति यावत्। विशिष्टसंस्कारात् शुद्धस्मृतिस्तार्किकाणामपि संमतेत्याह—इच्छन्तीति। तार्किका अपीति शेषः। आकाशादिपदादपि 'आकाशः

शब्दाश्रय' इत्यत्राकाशपदादपि निर्विकल्पकं निर्विकल्पकस्मरणम् । अन्यथा तत्र शब्दाश्रयः शब्दाश्रय इति पौनरुक्त्या शाब्दबोधानुपपत्तेः । अतः आकाशपदस्य यद्यपि शब्दाश्रयत्वविशिष्टे शक्तिस्तथापि तत्र मोषात् शुद्धस्यैव स्मृतिरङ्गीक्रियते प्रतीत्यनुसारादिति, यथा तथास्मन्मतेऽपीति भावः । अपिशब्दादेकरूपेणानुभवसंस्कारतोऽन्यरूपेण स्मृतिर्मोषादिना रामरावणादिपदेभ्यः स्पष्टैव ज्ञाप्यत इति दिक् । उभयमते तादृशकल्पनायां बीजं कण्ठरवेणाह-तात्पर्येति । वृत्तेः प्रवृत्तेः । बोधानुकूलसामर्थ्यस्येति यावत् । अथवा ननु तर्हि कथं लक्षणेति प्रवादः शक्त्या मोषेणैव स्मृत्युपपत्तेरित्याह—तात्पर्येति । तात्पर्यगोचरप्रमानुसारिकल्पनाविषयत्वात् शब्दवृत्तेः शब्दसंबन्धस्य शक्तिलक्षणान्यतरसंबन्धस्य । अत्रान्वयप्रतियोग्युपस्थितेरेव लक्षणात्वाङ्गीकारादिति भावः । तदुक्तम्—

अन्वयप्रतियोगिनो या स्यात्स्मृतिः सा हि निगद्यते ।
लक्षणा ननु शक्यस्याशक्ये वृत्तिरिहोच्यते ॥ इति ।

तथाचान्यत्र शक्यसंबन्धस्यैव लक्षणात्वेऽप्यत्र शक्यादन्येन रूपेणोपस्थितिरूपैव लक्षणाङ्गीक्रियते, महावाक्यार्थप्रमानुसारात् । लक्षणयेत्यस्य तु मोषेणेत्यर्थ इति दिक् ।

(संदीपनम्)

**मुख्यार्थेति।** एतेनान्वयानुपपत्त्या लक्षणाद्रियत इति ध्वनितम् । विनापि लक्षणामनुभवप्रकारमाह—**सुषुप्ताविति** । एवं च लक्षणा नादरणीयेति भावः । विशिष्टवाच्यार्थबोधादेव निर्विकल्पकस्मरणमित्याशयेनाह—**अद्वितीयेति** । प्रमेयवत् रामजनकवृत्तिधर्मवदित्यादिना बोधितस्य दशरथस्य दशरथत्वान्यप्रमेयांशस्य दशरथत्वान्यरामजनकवृत्तित्वांशस्य च मोषाद्दशरथत्वांशेऽन्याप्रकारकं दशरथज्ञानं यथा परे वदन्ति तथात्रापीत्यर्थः । परसंमतिमाह—**इच्छन्तीति** । उभयत्रापि साधकमाह—**तात्पर्येति** ॥

**एतेन प्रमितिप्रमात्रोर्महावाक्यार्थबोधे भानमपास्तम्, असंप्रज्ञातसमाधेः श्रुतिस्मृतिसिद्धत्वाच्च ।**

(लघुव्याख्या.)

**एतेन** निरुक्ततात्पर्यबलतो निर्विकल्पकबोधाङ्गीकारेण **प्रमितिप्रमात्रोः** प्रमितिप्रमाश्रययोः भानं सर्वस्यैव ज्ञानस्य घटत्वेन घटं जानामीत्यादिव्यवसायरूपत्वात्, प्रकृतेऽप्यात्मत्वेनात्मानं जानामीति संभाविते प्रत्यये प्रमेयस्येवावश्यकं प्रभाकरसंमतं विषयत्वमपास्तं, कर्तृकर्मविरोधेन स्वविषयत्वस्य बाधादाश्रयभानस्याप्ययोगात्सर्वत्र त्रिपुटीवादस्याप्रामाणिकत्वादिति भावः । श्रुतिस्मृतियोगशास्त्रादिषु सविकल्पकनिर्विकल्पकभेदेन समाधिद्वैविध्यस्योक्तेरपि मुक्तिजनकात्मसाक्षात्कारस्य निर्विकल्पत्वमेवेत्याह—**असंप्रज्ञातेति** । निर्विकल्पकसमाधेरित्यर्थः । **श्रुतीति** । उपलक्षणमेतद्योगसूत्राणामपि । **सिद्धत्वात्** प्रमितत्वात् । तथा च श्रुतिः—'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ'इत्यादिका । स्मृतिश्च—

'यत्रोपरमते चित्तं निरुद्धं योगसेवया। यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति'इत्यादिका। सूत्राणि तु 'योगश्चित्तवृत्तिनिरोधः' 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' 'वृत्तिसारूप्यमितरत्रे-त्यादीनि।

(संदीपनम्)

त्रिपुटीप्रत्यक्षवादिप्रभाकरमतमपनुदति—एतेनेति। तात्पर्यं तु आत्ममात्रे। अन्यथा तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतिविरोधः। नच तत्रापि तं विदि-त्वैवेत्येवकारभङ्गः कर्तव्योऽन्यथा ज्ञानातिरिक्तस्यापि कर्मणो मोक्षजनकत्वापत्तिरिति वाच्यम्। नान्यः पन्था इत्यनेनैव तद्व्यावृत्तेर्ज्ञातज्ञापकत्वेन नान्य इत्यंशवैयर्थ्यात् 'न कर्मणा न प्रजया धनेनेत्यादिश्रुतिविरोधाच्च। नच शाब्दबोधे भानाभावेऽपि सर्वत्र भानाभावो न सिद्ध इति वाच्यम्। नियमभङ्गेऽन्यत्र भानसाधकाभावात्। अन्यत्र भानेऽपि क्षत्यभावाच्च।

**पारोक्ष्य-सद्वयत्वाभ्यां च न तत्त्वम्पदार्थमात्रानुभवादेव कृतकृत्यता। वाच्यार्थाभेदावभासान्न पौनरुक्त्यम्। लक्ष्यस्य चैकत्वादखण्डार्थता। पदज-न्यस्य च स्मरणस्य निर्विकल्पकवाक्यार्थानुकूलस्य निर्विकल्पकत्वमनुभव-वदेवाविरुद्धम्। सविकल्पकवाक्यार्थावबोधे च सविकल्पकपदार्थोपस्थि-तिरङ्गं निर्विकल्पकवाक्यार्थावबोधे च निर्विकल्पकपदार्थोपस्थितिरङ्गम्। प्रकृते च निर्विकल्पकवाक्यार्थावबोधः, तस्यैव प्रमात्वेनाज्ञाननिवृत्तिसाम-र्थ्यादतो एव न लक्ष्यतावच्छेदकमन्तरेण लक्षणानुपपत्तिः प्रकृतवाक्यार्था-नुकूलपदार्थोपस्थितेरेव शक्तिलक्षणासाध्यत्वात्।**

(लघुव्याख्या.)

ननु निर्विकल्पकमहावाक्यार्थपक्षे महावाक्यस्यावान्तरवाक्यानुवादकत्वापत्तिस्तेनापि शुद्ध-स्यैव बोधजननादित्यत आह—पारोक्ष्येति। सत्याद्यवान्तरवाक्यैः सत्यादिपदवाच्योपस्थिति-द्वारा तत्पदलक्ष्यस्यावान्तरवाक्यार्थस्य बोधनेऽपि तत्रापरोक्ष—त्वंपदार्थाभेदानवगाहनात् परो-क्षताभ्रमस्य, एवमवान्तरवाक्यैस्त्वंपदार्थस्य बोधनेऽपि तत्र तत्पदार्थाभेदाप्रतीतेर्भिन्नत्वादिभ्रमस्य च सत्त्वात् तत्त्वंपदार्थमात्रानुभवादेव तत्त्वंपदार्थलक्ष्ययोरेवावान्तरवाक्यजानुभवादेव न कृतकृत्यता न समूलबन्धनिवृत्तिः, तयोरभेदाज्ञानात्। तथाच तयोरज्ञातमैक्यं बोधयन्महा-वाक्यमननुवादकमेवेति भावः। ननु तथापि सत्यादिपदानां सत्यत्वाद्युपलक्षितैकधर्मिबोधक-त्वात्पौनरुक्त्यं तत्राह—वाच्यार्थेति। वाच्यार्थानां सत्यत्वादिविशिष्टानामभेदावभासस्तादात्म्यज्ञानं तस्मान्न घटः कलश इतिवदर्थपुनरुक्तता नैकव्यक्तिबोधकत्वेनान्यतरवैयर्थ्यं, सत्यादिपदानामिति शेषः। वाच्यार्थान्वयानुपपत्तिप्रतिसंधाने सत्येव लक्षणया शुद्धबोधस्य सम्भवाल्लक्षणया तद्बो-धार्थमेव पदान्तरोपन्यास इति भावः। 'वाच्यार्थस्य[१] भेदावभासादिति पाठे तु, सत्यादिपदानां नैकधर्मिबोधकत्वरूपा पर्यायता लक्ष्यार्थस्यैकत्वेऽपि शक्यार्थस्य भेदाङ्गीकारात्। तथाच शक्त्यैकधर्मावच्छिन्नबोधकत्वमेव पर्यायत्वं नान्यदिति भावः। ननु तर्हि संसर्गागोचरधीजन-

१ 'र्थस्य भे' इति पाठः।

कत्वरूपाखण्डार्थत्वभङ्गप्रसङ्गः, संसर्गावगाहिबोधाङ्गीकारादत आह—लक्ष्यस्येति। लक्षणया पदबोध्यस्य एकत्वात् एकमात्रव्यक्तित्वात् अखण्डार्थता प्रतिपिपादयिषितपदार्थसंसर्गागोचरधीजनकता, वाक्यानामिति शेषः। ननु पदानां पदार्थतावच्छेदकपुरस्कारेणैव धीजनकत्वदर्शनात् कथं सत्यादिपदान्निर्विकल्पकस्मृतिराकाशादिपदात्त्वन्ततः सुवर्थैकत्वप्रकारिकां स्मृतिमिच्छन्ति तार्किकास्तत्राह—पदजन्येति। सत्यज्ञानादिपदजन्यस्मरणस्येत्यर्थः। निर्विकल्पकेति निर्विकल्पकवाक्यार्थबोधहेतोर्निर्विकल्पकत्वं निष्प्रकारत्वम्, अनुभववत् तत्त्वमस्यादिवाक्यजन्यानुभवस्येव अविरुद्धं प्रामाणिकं 'सोऽयं देवदत्तः, प्रकृष्टप्रकाशश्चन्द्र इत्यादावपि फलानुसारेण तथा कल्पनात्। तथाच शक्त्यैव सप्रकारकधीजनकत्वनियमो नतु लक्षणयापीति दिक्। तर्हि पदार्थोपस्थितिशाब्दबोधयोः कार्यकारणभावव्यवस्था कथं तत्राह—सविकल्पकेति। घटमानयेत्यादिवाक्यजन्यशाब्दबोधे त्वित्यर्थः। सविकल्पेति। घटत्वादिप्रकारकेत्यर्थः। अङ्गं हेतुः। निर्विकल्पकेति निष्प्रकारकशाब्दबोधे निष्प्रकारकपदार्थोपस्थितिः। सप्रकारस्थले सप्रकारकत्वेन निष्प्रकारस्थले च निष्प्रकारकत्वेनेति कार्यकारणभावद्वैविध्यकल्पनान्नाव्यवस्थेति भावः। एवंविधकल्पनासिद्धि (?) माह—प्रकृतेचेति। किमर्थं तत्राह—तस्यैवेति। निर्विकल्पकबोधस्यैवेत्यर्थः। प्रमात्वेन अबाधितविषयकत्वेन। लक्ष्यतावच्छेदकविशिष्टे एव लक्षणेति यो नियमः सोऽपि निर्धर्मितावच्छेदकबोधस्याङ्गीकारेण नास्तीत्याह—अत एवेति। निर्धर्मितावच्छेदकशाब्दबोधस्याङ्गीकारादेवेत्यर्थः। लक्ष्यतेति। शक्यसम्बन्धितावच्छेदकं विना। सप्रकारकवृत्तिज्ञानस्यान्यत्र साधनतया क्लृप्तस्य प्रकृते परित्यागे बीजं स्पष्टयति—प्रकृतेति। अभिमतवाक्यार्थधीप्रयोजकेत्यर्थः। शक्तीति। शक्तिलक्षणान्यतरज्ञानजन्यत्वात् सप्रकारकशाब्दबोधानुकूलसप्रकारकोपस्थित्यर्थमेव सर्वत्र सधर्मके लक्षणाऽङ्गीक्रियते न स्वभावतः। प्रकृते निर्विकल्पकबोधस्यैवाङ्गीकारात्तदुपस्थितये शुद्ध एव लक्षणोचिता। अतो वृत्तिज्ञानोपस्थित्योरपि सप्रकारकत्वेन, निष्प्रकारकत्वेन चेति द्विधा कार्यकारणभावः कल्पनीय इति भावः। शक्तीत्यनेन लक्ष्यतावच्छेदकं विना लक्षणेव शक्यतावच्छेदकं विना शक्तिरपि वक्तुं शक्येति ज्ञाप्यत इत्यन्यत्र विस्तरः।

( संदीपनम् )

ननु शुद्धात्ममात्रविषयकपदार्थज्ञानादेव मोक्षोऽस्तु तत्राह—पारोक्ष्येति। ननु तत्त्वंपदार्थयोः पौनरुक्त्यं यत्तद्वाच्यार्थयोर्लक्ष्यार्थयोर्वा ? तत्र नाद्य इत्याह—वाच्यार्थस्येति। द्वितीयोऽप्येवं क्रमेण वक्तव्यः। तथा हि—घटो घट इत्यादौ उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरुद्देश्यतावच्छेदकविधेययोर्वा ऐक्येन शाब्दबोधानुदयात् पदयोर्विरुद्धप्रकारकार्थोपस्थितेः कारणत्वं वक्तव्यम्, तथाच निःप्रकारकचैतन्यमात्रोपस्थापकयोस्तत्त्वंपदयोरागतं पौनरुक्त्यमिति सोऽपि न, निर्विकल्पकसाधारण—समानप्रकारकोपस्थित्यभावस्यैव कारणत्वकल्पनेन सर्वसामञ्जस्यात्। एतेन तत्त्वंपदलक्षणार्थयोर्न पौनरुक्त्यं, वाच्यार्थस्य भेदेनावभासमानत्वादित्युपालम्भः परास्तः। यदपि च वाक्यार्थे संसर्गाभावात्पदार्थबोधवाक्यार्थबोधयोरैकरूप्यमिति तदपि न रमणीयम्, भूतले न घटो घटाभाववद्भूतलमित्यत्र सप्तम्यर्थमत्वर्थसंबद्धभूतलघटाभावरूपविषयैक्येऽपि विष-

यिताभेदवत्पदार्थबोधापेक्षया वाक्यार्थबोधे जीवब्रह्मणोरभेदरूपस्य वैलक्षण्यस्य भानात्। सचाभेदः स्वरूपसंबन्धविशेषः प्रतीतिविशेषसाक्षिकः। परे त्वयं घट इति शाब्दबोधे घटस्यैव विशेष्यत्व-प्रकारत्वसांसर्गिकविषयत्ववदेकस्यैव चैतन्यस्य विशेष्यत्वप्रकारत्वाङ्गीकारेण सर्वसामञ्जस्यात्। विशेष्यत्वं प्रकारत्वं च स्वरूपमेव नातिरिक्तम्। न च विशेष्यत्वप्रकारत्वोक्तौ निर्विकल्पकत्व-हानिरिति वाच्यम्। पारिभाषिकनिर्विकल्पकहानावप्यखण्डार्थविषयकत्वाक्षतिरिति वदन्ति। वस्तु-तस्तु पदार्थवाक्यार्थयोरैकरूप्येऽपि न क्षतिरिति ममानुकूलमेव। उक्तं च सिद्धान्तभास्करादौ— वाक्यार्थबोधस्येव पदार्थबोधस्याप्यज्ञाननाशकत्वमित्युपरम्यते। तर्हि वाक्यार्थबोधस्य कथम-खण्डार्थविषयकत्वमत आह—लक्ष्यस्य चेति। ननु स्मरणस्य निर्विकल्पकत्वमदृष्टचरमत आह— पदजन्येति। प्रमात्वेनेति। निर्विकल्पकस्य प्रमात्वं विशेष्यावृत्त्यप्रकारत्वमबाधितार्थविष-यकत्वं वेत्यन्यदेतत्। नन्वेवमपि निर्विकल्पकवाक्यार्थबोधो न संगच्छते, लक्ष्यतावच्छेदकरूपेण लक्ष्यभाननियमादत आह—अत इति। यतो वाक्यार्थबोधो निर्विकल्पकः 'तमेव विदित्वाऽति-मृत्युमेतीति श्रुत्यादिसिद्धः, यतश्च निर्विकल्पकवाक्यार्थबोधे निर्विकल्पकपदार्थोपस्थितिरङ्गमतोऽत्र न लक्ष्यतावच्छेदकरूपेण लक्ष्यभानमित्यर्थः। ये तु लक्ष्यतावच्छेदकरूपेण लक्ष्यभानमङ्गीकुर्वन्ति तेऽप्यतिप्रसङ्गभङ्गाय नानाधर्मवद्धर्मिस्थल एव न तु निर्धर्मकस्थले तत्रातिप्रसङ्गाभावात्। लक्ष्यभे-देन लक्ष्यतावच्छेदकस्य नानात्वेनाननुगतत्वात्, लक्ष्यता(न?)वच्छेदकप्रकारेणोपस्थित्यभावस्यो-भयसाधारणतयाऽनुगतत्वाच्चेति दिक्।

**ननु तर्हि वेदान्तवाक्येभ्य एव पदार्थोपस्थितौ वाक्यार्थबोधे च सति तस्य स्वत एव प्रामाण्यात्तेनाज्ञानतत्कार्यनिवृत्त्युपपत्तौ किं विचारेणेतिचे-त्सत्यम्। वेदान्ता यद्यपि स्वतःप्रामाण्यान्निर्विकल्पकमात्मसाक्षात्कारं जन-यन्ति तथापि तस्य मन्दबुद्धीनां वादिविप्रतिपत्तिजसंशयप्रतिबन्धेनाज्ञान-नाशकत्वासामर्थ्याद्विचारेण तु संशयनिवृत्तौ निरपवादमज्ञानादिनिवृत्ति-रिति संशयबीजभूतवादिविप्रतिपत्तिनिराकरणार्थं विचार आरभ्यते।**

( लघुव्याख्या. )

विचारस्य सार्थकत्वं साधयिष्यन्नाशङ्कते—नन्विति। वेदान्तवाक्येभ्य एव उक्तमहावा-क्येभ्य एव पदार्थोपस्थितौ तत्त्वंपदार्थोपस्थितौ। वाक्येति पदार्थयोरैक्यरूपान्वयबोधे च सति। तस्य महावाक्यार्थबोधस्य। स्वत इति। स्वग्राहकसाक्षिभास्यप्रमात्वकत्वात्। स्वतस्त्वं च स्ववि-त्तिवेद्यत्वम्। वित्तिश्च साक्षिरूपा न प्रभाकरसंमता स्वात्मिका किंत्वविद्यावृत्तिरूपैव। अत-एव भट्टसंमता ज्ञाततालिङ्गकानुमितिरपि न। साक्षिणा च वृत्त्युत्पत्तिसमय एव तद्गताबाधित-विषयकत्वरूपं प्रामाण्यमपि गृह्यत इति न तत्रापि विचारशास्त्रापेक्षेत्यर्थः। तेन गृहीतप्रमात्व-केन बोधेन। अज्ञानेति। साध्यासाज्ञाननाशसंभवे किं विचारशास्त्रेण, श्रुतेर्निरपेक्षप्रमाणत्वेन बोधार्थं विचारशास्त्रापेक्षाऽयोगादिति भावः। भगवदनुगृहीतानां विचारशास्त्रमनतिप्रयोज-नकमपि मन्दधीषु सार्थकं भवत्येवेत्यभिप्रेत्यार्धाङ्गीकारवाक्यमाह—सत्यमिति। स्वतःप्रामा-ण्यात् स्वतःप्रामाण्यं प्राप्य निर्विकल्पकं संसर्गानवगाहि तस्य आत्मसाक्षात्कारस्य। वादीति वक्ष्यमाणाभ्यो वादिविप्रतिपत्तिभ्यो जातो योऽहंकर्तृभोक्तृरूपो न वेत्यादिसंशयस्तदात्मक-

प्रतिबन्धेन । संशयनिवृत्तौ विप्रतिपत्तिनिरासद्वारोक्तसंदेहनिवृत्तौ । निरपवादेति। निरपवादं प्रतिबन्धरहितं यथा स्यात्तथाऽज्ञाननिवृत्तिः । संशयेति । विषयप्रमागतोभयसन्देहेत्यर्थः ।

( संदीपनम् )

इदानीं विचारमाक्षिपति—नन्विति । तथाच शास्त्रं नारम्भणीयमिति भावः। अहं ब्रह्म भवामि न वेत्यादिविषयसंशयाहितप्रामाण्यसंदेहेनाप्रामाण्यशङ्कानास्कन्दितनिश्चयाभावाद्वाक्यार्थबोधस्य नाज्ञाननिवर्तकत्वमित्याह—सत्यमिति ।

**तत्र त्वम्पदार्थे विप्रतिपत्तयः प्रथमं प्रदर्श्यन्ते, तत्पदार्थस्य शास्त्रतात्पर्यविषयस्याभ्यर्हितत्वेऽपि त्वम्पदार्थस्य शास्त्रजन्यफलमोक्षभागितया ततोऽप्यभ्यर्हितत्वात् ।—**

( लघुव्याख्या. )

तत्र तत्त्वंपदार्थयोर्मध्ये त्वंपदार्थे ज्ञानाधिकारिणि विप्रतिपत्तयः विरुद्धाः प्रतिपत्तयः कोट्यतरोपस्थापकानि वादिनां वाक्यानीति यावत् । प्रथममिति स्वोक्ते बीजं स्पष्टयति—तत्पदार्थस्येति । जगत्कर्तृत्वाद्युपलक्षितस्य । शास्त्रेति । जीवे सद्वयत्वादिभ्रमनिवृत्त्यर्थं विधेयत्वेन शास्त्रप्रवृत्त्युद्देश्यप्रमितिविषयतयेत्यर्थः । अभ्यर्हितत्वेऽपि सूत्रकारादिभिर्ज्ञेयत्वाद्युक्त्या पूजितत्वेऽपि शास्त्रजन्येति परम्परया शास्त्रजन्यमोक्षरूपफलभागितयेत्यर्थः । त्वंपदार्थस्याधिकारिणः ततोऽपि तत्पदार्थादपि अभ्यर्हितत्वात् आदृतत्वात् । आचार्यैरिति शेषः । ज्ञेयापेक्षया ज्ञानाधिकारिणो मुख्यत्वात् अधिकारिणं विना विचारस्यैवानुत्थानादिति भावः ।

( संदीपनम् )

तत्र त्वंपदार्थ इति । आचार्यैर्यद्यप्याहत्य भूम्यादीनामात्मत्वनिषेध एव कृतो विप्रतिपत्तिर्न दर्शिता तथापि विना विप्रतिपत्तिं निराकरणेऽनुक्तोपालम्भः स्यात्तदर्थं निर्णयाक्षिप्ता विप्रतिपत्तिर्वक्तव्या सैव प्रदर्शितेत्यवधेयम् । ननु अभ्यर्हिततत्पदार्थस्यैव प्रथमतो विप्रतिपत्तिप्रदर्शनमुचितं न त्वंपदार्थस्य तत्राह—तत्पदार्थस्येति ॥

**तत्र—देहाद्याकारपरिणतानि चत्वारि भूतान्येव त्वम्पदार्थ इति चार्वाकाः। चक्षुरादीनि प्रत्येकमित्यपरे । मिलितानीत्यपरे । मन इत्यन्ये । प्राण इत्येके । क्षणिकं विज्ञानमिति सौगताः । शून्यमिति माध्यमिकाः । देहेन्द्रियातिरिक्तो देहपरिमाण इति दिगम्बराः। कर्ता भोक्ता जडो विभुरिति वैशेषिकतार्किकप्राभाकराः । जडबोधात्मक इति भाट्टाः । भोक्तैव केवलबोधात्मक इति सांख्याः पातञ्जलाश्च । अविद्यया कर्तृत्वादिभाक्, परमार्थतो निर्धर्मकः परमानन्दबोधरूप एवेत्यौपनिषदाः ।**

( लघुव्याख्या. )

तत्र तत्पदार्थत्वंपदार्थयोर्मध्ये देहाकारपरिणतानि देहाकारेण विकृतानि चत्वारि भूतानि पृथिव्यप्तेजोवाय्वाख्यानि भूतसंज्ञकानि, त्वंपदार्थः त्वंपदाभिधेयश्चेतनो जीव इत्यर्थः । गौरोऽहं जानामीत्यादिप्रतीत्या गौरस्यैव ज्ञानवत्त्वप्रतीतेरिति भावः । देहानामवस्थाभेदेन

भेदेप्यहम्प्रत्ययस्यानुवृत्तेर्नाहंप्रत्ययगोचरो देहः, किन्तु काणोऽहमित्यादिप्रतीतेर्यथासंभवमिन्द्रियमेवेति चार्वाकानुजमतमाह—चक्षुरादीनीति । विनिगमकाभावात् सर्वाण्येवात्मेत्यपरानुजमतमाह—मिलितानीति । इन्द्रियाणामभावेऽपि स्वप्नेऽहमिति प्रतीतेर्नेन्द्रियाण्यात्मा किंतु मन एवेत्यपरमतमाह—मन इति । मनसोऽभावेऽपि सुषुप्तौ स्वापानुभवान्न मन आत्मा किंतु प्राणवायवः श्वासादिहेतुभूता इत्यपरमतमाह—प्राण इति । ज्ञानं विना बाह्यपदार्थस्यासिद्धेर्न बाह्यपदार्थ आत्मा किन्त्वर्थक्रियाकारित्वरूपेण प्रतिक्षणविनाशि ज्ञानमेवात्मेति सौगतमतमाह—क्षणिकमिति । द्वितीयक्षणवृत्तिध्वंसप्रतियोग्यालयविज्ञानधारारूपमित्यर्थः । प्रमेयत्वेन दृग्दृश्ययोरपि मिथ्यात्वान्न सद्रूपं क्षणिकविज्ञानमात्मा किंतु मिथ्याभूतं क्षणिकं विज्ञानमिति सौगतराजमतमाह—शून्यमिति । मिथ्याभूतं क्षणिकविज्ञानमित्यर्थः । क्षणिकत्वे कर्तृभोक्तृव्यवस्थानुपपत्तेर्न क्षणिकं विज्ञानमात्मा किंतु देहेन्द्रियाद्यतिरिक्तो देहसमपरिमाणवान्, अन्यथा भोगव्यवस्थानुपपत्तेरिति जैनमतमाह—देहेन्द्रियेति । सावयवत्वेन विनाशित्वापत्त्या कृतहानाकृताभ्यागमप्रसङ्गान्न देहेन्द्रियाद्यतिरिक्तो देहपरिमाणवानात्मा किंतु निरवयवो नित्यो विभुर्ज्ञानवानिति तार्किकादिमतमाह—कर्तेत्यादि । कर्ता कृतिमान् भोक्ता सुखदुःखाद्यनुभविता जडः ज्ञानभिन्नः विभुः सर्वमूर्तसंयोगी । न केवलं जडो विभुरात्मा 'योऽयं विज्ञानमयः, इत्यादिश्रुतिविरोधात्, किंतु 'मामहं जानामीति दृश्यत्वद्रष्टृत्वयोरपि प्रतीतेरंशतो जडोंऽशतश्च बोध इति मीमांसावार्तिककारमतमाह—जड इत्यादि । जडबोधावात्मा स्वरूपं यस्येत्यंशतो जडबोधस्वरूप इत्यर्थः । अत्र सर्वास्तिकेषु वैशेषिकोऽधमः, शब्दप्रमाणरूपस्य वेदस्यानुमानविधया प्रामाण्याङ्गीकारात् । शब्दप्रामाण्यस्वीकर्तॄणां मध्ये तार्किकोऽधमः 'तत्त्वमस्यादिवाक्यस्य लक्षणया भावनापरत्वाङ्गीकारात् । प्राभाकरस्तु केवलोपनिषदां तन्मूलकेतिहासादीनां च स्वार्थे प्रामाण्यं नेति वक्ता सर्वास्तिकाधमोऽपि, ज्ञानस्य स्वतः प्रामाण्याङ्गीकारादभावस्याधिकरणात्मत्वाङ्गीकाराच्चान्तर्वेदार्थाङ्गीकारात्ततोऽधिकः । भाट्टस्तु जीवस्य बोधरूपताङ्गीकारात् प्रमाणषट्काङ्गीकाराच्च ततोऽप्यधिक इति विवेकः । 'निष्क्रियं निष्कलं शान्तमितिश्रुतेर्निरवयत्वेनांशतो जडबोधरूपत्वासंभवान्न जडबोधरूप आत्मा, किन्तु नित्यज्ञानस्वरूपो भोक्तैव न कर्ता, अपरिणामित्वादिति साङ्ख्यपातञ्जलयोर्मतमाह—भोक्तैवेति । चेतनत्वाद्भोक्तृरूप इत्यर्थः । एवकारात्कर्तृत्वव्यवच्छेदः । अयं भावः—अपरिणामिस्वभावतया कर्तृत्वायोगेऽपि भोक्तृत्वं युक्तम् । अचेतनस्य देहादेर्भोगायोगात् । अन्यथा मृतदेहादेरपि भोगाद्यापत्तेरिति केवलबोधात्मकः, जडत्वादिकल्पनारहितबोधस्वरूप इत्यर्थः । वस्तुतो न भोक्तात्मा 'असङ्गोह्ययमिति श्रुतिविरोधात्, किंतु प्रातिभासिककर्तृत्वभोक्तृत्ववानिति वेदान्तमतमाह—अविद्ययेति । निःसङ्गत्वेऽप्याविद्यकभोक्तृत्वमिव कर्तृत्वमपि युक्तमित्यभिप्रेत्याह—कर्तृत्वादीति । मिथ्याज्ञानवासनाप्रयुक्तं नैयायिकमतेऽप्यस्तीत्यत आह—परमार्थत इति । प्रतीतिकालेऽपि परमार्थत्वेन धर्माभाववानित्यर्थः । सांख्यादिविशेषान्तरमाह—परमानन्दबोधस्वरूप इति । नित्यानन्दबोधस्वरूप इत्यर्थः ।

( संदीपनम् )

अपर इति । त्वंपदार्थ इत्यनेनान्वयः । एवमुत्तरत्र । जड इति । स्वप्रकाशभिन्न इत्यर्थः । जडबोधात्मक इति । मामहं न जानामीति प्रतीतेः कर्मकर्तृविरोधाज्जडबोधात्मकमात्मानमङ्गीकुर्वन्ति भाट्टा इत्यर्थः ।

**एवं सामान्यतोऽहम्प्रत्ययसिद्धे चिदात्मनि वादिविप्रतिपत्तिभिः संदिग्धेऽहम्प्रत्ययस्यालम्बनविशेषनिर्णयायाह भगवानाचार्यः—**

( लघुव्याख्या. )

एवं दर्शितप्रकारेण सामान्यतः जीवत्वात्मत्वादिना । वादिविप्रतिपत्तिभिः विरुद्धकोट्युपस्थापकनिरुक्तवादिशब्दैः संदिग्धेऽहंकर्तृभोक्तृस्वरूपो न वेति विशेषतः संदिग्धे अहंप्रत्ययस्येति । अहंधियोऽकर्तृभोक्तृस्वरूपविषयविशेषनिर्णयायेत्यर्थः ।

( संदीपनम् )

इदानीं व्याख्येयग्रन्थस्यावतारिकामाह—एवमिति ।

**न भूमिर्न तोयं न तेजो न वायु-**
**र्न खं नेन्द्रियं वा न तेषां समूहः ।**
**अनैकान्तिकत्वात् सुषुप्तैकसिद्ध-**
**स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥**

**अस्यार्थः । अहं अहम्प्रत्ययालम्बनं, एकः अद्वितीयः; अवशिष्टः सर्वद्वैतबाधेऽप्यबाधितः, शिवः परमानन्दबोधरूपः, तस्यैव मङ्गलरूपत्वात्; केवलो निर्धर्मकः; तेनाद्वितीयः सर्वप्रमाणाबाध्यः परमानन्दबोध एवाहम्प्रत्ययालम्बनमित्यौपनिषदः पक्ष एव श्रेयानित्यर्थः ।**

( लघुव्याख्या. )

अहंप्रत्ययालम्बनं अहंप्रत्ययविषयः अद्वितीयः द्वित्वादिसंख्यापूरकमायातत्कार्यरूपद्वितीयरहितः सर्वद्वैतबाधेऽपि आत्मतत्त्वधिया सर्वद्वैतस्य मूलोच्छेदेऽपि स्वयं सत्यः, बाधसाक्षितयापि तत्सत्त्वावश्यकत्वादिति भावः । परमानन्दबोधः । शिवशब्दस्य परमानन्दार्थता कथं तत्राह—तस्यैवेति । परमात्मन एवेत्यर्थः । मङ्गलरूपत्वात् कल्याणरूपत्वात् 'प्रेयोऽन्यस्मात्सर्वस्मादित्यादिश्रुतिभिरिष्टतमत्वावगमेन कल्याणरूपत्वौचित्यादिति भावः । निर्धर्मकः निर्गतं धर्मसामान्यं यस्मादिति धर्मसामान्याभाववानित्यर्थः '

आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ।
प्रवृद्ध्युपचयौ नास्य एकस्य किल जन्तुषु ॥

इत्यादिस्मृतेरिति भावः । उक्तिफलमाह—तेनेत्यादि । तेन निरुक्तार्थसमर्पणेन व्याख्यातप्रायम् ।

( संदीपनम् )

कारिकास्थाहंपदस्य व्याख्यानमाह—अहंप्रत्ययालम्बनमिति । अहंप्रत्ययविषय इत्यर्थः । पदार्थं व्याख्याय वाक्यार्थमाह—तेनेति ।

**एतदुपपादनायेतरवादिमतानि निराकरिष्यन् प्रथमं देहात्मवादं निराकरोति–' न भूमिर्न तोयं न तेजो न वायुर्न खमिति। अत्राहमिति सर्वत्र प्रत्येकं नञा संबध्यते, या भूमिः साहं न भवामि योऽहं स भूमिर्न भवतीति वा परस्परतादात्म्याभावो द्रष्टव्यः । यद्यपि वादिना प्रत्येकं भूम्यादेरात्मत्वं नाभ्युपेयते संघातस्यैव तदभ्युपगमात्, तथापि तन्मतेऽवयव्यनङ्गीकारात्पञ्चमतत्त्वाभ्युपगमप्रसङ्गेन च संयोगादिसंबन्धानभ्युपगमात्संहन्त्रभावाच्च संघातो नोपपद्यत इत्यभिप्रेत्य प्रत्येकभूतनिराकरणेन भौतिकदेहात्मवादो निराकृतः ।**

( लघुव्याख्या. )

या भूमिरित्यादिनोक्तस्य द्विविधोद्देश्यविधेयभावस्य फलमाह—परस्परेति । प्रत्येकोद्देश्यविधेयभावं पूर्वपक्षसिद्धान्ताभ्यां सफलयति—यद्यपीति । संघातस्यैव देहाकारेण मिलितभूतचतुष्टयस्यैव तदभ्युपगमात् आत्मत्वाभ्युपगमात् । तथापीति । संघातो नोपपद्यत इत्यत्रान्वयः । तत्र संघातोऽवयवी, भूतचतुष्टयमेलनं वा, स्वरूपसंबन्धेनैकतयाऽवस्थितिर्वेति पक्षत्रयं न संभवतीत्यत्र क्रमेण हेतुमाह—अवयव्यनङ्गीकारादिति । द्विगुणगुरुत्वापत्तिभियातिरिक्तावयव्यनङ्गीकारादित्यर्थः । द्वितीये बाधकमाह––पञ्चमेति । 'प्रमाणमेकं प्रत्यक्षं तत्त्वं भूतचतुष्टयमिति वदतश्चार्वाकस्य मते देहादिव्यवहाराय चतुर्विधपरमाणूनां संयोगरूपमेलनाङ्गीकारे संयोगरूपपञ्चमतत्त्वस्वीकारापत्त्येत्यर्थः । संयोगादीत्यादिना समवायपरिग्रहः । पक्षत्रये बाधकमाह—संहन्त्रभावाच्चेति । संघातकर्तुरभावाच्चेत्यर्थः । चेतनादृष्टादिकं विना पुञ्जकादावेकत्ववैचित्र्याद्यनुपपत्तेरिति भावः । प्रत्येकेति । प्रत्येकं भूतानामात्मत्वनिराकरणेन भौतिकेऽति भौतिकदेहस्यात्मत्ववादः ।

( संदीपनम् )

देहात्मवादस्यातितुच्छत्वादादौ तं निराकरोति—प्रथममिति । परस्परेति । उभयत्रैव एकतादात्म्याभावः शाब्दोऽपरतादात्म्याभाव आर्थ इत्यवधेयम् । भवतु सङ्घात एवात्मा तत्राह—तत्रापीति । सङ्घातोऽवयवी संयुक्तद्रव्यं वा, नाद्य इत्याह—वयवीति । नान्त्य इत्याह—संयोगादीति । तत्रैव हेतुः पञ्चमेति । संहन्तुः सङ्घातकर्तुः ॥

**यद्यपि भूतचतुष्टयवादिनो मते आवरणाभावत्वेनाभिमतस्य स्थिरस्यासत आकाशस्य देहानुपादानत्वं तथापि सिद्धान्ते तस्य भावत्वदेहोपादानत्वाद्यङ्गीकारात्तत्राप्यात्मत्वप्रसक्त्या तन्निराकृतम् ।**

( लघुव्याख्या. )

न खमित्युक्तमुपपादयितुमाह—यद्यपीति । आवरणाभावत्वेनेति । पक्ष्यादिगतिप्रतिबन्धकाभावत्वेनाभिमतस्येत्यर्थः । फलितमाह—स्थिरस्येत्यादि । स्थिरस्य बहुकालस्थायिनः अतएवासतः

विलम्बसहिष्णुत्वेनार्थक्रियाकारिताशून्यस्य आकाशस्याकाशपदवाच्यस्य सिद्धान्ते वेदान्तसिद्धान्ते तस्याकाशस्य भावत्वेति शब्दादिगुणाश्रयत्वेन भावत्वस्यावकाशप्रदत्वेनोपादानत्वस्य निमित्तत्वस्य चाङ्गीकारादित्यर्थः। तत्रापि आकाशेऽपि आत्मत्वप्रसक्त्या भूम्यादेरिवात्मत्वप्रसक्त्या तन्निराकृतम्।

( संदीपनम् )

देहानुपादानत्वे हेतुमाह—असत इति। असत्वे हेतुमाह—स्थिरस्येति॥

**अथवा 'न वायुरित्यन्तमेव देहात्मवादस्य निराकरणम्। 'न खमिति तु शून्यवादस्य, खशब्दस्य शून्यवाचकत्वात्।**

( लघुव्याख्या. )

स्वसिद्धान्तानुसारेणात्मत्वमापाद्य तन्मतनिराकरणमयुक्तमित्यभिप्रेत्यार्थान्तरमाह—अथवेति। शून्यवादस्य क्षणिकज्ञानस्वरूप आत्मा मिथ्येति वादस्य। शून्यवाचकत्वात् खपदस्य पदार्थरहितछिद्रबोधकत्वेन प्रकृते सत्यत्वादिधर्मशून्यमिथ्याज्ञानबोधकत्वात्। तथाच खं नात्मेत्यस्य सत्यत्वादिधर्मशून्यं मिथ्या ज्ञानं नात्मेत्यर्थः।

( संदीपनम् )

स्वसिद्धान्तसिद्धत्वेऽपि तन्मतसिद्ध्यभावात्तन्निराकरणमनुचितमित्यत आह—अथवेति। शून्यवादस्येति निराकरणमित्यनेनान्वयः।

**'नेन्द्रियमिति प्रत्येकमिन्द्रियाणामात्मत्वनिरासः। 'न तेषां समूह इति मिलितानां भूतानां देहावयव्याकारेण परिणतानामिन्द्रियाणां च मिलितानां निरासः। पूर्वं संघातमनभ्युपगम्य प्रत्येकं भूतानि निराकृतानि, अधुना तु संघातमभ्युपगम्यापि निराकृतानीति भेदः। भूतनिराकरणेन भौतिकयोः प्राणमनसोर्निरासः। मनोनिरासेन च मनोवृत्तेः क्षणिकविज्ञानस्य देहातिरिक्तस्य कर्तृत्वभोक्तृत्वादिविशिष्टस्य निरासः। सिद्धान्ते च ज्ञानेच्छासुखदुःखादीनामन्तःकरणाश्रयत्वाभ्युपगमात्, कामादीन् प्रकृत्य 'एतत्सर्वं मन एवेति श्रुतेः। तेन देहमारभ्य केवलभोक्तृपर्यन्तानां तत्तद्वाद्यभ्युपगतानामनात्मत्वं प्रतिज्ञातं भवति।**

( लघुव्याख्या. )

प्रत्येकमिति। नेन्द्रियमित्यत्रेन्द्रियपदस्येन्द्रियत्वेनेन्द्रियसामान्यबोधकत्वात् प्रत्येकं सर्वेन्द्रियाणामात्मत्वनिरास इति भावः। मिलितानां संयुक्तानां देहेति अतिरिक्तपुञ्जात्मकदेहावयविरूपेण विकृतानामित्यर्थः। संघातं, संयोगेन तेषां पुञ्जं अनभ्युपगम्य अस्वीकृत्य अभ्युपगम्यापि स्वीकृत्यापि भूतनिराकरणेन प्रत्येकस्य पुञ्जरूपविकारिणो वा पृथिव्यादिचतुर्विधपरमाणुरूपस्य भूतस्यात्मत्वनिराकरणेन, भौतिकयोः 'अन्नमयं हि सौम्य मन आपोमयः प्राण इति श्रुत्या भूतकार्यत्वेनाङ्गीकृतयोः प्राणमनसोः क्रियाशक्तिज्ञानशक्तिप्रधानयोरपीति शेषः। मनोनिराकरणेन मनोवृत्तेर्वस्तुगत्या मनःपरिणामरूपस्य क्षणिकविज्ञानस्य द्वितीयक्षणवृत्ति-

ध्वंसप्रतियोगिनो देहातिरिक्तस्य स्थूलदेहाद्भिन्नस्य, कर्तृत्वभोक्तृत्वविशिष्टस्य कृतिभुजिज्ञाने-च्छाप्रयत्नादिमत्त्वरूपकर्तृत्वसुखदुःखाद्याश्रयत्वरूपभोक्तृत्वाभ्यां विशिष्टस्य तार्किकमतसिद्ध-स्यात्मनो निरासः आत्मत्वनिरासः, तादृशस्य वस्तुगत्या भौतिकलिङ्गशरीरात्मकत्वादिति भावः। ननु क्षणिकविज्ञानवादिना मनस एवानङ्गीकारात्तार्किकेण चाभौतिकस्यैव मनोभिन्नस्यात्मत्व-स्वीकारात् कथं मनोनिराकरणेन क्षणिकविज्ञानस्य तार्किकाभिमतस्य चात्मत्वनिरास इत्याशङ्क्य मनःपरिणामरूपवृत्तिभिन्नस्य ज्ञानत्वमेवासिद्धमौपनिषदसिद्धान्तविरोधात्, अतः क्षणिकज्ञाना-देर्निरास इत्यभिप्रेत्याह—सिद्धान्ते चेति। औपनिषदसिद्धान्ते इत्यर्थः। अन्तःकरणाश्रयत्वाभ्यु-पगमात् अन्तःकरणाश्रितत्वाभ्युपगमात्। अभ्युपगमे श्रुतिमाह—कामेति। 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति संग्राहकश्रुतेरित्यर्थः। तेनेति। भूतनिराकरणेनेत्याद्युक्तव्याख्यानेनेत्यर्थः। देहमारभ्येति। न कर्तेत्यन्तानां वास्तवभोक्तृत्व-विशिष्टस्य लिङ्गेऽन्तर्भावात् परिणामरूपयोः सुखदुःखयोस्तत्रैवान्तर्भावादिति भावः।

(संदीपनम्)

पौनरुक्त्यमाशङ्क्याह—**मिलितानामितीत्यादि**। परिणतानामित्यस्य पूर्वेणान्वयः। पौन-रुक्त्यमाशङ्क्याह—**पूर्वमिति**। ननु पूर्वपक्षे आशङ्कितं **प्राणमनसो**रात्मत्वं किमिति न निराकृतं तत्राह—**भूतनिराकरणेनेति**। एवमप्याशङ्कितं **सौगतमतं** किमिति न निराकृतमत आह—**मनोनिराकरणेन चेति**। **क्षणिकविज्ञानस्येति**। वक्ष्यमाणनिरास इत्यनेनान्वयः। **वैशेषिकमतं** निराकरोति—**देहातिरिक्तस्येति**। कर्तृत्वादिविशिष्टं तु मन एवेत्याशयः। तर्हि प्रत्यक्षसि-द्धानामहं करोमीति प्रत्ययानां का गतिरत आह—**सिद्धान्त इति**। कर्तृत्वादीनां मनोधर्मत्वे प्रमाणमाह—**काम इति**। 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्ये-तत्सर्वं मन एवेति बृहदारण्यकश्रुतेः। एतेषां मनोधर्मत्वमेवकारेण चात्मधर्मत्वं निराकृतं, मन एवेत्यनेन कार्यकारणयोरभेदोऽपि ध्वनित इत्यवधेयम्। एतमर्थं **भागवतस्मृति**रप्यनुवदति, हर्ष-शोकभयक्रोधलोभमोहस्पृहादयः। अहङ्कारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः। इति। एवं **मोक्ष-**काण्डकल्पतरुधृतब्रह्मपुराणवचनमप्यचेतनस्यैव कर्तृत्वादिकं बोधयति न चेतनस्येति। तथाहि—कुर्वन्त्यचेतनाः कर्म देहेन्द्रियगणाः सदा। चेतनस्तदधिष्ठाता शान्तात्मा न करोत्यसौ इति। तथाचाहं करोमीति प्रत्ययस्याहङ्कार एव विषयो नात्मा। एवं श्रुतिस्मृतिविरोधमङ्गीकृत्यापि 'अहं करोमीति प्रत्ययबलादात्मनः कर्तृत्वादिकमङ्गीकुरुषे चेत्तर्ह्यहं गौरः, अहं स्थूलः, अहं गच्छामीत्यादिप्रतीतिबलाद्देहात्मवादोऽप्यास्थेय इत्यलं मृतमारणेनेति दिक्। कर्तुर्भोक्तुर्निराकर-णेन **भाट्टसांख्यपातञ्जलमत**मपि निराकृतं वेदितव्यम्। शून्यवादस्य न खमित्यनेन निरा-करणमिति। मध्यमपरिमाणस्य विनाशित्वेन घटादिवदात्मभिन्नत्वमिति दिगम्बरमतमुपेक्षितम्॥

**तत्र हेतुमाह—'अनैकान्तिकत्वादिति। व्यभिचारित्वाद्विनाशित्वादितियावत्।**

(लघुव्याख्या.)

तत्र देहादेरनात्मत्वप्रतिज्ञायां, व्यभिचारित्वात् सर्वत्र सदाऽविद्यमानत्वात् सर्वत्र सदेत्यंशस्यानतिप्रयोजनकत्वादाह—विनाशित्वादिति। विविधो देशकालवस्तुगतो नाशोऽद-र्शनं यतः स विनाशः, संसर्गान्योन्याभावयोरन्यतरस्तत्प्रतियोगित्वादित्यर्थः।

आत्मनो देशकालापरिच्छिन्नत्वात्तत्परिच्छिन्नानां घटादिवदनात्मत्वात्तद्ध्वंसप्रागभावयोश्च ग्रहीतुमशक्यत्वात्, अनात्मनां जडत्वात्, स्वभिन्नस्य चात्मत्वाभावादात्मन एकत्वेऽपि सुखदुःखाद्याश्रयाणामन्तःकरणानां भेदाभ्युपगमाद्व्यवस्थोपपत्तेः, स्वेनैव स्वाभावग्रहणे विरोधात् ग्राह्यकाले ग्राहकासंभवात् ग्राहकसत्त्वे ग्राह्याभावात्, कृतहान्यकृताभ्यागमप्रसंगाच्च न तस्य ध्वंसप्रागभावौ। सद्रूपस्यात्मनः सर्वत्रानुगमाच्च नात्यन्ताभावसंभवः। द्वैतस्य मिथ्यात्वेन शुक्तिरजतादिवदध्यस्तस्याधिष्ठानभूतसत्तादात्म्यापन्नतयैव सिद्धत्वात्तत्तादात्म्याभावानुपपत्तिः। तेनात्मा नाभावप्रतियोगी, अभावप्रतियोगिनश्च देहेन्द्रियादयस्तेनामी नात्मानः, किंतु स्वप्रकाशे बोधरूप आत्मन्यद्वैतेऽप्यनाद्यनिर्वचनीयाविद्याकल्पिता अनिर्वचनीया एवेति सिद्धान्तरहस्यम्।

(लघुव्याख्या.)

विनाशित्वहेतोरनात्मत्वसाधकतां तर्कप्रदर्शनेन द्रढयति—आत्मन इति। अनात्मनामधिष्ठानस्येत्यर्थः। देशकालापरिच्छिन्नत्वात् देशकालवृत्त्यत्यन्ताभावाप्रतियोगित्वात्। ज्ञानज्ञाप्यत्वं पञ्चम्यर्थोऽनात्मत्वेऽन्वेति। तत्परिच्छिन्नानां देशकालवृत्त्यत्यन्ताभावप्रतियोगिनां घटादिवदनात्मत्वात् आत्मभिन्नत्वात्। अत्रापि ज्ञानज्ञाप्यत्वं पञ्चम्यर्थः। अयं च विनाशित्वहेतुकानात्मत्वे हेतुः। तथाच परिच्छिन्नत्वाभावस्यात्मत्वव्यापकत्वात्तादृशाभावप्रतियोगिनः परिच्छिन्नत्वस्यात्मभिन्नत्वं प्रति व्याप्यताग्राहको यदि परिच्छिन्नत्वमनात्मत्वव्याप्यं न स्यात्तदा तादृशाभावप्रतियोगि न स्यादिति तर्कलाभ इति भावः। आत्मनोऽपरिच्छिन्नत्वमेव कथं लब्धं तत्राह—तद्ध्वंसेति। आत्मध्वंसप्रागभावयोः। अशक्यत्वे हेतुमाह—अनात्मनामिति। अविद्यातत्कार्याणामित्यर्थः। जडत्वात् ज्ञानव्यक्तिभिन्नत्वात्। ननु मास्त्वनात्मनो ग्राहकत्वमात्मान्तरस्य तु स्यादेव तत्राह—स्वभिन्नस्येति। यदात्मव्यक्तेर्ध्वंसप्रागभावौ ग्राह्यौ तद्भिन्नस्यात्मत्वाभावात्। आत्मन एकत्वादिति भावः। ननु तर्हि प्रत्यात्मनि नियतसुखदुःखादिव्यवस्था न स्यात्तत्राह—आत्मन एकत्वेऽपि वस्तुत एकत्वेऽपीत्यर्थः। व्यवस्थोपपत्तेः चैत्रशरीरे स्रक्चन्दनादिसंयोगे चैत्र एव सुखी न मैत्र इत्यादिव्यवस्थाया उपपत्तेरित्यर्थः। य आत्मा स न सुखदुःखाद्याश्रयः, भासकरूपत्वात्। यस्तु सुखाद्याश्रयः स तु भिन्न एव परिणामित्वादिति न काचिदनुपपत्तिरिति भावः। मास्तु स्वभिन्नो ग्राहकः स्वयं तु स्यात्तत्राह—स्वेनेति। स्वेनैव तद्व्यक्त्यैव स्वाभावग्रहणे स्वस्यात्मनोऽभावग्रहणे विषयीकरणे विरोधात् भिन्नकालीनत्वेन विषयिविषयभावासंभवरूपविरोधात्। एतदेव दर्शयति—ग्राह्येति। ग्राह्यकाले ध्वंसप्रागभावकाले ग्राहकाभावात् ग्राहकस्यात्मनोऽभावात्। ग्राहकसत्त्वे ग्राहकस्यात्मनः सत्त्वे ग्राह्याभावात् ध्वंसप्रागभावाभावात्। तथा च ग्राह्यग्राहकयोरसमानकालीनत्वान्न विषयविषयिभावः संभवतीति भावः। नन्वतीतानागतघटादिनेव विभिन्नकालीनस्वाभावेनापि सह विषयविषयिभाव आत्मनोऽस्तु तत्राह—कृतहानीति। कृतस्य यागादिजन्यापूर्वस्य हानिः नाशः।

आत्मनो नाशे तद्गुणस्य धर्मादेर्नाशावश्यंभावात् । तथाऽकृतस्यासंचितस्यापूर्वस्य अभ्यागमः कालान्तरे भोगाय स्वीकारस्तयोः प्रसङ्गादित्यर्थः । इत्थं च विहितगोचरा प्रवृत्तिर्बाध्येतेति भावः । परलोकवार्तामङ्गीकृत्येदम् । अत्यन्ताभावाप्रतियोगित्वं साधयति—सद्रूपस्येति । सत्स्वरूपस्य नित्यस्येति यावत् । आत्मनः अनात्मनामधिष्ठानभूतस्य सर्वत्र दृश्यमात्रेऽनुगमात् सन् घटः, सन् पट, इत्यादिधिया सत्त्वसंबन्धविषयीकरणात् नात्यन्ताभावसंभवः न सद्व्यक्तिस्वरूपात्यन्ताभावः । सत्त्ववति न सत्त्वात्मकसदत्यन्ताभावः कालत्रयेऽपि वक्तुं शक्यत इति भावः । अन्योऽन्याभावाप्रतियोगित्वं साधयति—द्वैतस्येति । अविद्यातत्कार्यस्येत्यर्थः । मिथ्यात्वेन अधिष्ठानज्ञाननाश्यत्वेन शुक्तिरजतादिवत् शुक्तिरजतादेरिव अध्यस्तस्य अधिष्ठानाज्ञानकृतभ्रमविषयस्य, घटः सन्नित्यादिप्रतीत्या सद्व्यक्तितादात्म्यविशिष्टतयैव प्रमितत्वात् तत्तादात्म्याभावानुपपत्तिः । तादात्म्येनाभावो भेदस्तस्यानुपपत्तिः वस्तुतोऽसंभव इति यावत् । तथा च वस्तुतः शुक्तिरजतादेरसत्त्वेऽपि नेदं रजतमिति भेदप्रतीतिवत् प्रपञ्चभेदप्रतीतिरपि काल्पनिकप्रपञ्चप्रतियोगिककाल्पनिकभेदपरतया नेयेति भावः । उक्तार्थमुपसंहरति—तेनेति । आत्मनोऽभावाऽप्रतियोगित्वग्राहकमानसत्त्वेनेत्यर्थः । नाभावप्रतियोगी नाभावसामान्यप्रतियोगी । तावता किं तत्राह—अभावेति । तेनेति । अभावसामान्यप्रतियोगित्वेन अमी देहेन्द्रियादयः नात्मानः आत्मस्वरूपाभाववन्तः । यदि नात्मस्वरूपास्तर्हि व्यवहारक्षमास्ते कीदृग्विधा इत्याशङ्क्य तेषां स्वरूपमाह—किंत्विति । स्वप्रकाशरूपे अनिर्वचनीया एवेति योजना । सदसद्भिन्नरूपाऽनिर्वाच्यत्वे हेतुमाह—अविद्याकल्पिता इति । ननु स्वप्रकाशे अज्ञानसम्बन्ध एव कथं तत्राह—अनाद्यनिर्वचनीयेति । अनिर्वचनीयत्वाद्विभिन्नसत्ताकाऽविद्यासम्बन्धो घटत एव । लोकेऽपि समसत्ताकप्रकाशाप्रकाशयोरेव विरोधदर्शनादिति भावः ।

## ( संदीपनम् )

आत्मनि हेत्वभावमाह—आत्मन इति । तर्कमाह—तत्परिच्छिन्नानामिति । देशकालपरिच्छिन्नानामित्यर्थः । ग्राहकाभावादपि तस्य ध्वंसप्रागभावौ नाङ्गीकरणीयावित्याह—तद्ध्वंसेति । आत्मध्वंसेत्यर्थः । नन्वनात्मा ग्राहकोऽस्तु तत्राह—अनात्मनामिति । जडत्वात् ज्ञानभिन्नत्वात् । एकात्मवादिमते कथमहं सुखी अहं दुःखीत्यादिप्रत्यया इत्यत आह—आत्मन इति । नन्वात्मैव स्वाभावं गृह्णातु तत्राह—स्वेनैवेति ॥ विरोधं विवृणोति—ग्राह्यकाल इति । आत्मनो विनाशित्वे प्रतिकूलतर्कौ प्रदर्शयन्नुपसंहरति—कृतहानेति । आत्मनो नाशाङ्गीकारे अदत्तफलस्य सर्वस्य कर्मणो नाशः, पुनरकस्मादुत्पत्त्यङ्गीकारे तदव्यवहितोत्तरक्षणेऽनुभूयमानयोः सुखदुःखयोरनुपपत्त्यानेनात्मनाऽकृतस्य कर्मणः संबन्धोऽस्य वक्तव्यः । तथा चेदं द्वयमनिष्टमित्यर्थः । नास्तिकस्यापि तप्तशिलारोहणादिकर्मणां कृतानामावश्यकफलदातृत्वं तेनाकृतानां चादातृत्वमिति नियम इति तन्मतेऽपि दोष इति बोध्यम् । ननु मास्तु कालपरिच्छेदः, देशपरिच्छेदस्तु केन वारणीय इत्यत आह—सद्रूपस्येति । सद्रूपस्यात्मनः सर्वत्र संबन्धसत्त्वेनात्र घटो नास्तीति प्रत्ययवत् सन्नास्तीति प्रत्ययाभावादिति भावः । नन्वेवमप्यन्योन्याभावानिरासात् तत्प्रतियोगित्वेनैव परिच्छिन्नत्वात् विनाशित्वमित्यत आह—द्वैतस्येति । फलित-

माह—तेनात्मा नाभावप्रतियोगीति। अनात्मनामभावप्रतियोगित्वेन किं साधनीयं तत्राह—अभावप्रतियोगिनश्चामीत्यादिसिद्धान्तरहस्यमित्यन्तेन।

**ननु बोधरूप आत्मेति तवाभ्युपगमात्सुषुप्तौ च बोधाभावाद्गाढंमूढोऽहमासं न किंचिदवेदिषमिति सुप्तोत्थितस्य परामर्शात्कथमव्यभिचारिता तस्येत्याशङ्क्याह—'सुषुप्त्यैकसिद्ध इति। अयमर्थः—आत्मनः सुषुप्तिसाक्षित्वान्न तत्र तदभावः। अन्यथा मूढोऽहमासमिति परामर्शानुपपत्तेः। मातृमानमितिमेयानां व्यभिचारित्वेऽपि तद्भावाभावसाक्षिणः कालत्रयेऽप्यव्यभिचारात्।**

( लघुव्याख्या. )

आत्मनो बोधरूपत्वमिति पक्षेऽव्यभिचारित्वं प्रतिक्षिपति—नन्विति। सुप्तोत्थितस्य स्वापानन्तरमुत्थितस्य जाग्रतः पुरुषस्य मूढोऽहमासमिति प्रत्ययस्याज्ञानपरतानिरासायाह—न किंचिदवेदिषमिति। न किंचिज्ज्ञातवानित्यर्थः। धात्वर्थज्ञानस्य नञर्थेऽभावेऽन्वयाज्ज्ञानाभाव एव प्रतीतेर्विषय उचित इति भावः। परामर्शात् अनुमितेर्जन्यज्ञानसामग्र्यभावादिरूपहेतोरिति शेषः। अव्यभिचारिता अविनाशिता। अयमर्थ इति। सुषुप्तेन स्वापात्मकेन एकेन मुख्येन असाधारणप्रमाणभूतेन सिद्धो निश्चित इति मूलार्थः। सुषुप्तीति। सुषुप्तिविषयकानुभवरूपत्वादित्यर्थः। तत्र सुषुप्तौ तदभावः ज्ञानसामान्याभावः यत्किंचिद्व्यक्तेः सामान्याभावविघटकत्वात्। तथा च निरुक्तानुमाने बाध इति भावः। तत्र ज्ञाने प्रमाणमाह—अन्यथेति। सुषुप्तावनुभवानङ्गीकारे इत्यर्थः। परामर्शानुपपत्तेः स्मरणानुपपत्तेः। स्मृतिं प्रत्यनुभवस्य हेतुत्वात्तदानीमनुभवं विनोत्थितस्य स्मृत्यसंभवादिति यावत्। तदानीं क्लृप्तप्रमाणादिसामग्र्यभावात्कथमनुभवस्तत्राह—मातृमानेति। ज्ञानाश्रय–ज्ञानकरणवृत्ति–ज्ञेयव्यक्तीनां व्यभिचारित्वेऽपि तदा विद्यमानाभावप्रतियोगित्वेऽपि तद्भावाभावसाक्षिणः ज्ञात्रादिरूपभावतदभावभासकस्य कालत्रये जागराद्यवस्थात्रयेऽव्यभिचारात् अविनाशात्। लाघवात्सर्वावभासकतयाङ्गीकृतस्य साक्षिणस्तदानीं सत्त्वान्न सामग्र्यभावेऽपि काचिदनुपपत्तिरिति भावः।

( संदीपनम् )

तर्कमाह—अन्यथेति।

ननु प्रमाश्रयः प्रमाता स एव कर्ता, भोक्ता, प्रदीपवत्स्वपरसाधारणसर्वभासकश्चेति न घटादिवत्साक्षिसापेक्ष इतिचेन्न; विकारित्वेन स्वविकारसाक्षित्वानुपपत्तेः, दृश्यस्य द्रष्टृत्वाभावात्, प्रमातुश्च परिणामित्वेन दृश्यत्वात्, एकस्य कूटस्थस्यैव सर्वसाक्षित्वात्। एकः कूटस्थो निर्धर्मकः साक्षी नाद्रियतेऽप्रामाणिकत्वादितिचेत् न, 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति, 'न दृष्टेर्द्रष्टारं पश्येः, 'अदृष्टो द्रष्टा, 'नान्योऽतोऽस्ति द्रष्टा, इत्यादिवदता वेदान्तप्रमाणराजेन तस्यैव सर्वसाक्षित्वेनाभिषिक्तत्वात्।

( लघुव्याख्या. )

प्रमातृभिन्नं सर्वसाक्षिणं तार्किकप्रभाकरौ प्रतिक्षिपतः—नन्विति । प्रमाश्रयः प्रमाणजन्यज्ञानाश्रयः, ज्ञानवत एव कर्तृत्वसंभवादाह—स एव चेति । कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्यमुचितमित्यभिप्रेत्याह—कर्ता भोक्तेति । स्वपरेति । स्वस्य आश्रयस्य परस्य ज्ञानघटादेश्च वृत्तिद्वारा व्यवहारजनक इत्यर्थः । न साक्षिसापेक्षः न स्वभिन्नानुगतभासकव्यक्त्यन्तरसापेक्षः । भासकत्वेनान्यव्यक्तिसापेक्षत्वाभावे दीपो दृष्टान्तः, व्यतिरेके घट इति विवेकः । तथाच न सुषुप्तावनुभवः प्रामाणिक इति भावः । समाधत्ते—विकारित्वेनेति । तार्किकप्रभाकरोभयमते कर्तृत्वादिरूपधर्मवत्त्वेनेत्यर्थः । स्वाविकारेति । स्वाश्रितकर्तृत्वादिधर्मानुसन्धातृत्वासंभवात् । घटत्वाद्यनाश्रयस्यैव घटत्वादिविशिष्टानुसंधातृत्ववत् कर्तृत्वादिरहितस्यैव कर्तृत्वाद्यनुसंधातृत्वसंभवादिति भावः । ननु स्व—स्वव्याप्यभिन्नं प्रत्येव भासकत्वे भास्यधर्मानाश्रयत्वनियमः । अन्यथा दीपस्य स्वीयरूपादिभासकत्वानुपपत्तिरत आह—दृश्यस्येति । दृग्विषयस्य ज्ञानभिन्नस्य जडस्येति यावत् द्रष्टृत्वाभावात् स्वविषयकभानाश्रयत्वाभावात् । तथाचाहमर्थो न द्रष्टा, दृश्यत्वाद् घटवदित्यनुमानाद् द्रष्टृत्वाभावसिद्धेर्दीपादावपि ग्राहकज्ञानानाश्रय [स्य तृतीय] त्वेन तद्दृष्टान्तादभिमतासिद्धेश्च नाहमर्थस्यैव द्रष्टृतेति भावः । नन्वहमर्थस्य 'अहं जानामी'त्याश्रयत्वेन भानात् दृष्टिकर्मत्वरूपं दृश्यत्वमेवालीकमतः कथं तेन घटादेरिव द्रष्टृत्वाभावसिद्धिस्तत्राह—प्रमातुश्चेति । अहमर्थस्येत्यर्थः । परिणामित्वेन प्रमाणजन्यवृत्त्याश्रयत्वेन दृश्यत्वात् स्वातिरिक्तस्वप्रकाशसंविद्विषयत्वात् । प्रमाणजन्यज्ञानसापेक्षस्य स्वप्रकाशत्वायोगादवेद्यत्वे च शशशृङ्गादिवदलीकत्वापत्तेः स्वव्यवहारायाहमर्थस्य स्वातिरिक्तस्वप्रकाशसंविद्विषयत्वमावश्यकमिति भावः । ननु तथापि न तवेष्टसिद्धिः, स्वाश्रितज्ञानस्यैव स्वप्रकाशसंविद्रूपत्वाङ्गीकारात् । तेन दृश्यत्वद्रष्टृत्वयोरपि समावेशो बाधकाभावादित्यत आह—एकस्यैवेति । सजातीयभेदरहितस्यैवेत्यर्थः । कूटस्थस्य कूटे प्रपञ्चेऽधिष्ठानतया स्थितस्य सर्वसाक्षित्वात् सर्वपदार्थविषयकभानरूपत्वात् । अहमर्थवृत्तेर्जडकार्यत्वेन घटादेरिव स्वतः स्फूर्तिमत्त्वस्य, कर्तृकर्मविरोधेन स्वविषयकत्वस्य, अनवस्थानाद्वृत्त्यन्तरवेद्यत्वस्यायोगात्, लाघवात्सर्वभ्रमाधिष्ठानतया क्लृप्तस्यैकस्यैवाविकारिणः प्रमात्रादिसाधारणसर्वसाक्षित्वकल्पनमुचितमिति भावः । साक्षित्वविरुद्धैकत्वकूटस्थत्ववतः साक्षित्वे न युक्तिशास्त्रसिद्धमित्याशङ्कते—एक इति । एकः अद्वितीयः, भानसामग्र्या रहित इति यावत् । कूटस्थः अपरिणामी, निर्धर्मकः साक्षित्वादिधर्मरहितः । अप्रामाणिकत्वात् युक्तिशास्त्राद्यगोचरत्वात् । अप्रामाणिकतोक्तिः श्रुत्यपरिज्ञानमूलेति दर्शयितुं श्रुतिमादावुदाहरति—तमेवेति । 'एको वशी सर्वभूतान्तरात्मे'त्याद्युक्तसाक्षिणमेव भान्तं प्रकाशमानं भासकं अनु आश्रित्य सर्वमिदं सूर्याग्न्यहमर्थादि विभाति भानकर्तृ भवति यथा खादित्यमनु दर्पणादित्यादि भाति । फलितमाह तस्य भासेति । तदभिन्नभानेनेत्यर्थः । आस्तां सर्वभासकत्वम् । भास्यत्वासामानाधिकरण्यं तु कुतस्तत्राह—न दृष्टेरिति । दृष्टेः प्रमाणजन्यवृत्तेः, द्रष्टारं भासकं, न पश्येः न पश्यसि, तद्ब्रह्मेति शेषः । तथाच भासकत्वभा-

स्यत्वयोरसामानाधिकरण्यं श्रुतावेव स्पष्टमिति भावः। श्रुत्यन्तरमाह—अदृष्टो द्रष्टेति। अदृष्टः सर्वप्रमाणागोचरः। द्रष्टा सर्वावभासकः। नन्वस्तु द्रष्टृत्वदृश्यत्वयोरसामानाधिकरण्यम्, द्रष्टुरेकत्वं तु कुतस्तत्राह—नान्योऽतोस्तीति। अतः पृथिव्यादिविज्ञानान्तान्तर्यामिणः सकाशात् अन्यः व्यावृत्तः प्रपञ्चान्तर्गतः कोऽप्यहमर्थादिरूपो द्रष्टा नास्तीत्यर्थः। आदिना नान्योऽतोऽस्ति श्रोतेत्यादिपरिग्रहः। अनेन सर्वप्रमाणजन्यवृत्तिमात्रस्यैव ज्ञानरूपता नास्तीति ज्ञापितम्। सर्वसाक्षित्वेन सर्वभासकत्वेन, अभिषिक्तत्वात् दर्शितयुक्तिभिः संशोध्य सर्वान् प्रतिज्ञापितत्वात्।

(संदीपनम्)

अथ न प्रमातुः सर्वग्राहकस्य साक्षिग्राह्यत्वमित्याशङ्कते—**नन्विति**। **विकारित्वेनेति**। प्रमातुरितिशेषः। हेतुमाह—**दृश्यस्येति**। आस्तामियं व्याप्तिः किं तेन तत्राह—**प्रमातुश्चेति**। प्रमातुर्भासकत्वाभावे को भासकस्तत्राह—**एकस्येति**। नच साक्षिणः कथमव्यभिचारित्वमविद्यावच्छिन्नत्वेन विनाशित्वादिति वाच्यम्। अविद्योपलक्षितस्य साक्षित्वात्। कूटस्थोऽविकारी 'एकरूपतया तु यः। कालव्यापी स कूटस्थः' इत्यमरः। वाचोभङ्ग्याह **एक इति**॥ 'ग्रामे पञ्च त्रयोऽरण्ये नगरे सप्त साक्षिणः,' इत्यादिस्मृत्या बहूनां साक्षित्वप्रतिपादनात्। कूटस्थेत्यनेन कूटसाक्षिणोऽनादरणीयत्वमुक्तम्। अधार्मिकोऽपि न साक्षी स्मृतिनिषिद्धत्वादित्युक्तं **निर्धर्मक** इत्यनेन। हेतुमाह **अप्रामाणिकत्वादिति**। श्वेताश्वतरषष्ठाध्यायस्थवाक्यमुदाहरति-**तमेव भान्तमिति**। एतस्य पूर्ववाक्यम् 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निरित्यन्तम्। एतदानुपूर्वीकं वाक्यं कठवल्लीद्वितीयाध्याये द्वितीयवल्ल्यामपीति बोद्धव्यम्। बृहदारण्यकस्थवाक्यजातमुदाहरति—'न दृष्टेर्द्रष्टारं पश्येरित्यादि। राज्ञा यः साक्षी अङ्गीक्रियते स एवार्थसाधकः प्रामाणिकश्चेत्युक्तं वेदान्तप्रमाणराजेनेत्यनेन।

**नन्वु महदेतदिन्द्रजालं, प्रमाश्रयानकूटस्थान् विहाय कूटस्थमप्रमाश्रयमेव प्रमाणराजः सर्वसाक्षिणं करोतीति, बाढमिन्द्रजालमेवैतत् स्वप्नवद् विद्याविलसितत्वात्।**

(लघुव्याख्या.)

निरुक्तयुक्तिविरोधसत्त्वेऽपि श्रुतेः साक्षित्वप्रतिपादनं महामायेत्याशङ्कते—नन्विति इन्द्रजालं माया। इन्द्रजालत्वमेव समर्थयति—प्रमाश्रयानिति। तत्र हेतुः अकूटस्थानिति। परिणममानानित्यर्थः। प्रमातुर्द्रष्टृत्वसंभवमुपपाद्यातिरिक्तस्यासंभवमाह—कूटस्थमिति। कूटवद्विद्यमानं निर्विकारमिति यावत्। अत एवाप्रमाश्रयमित्यर्थः। इष्टमापादितमित्याह—बाढमिति। एतत्कूटस्थस्य साक्षित्वं, अविद्याविलसितत्वात् अविद्याप्रयुक्तत्वात्। अविद्याकृतप्रपञ्चविषयकत्वरूपावभासकताप्यविद्याकृतैवेतीन्द्रजालरूपैवेति भावः।

(संदीपनम्)

इन्द्रजालत्वे हेतुमाह—**अविद्याविलसितत्वादिति**। अविद्याविरचितत्वादित्यर्थः। दृष्टान्तमाह—**स्वप्नवदिति**।

तथापि दृश्यस्य घटादिवज्जडत्वेन कथं प्रमाश्रयत्वमितिचेत्, न, दर्पणादिवत्स्वच्छत्वेन चिद्बिम्बग्राहकत्वात्, चैतन्यतादात्म्याध्यासाद्वा । ननु नीरूपस्यापि निरवयवस्याप्यात्मनः कथं प्रतिबिम्ब इतिचेत्, का तत्रानुपपत्तिः ? विभ्रमहेतूनां विचित्रत्वात्, जपाकुसुमरूपस्य नीरूपस्य निरवयवस्यापि स्फटिकादौ प्रतिबिम्बदर्शनात्, शब्दस्यापि प्रतिशब्दाख्यप्रतिबिम्बोपलम्भात्, तयोः संप्रतिपन्नप्रतिबिम्बवैलक्षण्यानिरूपणात् । तथापीन्द्रियग्राह्यस्यैव प्रतिबिम्ब इतिचेत्, न, व्यभिचारात् । अनिन्द्रियग्राह्यसाक्षिप्रत्यक्षस्याकाशस्यापि जलादौ प्रतिबिम्बोपलम्भात् । अन्यथा जानुमात्रेऽप्युदकेऽतिगम्भीरप्रतीतिर्न स्यात् । प्रतिबिम्बस्य साक्षिभास्यत्वेऽप्यधिष्ठानग्रहणार्थं चक्षुषोऽपेक्षणात् । एतेन नीलं नभ इत्यादिविभ्रमेऽपि चक्षुरन्वयव्यतिरेकौ व्याख्यातौ । तत्र सालोकस्याकाशस्याधिष्ठानत्वात् । तस्माच्चाक्षुषप्रतिबिम्बमेव रूपसापेक्षं नान्यदित्यवधेयम् ।

( लघुव्याख्या. )

ननु यद्यतिरिक्तसाक्ष्येव प्रमा तदाऽन्तःकरणस्य प्रमातृत्वमनुपपन्नं तस्य सर्वाधिष्ठानसाक्ष्याश्रयत्वानुपपत्तेरित्याशङ्कते—तथापीति । अतिरिक्तसाक्ष्यङ्गीकारेऽपीत्यर्थः । दृश्यस्य साक्षिभास्यस्य जडत्वेन चिद्भिन्नत्वेन चिदाश्रयत्वाभावेन च कथं प्रमाया आश्रयत्वरूपं प्रमातृत्वम् । तद्वृत्तेः प्रमात्वानङ्गीकारात् साक्षिणश्च तद्गुणत्वाभावादिति भावः । स्वतोऽसंभवेऽपि प्रतिबिम्बवैशिष्ट्येन संभवत्येवेत्याह—दर्पणेति । स्वच्छत्वेन प्रतिबिम्बसंबन्धयोग्यत्वेन, चिद्बिम्बेति साक्षिप्रतिबिम्बवत्त्वादित्यर्थः । प्रतिबिम्बवत्त्वेऽप्यहं जानामीत्येकत्वेन कथं प्रत्ययस्तत्राह—चित्तादात्म्येति । प्रतिबिम्बात्मकचित्तादात्म्यभ्रमादित्यर्थः । नन्वात्मनः प्रतिबिम्ब एव कथं क्लृप्तसामग्र्यभावात्,तथाहि—स्वाभिमुखोपाध्यभिहतैश्चक्षूरश्मिभिः परावृत्तैश्चाक्षुषद्वारा ग्रीवास्थत्वाद्यग्रहादिदोषे सति बिम्बेऽभिमुखोपाध्यन्तर्गतत्वारोपरूपो मम मुखं दर्पणान्तर्गतमित्यात्मकः प्रतिबिम्बभ्रमो जन्यते । तत्र बिम्बचाक्षुषं रूपाधीनमुपाधेरभिमुख्यं च सावयवत्वाधीनमतः कथमात्मनः प्रतिबिम्बः, रूपाभावादवयवाभावाच्चेत्याशङ्कते—नन्विति । सरूपसावयवस्येव नीरूपनिरवयवस्यापि प्रतिबिम्बदर्शनेन सामग्रीभेदस्यावश्यवक्तव्यत्वान्नात्मनः प्रतिबिम्बेऽनुपपत्तिलेशोपीत्याह काका—कात्रेति । न कापीत्यर्थः । हेतुमाह—विभ्रमेति । विचित्रत्वान्नानाविधत्वात् । नानाविधत्वं समर्थयन् रूपादिघटितसामग्र्यां व्यभिचारमाह—जपेति । नीरूपस्य गुणानां गुणशून्यत्वेन रूपरहितस्य निरवयवस्य द्रव्यत्वाभावापराधेनावयवरहितस्य प्रतिबिम्बदर्शनात् उपाध्यन्तर्गतत्वारोपरूपप्रतिबिम्बदर्शनात् । तथाच स्फटिक एव तत्र व्यभिचार इति भावः । ननु साक्षात्परम्परासाधारणसंबन्धेन रूपं हेतुः, रूपे च परम्परया धर्मिगतरूपादिकमस्त्यतो न व्यभिचार इत्यत आह—शब्दस्यापीति । प्रतिशब्देति । प्रतिबिम्बोपाधिका प्रतिशब्देत्याख्या यस्येत्यर्थः । प्रतिबिम्बोपलम्भादिति मठमध्यस्थपुरुषकण्ठावच्छिन्नस्य मठोपरिभागावच्छिन्नत्वेन प्रतीत्येति भावः । नन्वरुणः स्फटिक इति भ्रमः पीतः शङ्ख इत्यनेन समानः । शब्दस्थले तु प्रतिध्वनिरूपं शब्दान्तरमेव जायतेऽतः कथं तदनुसारेण सामग्रीभेदकल्पनं तत्राह—

तयोरिति। रूपशब्दप्रतिबिम्बयोरित्यर्थः । संप्रतिपन्नेति । प्रतिबिम्बत्वेन सर्वसंमतमुखादिप्रतिबिम्बवैलक्षण्याप्रतीतेरित्यर्थः । उपाध्यन्तर्गतत्वरूपारोपितधर्मविशिष्टबिम्ब एव प्रतिबिम्बः । तादृशं च मुखमिव जपाकुसुमरूपशब्दादिकमपि प्रतीयत एवेति न तयोः प्रतिबिम्बत्वे शङ्कोचितेति भावः। ननु चक्षुर्योग्यत्वस्य व्यभिचारित्वेऽपि बहिरिन्द्रिययोग्यत्वस्याव्यभिचारित्वात्कथं बहिरिन्द्रियायोग्यस्यात्मनः प्रतिबिम्ब इत्यभिप्रेत्याशङ्कते—तथापीति । रूपादीनामनपेक्षायामपीत्यर्थः। अयमपि नियमोऽयुक्तो व्यभिचारादित्याह—नेति। व्यभिचारस्थलमाह—अनिन्द्रियेति । इन्द्रियाग्राह्यस्येत्यर्थः । साक्षिप्रत्यक्षस्य साक्ष्येव प्रत्यक्षं यस्येति साक्षिभास्यस्येत्यर्थः। बहिरिन्द्रियग्राह्यस्येति वक्तव्ये इन्द्रियग्राह्यस्येति सामान्योक्तिर्मनस इन्द्रियत्वाभावमभिप्रेत्य। प्रतिबिम्बानङ्गीकारेऽनिष्टमाह—अन्यथेति । अतिगम्भीरेति। जानुमात्रपरिमाणापेक्षयाऽधिकपरिमाणविशिष्टस्याकाशस्य जानुमात्रोदकान्तर्गतत्वेन प्रतीतिरित्यर्थः। परिमितापेक्षया अधिकबुद्धिरधिकस्यान्तर्गतत्वारोपं विना बाधितैवेति भावः। तथाच तादृशस्यापि नियमस्यात्रैव व्यभिचार इति भावः। ननु यदि बिम्बस्य नेन्द्रियग्राह्यत्वं किंतु यथाकथंचिज्ज्ञानमात्रं तदान्धादेरपि प्रतिबिम्बभ्रमापत्तिस्तत्राह—प्रतिबिम्बस्येति । उपाध्यन्तर्गतत्वरूपारोपितधर्मविशिष्टस्याकाशादेरित्यर्थः । अधिष्ठानग्रहणार्थम्, अधिष्ठानसामान्यांशज्ञानार्थं, तथा बिम्बांशे ज्ञानमात्रमधिष्ठानांशे इन्द्रियजन्यमपेक्षितं तावतैवातिप्रसङ्गनिरासादिति दिक्। ननु कथं तर्हि नीलं नभ इति विभ्रमोपपत्तिः, भ्रमाधिष्ठानस्य नभसश्चक्षुरयोग्यत्वात्तत्राह—एतेनेति। अधिष्ठानसामान्यांशज्ञानार्थं चक्षुषोऽपेक्षेति वचनेनेत्यर्थः। चक्षुरिति। चक्षुःसंयोगे भ्रमस्तदभावे भ्रमाभावः इत्यन्वयव्यतिरेकौ व्याख्यातौ भ्रमोपयोगिताग्राहकत्वेन सूचितौ। कथं तत्राह—तत्रेति। नीलं नभ इति वाक्येन कथ्यमाने भ्रम इत्यर्थः। सालोकस्य आलोकविशिष्टस्य भ्रमकारणीभूताज्ञानविषयत्वात्। तथाच नभःशब्देन सालोक एव नभः कथ्यते। तत्र च आलोकांशः सामान्यांशस्तस्य च चक्षुषा ज्ञानं संभावितमेवेति न तत्र व्यभिचार इति भावः। उपसंहरति तस्मादिति। सर्वत्र भ्रमे रूपादीनां कारणत्वे व्यभिचारादित्यर्थः। चाक्षुषप्रतिबिम्बं चाक्षुषपदार्थस्य प्रतिबिम्बं रूपसापेक्षं साक्षात्परम्परया वा रूपसापेक्षं नान्यत् न प्रतिबिम्बान्तरम्।

(संदीपनम्)

दृश्यस्यान्तःकरणस्य चैतन्याश्रयत्वरूपं प्रमाश्रयत्वं कुत इत्याक्षिपति—**तथापीति**। चिद्बिम्बग्राहकत्वादिति। एवं च प्रतिबिम्बग्राहकत्वमेव चैतन्याश्रयत्वमिति भावः। अथ प्रतिबिम्बमाक्षिपति—**नन्विति**। **नीरूपस्यापीति**। अपिशब्दान्निरवयवस्यानुकर्षः। ननूभयत्रापि प्रतिबिम्बमेव नास्ति तत्राह—**तयोः संप्रतिपन्नेति**। प्रकारान्तरेण पुनराक्षिपति—**तथापीति**। भाष्यकारमतमालम्ब्याह—**साक्षिप्रत्यक्षस्यापीति**। **अतिगम्भीरेति** अतिविशालस्याप्युपलक्षणमिति बोध्यम्। ननु प्रतिबिम्बस्य साक्षिभास्यत्वे अन्धस्य न किमिति प्रत्ययस्तत्राह—**प्रतिबिम्बस्येति**। ननु तर्हि नीलं नभ इति प्रत्यये तव मते कथं चक्षुरन्वयः इन्द्रियाग्राह्यस्याकाशस्याधिष्ठानत्वात्तत्राह—**एतेनेति**। न केवलमाकाशमधिष्ठानं येन नापेक्षा स्याच्चक्षुषः, किन्त्वालोकोऽपि तथाचालोकांशे चक्षुषोऽपेक्षणान्न त्वदुक्तदोष इत्याह—**तत्र सालोकस्येति**। उपसंहरति—**तस्मादिति**॥

**तथाप्यात्मनः प्रतिबिम्बे किं मानमितिचेत्, शृणु । 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय, 'मायाभासेन जीवेशौ करोतीत्यादिश्रुतिः, 'एकधा बहुधा चैव दृश्यते जलचन्द्रवदित्यादिस्मृतिः, 'स एष इह प्रविष्टः, 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत, 'तत्सृष्ट्वा तदेवानुप्राविशदित्यादिप्रवेशश्रुत्यर्थापत्तिः, 'आभास एव च, 'अत एव चोपमासूर्यकादिवदित्यादिपारमर्षसूत्राणि च तत्र मानानि ।**

( लघुव्याख्या. )

अस्तु नीरूपनिरवयवस्यात्मनः प्रतिबिम्बे बाधकाभावस्तथापि साधकं तु किमिति पृच्छति शिष्यः—तथापीति । नीरूपनिरवयवस्य प्रतिबिम्बोपपादनेऽपीत्यर्थः । किं मानं आकाशादीनामिवावश्यकं प्रमाणम् । रूपमिति रूप्यतेऽहमिति धिया व्यवह्रियते येनान्तःकरणेन तद्रूपं, रूपं रूपं प्रत्यन्तःकरणं प्रतिरूपः प्रतिबिम्बरूपः, तद्रूपं प्रतिबिम्बात्मकमस्य परमात्मनः प्रतिचक्षणाय अहमितिव्यवहाराय । श्रुत्यन्तरं, जीवेशाविति आभासेन स्वगतप्रतिबिम्बेन करोति सर्वान् प्रति व्यवहारयति इत्यादिश्रुतिः साक्षात्प्रतिबिम्बार्थकश्रुतिः । आदिना 'यथा ज्योतिरात्मा विवस्वान् आपो भिन्ना बहुधैकोनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मेत्यादिपरिग्रहः । एकधा एकप्रकारः बहुधा बहुप्रकारः दृश्यते प्रतीयते, उपाधौ प्रतिबिम्बितः सन्निति शेषः । दृष्टान्तमाह—जलचन्द्रवदिति । यथा वस्तुत एक एव चन्द्र उपाधौ प्रतिबिम्बितः सन्नानाकार उपलभ्यते, 'एक एव तु भूतात्मा भूते भूते व्यवस्थित इति पूर्वार्धम् । श्रुत्यन्तरमाह—स एष इति । स एषः परमात्मा इह ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु प्रविष्टः प्रतिबिम्बीभूतः स एष इति सामानाधिकरण्याज्जीवात्मना प्रविष्ट इति लभ्यते, आ नखाग्रेभ्यः नखाग्रं मर्यादीकृत्य सकलदेहावच्छेदेनैवाहमित्यभिमानादित्थमुक्तम् । श्रुत्यन्तरमाह—तदिति । तत् आकाशादिकार्यं सृष्ट्वा उत्पाद्य तदेव आकाशादिकार्यमेव अनुप्राविशत् तदन्तर्गतत्वेनाभिव्यक्तो बभूव । प्रवेशश्रुत्यर्थापत्तिः प्रवेशश्रुतेरन्यथानुपपन्नत्वधीः । सावकाशद्रव्यान्तर्नयनरूपस्य प्रवेशशब्दार्थस्य निरवयवेऽसंभवात् । प्रवेशपदस्य प्रतिबिम्बपरत्वमेवाद्रियत इति भावः । नायं श्रुत्यर्थः कल्पितः किन्तु भगवद्बादरायणसंमत इति ज्ञापयितुं सूत्राण्युदाहरति—आभास एव चेत्यादि । अयमर्थः—आभास एवायं जीवः परमात्मनोऽवगन्तव्यो न स एव नापि वस्त्वन्तरम् । यथा जलसूर्यः सूर्यप्रतिबिम्बः । सूत्रान्तरमुदाहरति—अत एवेति । यतोऽयमात्मा निर्विशेषः श्रुतिषु प्रमितः अतएव सूर्यकादिवत् सूर्यप्रतिबिम्बवत् । उपमा यथा 'ज्योतिरात्मेत्याद्युपमा भवतीत्यर्थः । तत्रेवात्रापि बिम्बप्रतिबिम्बयोरभेद इति भावः ।

( संदीपनम् )

बृहदारण्यकीयमधुब्राह्मणस्थवाक्यमुदाहरति—रूपंरूपं प्रतीति । तदेतदृषिः पश्यन्नवोचदित्याद्यम् । मानानीत्यनेनान्वयः । 'इन्द्रो मायाभिः पुरुरूप ईयते, इत्यन्तं बोध्यम् । काठके द्वितीयवल्ल्याम् 'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा

---

१ 'र्थान्यथानुपपत्तिः इति पाठः

रूपं रूपं प्रतिरूपो वहिश्चे त्याद्यपि बोध्यम्। उत्तरनृसिंहतापिनीस्थं वाक्यमुदाहरति—**मायेति**। माया जीवेशावाभासेन करोति अभिव्यनक्तीत्यर्थः। ऐतरेयकश्रुतिमुदाहरति—**स एष** इति। तैत्तिरीयकश्रुतिमुदाहरति—**तत्सृष्ट्वेति**। आदिपदग्राह्या 'यथाह्ययं ज्योतिरात्मा विवस्वानापो भिन्ना वहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मेत्यादिः श्रुतिः। पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशदित्याद्यूह्यम्। बादरायणीयतृतीयाध्यायस्य द्वितीयपादसूत्रमुदाहरति—**अतएव** चोपमासूर्यकादिवदिति। 'स यथा सैन्धवघनोऽनन्तरोऽवाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽवाह्यः कृत्स्नः प्रज्ञानघन एवेत्यादिना यत ऐक्यरूपं प्रतिपादितं, यतश्च 'अथात आदेशो नेति नेत्यादिना रूपान्तरं प्रतिषिद्धमत एव चास्योपाधिनिमित्ता अपरमार्थिकी विशेषवत्ता इत्यभिप्रेत्य जलसूर्यकादिवदित्युपमोपादीयते मोक्षशास्त्रेषु। एवं यथा सूर्यादिप्रतिविम्बं जलचलनेन चलतीव जलभेदेन भिद्यते तथात्माप्युपाधिधर्मेण धर्मवानिव भवति उपाधिभेदेन भिन्न इव भवति वस्तुतो निर्धर्मको निर्भेदोऽद्वितीयः। तदुक्तं च भागवते—

यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः।
दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः॥ इति।

अथ जले सूर्यकः सूर्यप्रतिविम्बः। आदिशब्देन चन्द्रविम्बादिग्रहणम्। तथाचामृतबिन्दूपनिषत्—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा वहुधा चैव दृश्यते जलचन्द्रवत्॥ इत्यादि।

तथा याज्ञवल्क्यश्रुतिरपि—

आकाशमेकं हि यथा घटादिषु पृथक् भवेत्।
तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान्॥ इति।

**तस्य च सत्यत्वं मिथ्यात्वं वेत्यन्यदेतत्। अचेतनविलक्षणत्वं तु तस्य श्रुतिसिद्धं प्रत्यक्षसिद्धं च। तस्मात्सिद्धमन्तःकरणस्य प्रतिविम्बाध्यासद्वारा प्रमातृत्वम्।**

**( लघुव्याख्या. )**

नन्वात्मनः प्रतिबिम्बः सत्यो मिथ्या वा? नाद्यः, प्रतिबिम्बस्य सत्यत्वानुपपत्तेः, नान्त्यो मोक्षभागित्वानुपपत्तेरित्याशङ्क्य सिद्धान्ते मोक्षभागितायाः शुद्ध एव व्यवस्थापयिष्यमाणत्वात् प्रकृते तच्चिन्तनमनतिप्रयोजनकमित्यभिप्रायेणोपेक्षते—**तस्येति**। प्रतिबिम्बस्य सत्यत्वं बिम्बात्मतामादायाबाधितत्वम्, मिथ्यात्वं अनिर्वचनीयख्यात्यनुरोधेनातिरेक्यमादाय शुक्तिरजतादिवत्कल्पितत्वम्। अन्यदेतद्विचारान्तरं प्रकृतविचारानर्हम्। तत्र शङ्काया अग्रे व्यवस्थापयिष्यमाणत्वादिति भावः। सत्यत्वमिथ्यात्वयोर्यदि न निर्णयस्तदेदंरूपात्सम्प्रतिपन्नप्रतिबिम्बाद्वैलक्षण्यसिद्धिः कथं तत्राह—**अचेतनेति**। अचेतनादिदंरूपान्मुखादिप्रतिबिम्बाद्विलक्षणत्वं चिद्रूपत्वं श्रुतिसिद्धं 'योयं विज्ञानमय इत्यादिश्रुतिसिद्धम्। श्रुतेस्तत्परत्वे विवद-

१ प्रतिविम्बस्य सत्यत्वमेवेति प्रतिविम्बवादिनः, मिथ्यात्वमेवेत्याभासवादिनः, स्वरूपे तु न विवाद इत्यन्यदेतत्। इति पाठः। २ मनुभवसिद्धमिति पाठः।

मानं प्रत्याह—अनुभवेति । अहं चेतन इति प्रतीतिसिद्धमित्यर्थः । उपसंहरति—तस्मादिति चित्प्रतिबिम्बस्य चेतनत्वादिना प्रामाणिकत्वादित्यर्थः । प्रतिबिम्बाध्यासद्वारा प्रतिबिम्बतादात्म्याध्यासद्वारा प्रमातृत्वं प्रमातृरूपता ।

( संदीपनम् )

नन्वयं दृष्टान्तीभूतः प्रतिबिम्बः सत्योऽसत्यो वा तत्राह—तस्य चेति । तर्हि प्रतिबिम्बस्याचेतनत्वमापतितं तत्राह—अचेतनविलक्षणत्वमिति । दर्पणादिवदित्यादिना यच्चित्प्रतिबिम्बग्राहकत्वेन प्रमाश्रयत्वमुक्तमन्तःकरणस्य तदुपसंहरति—तस्मादिति ।

**नन्वध्यासोऽपि नोपपद्यते, तथाहि—आत्मनि वाऽनात्माध्यस्येत, अनात्मन्यात्मा वा ? नाद्यः, तस्य निःसामान्यविशेषत्वेन, सर्वदाभासमानत्वेन, सादृश्यादिरहितत्वेन चाधिष्ठानत्वासंभवात् । नापि द्वितीयः, तस्य मिथ्यात्वाभ्युपगमात्, मिथ्यावस्तुनोऽधिष्ठानत्वे च शून्यवादप्रसंगात्, तस्य च सत्यत्वे तदनिवृत्तेरनिर्मोक्षप्रसङ्गाच्च । नहि सत्यं किंचिन्निवर्तते, निवर्तमानं वा न ज्ञानेन, श्रुतिश्च—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे, 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, 'तरति शोकमात्मवित्, 'ब्रह्मविदाप्नोति परम्, 'ब्रह्म वेद ब्रह्मैव भवतीत्याद्या ज्ञानात्सर्वसंसारनिवृत्तिं दर्शयन्ती तस्य मिथ्यात्वं सूचयति । 'एकमेवाऽद्वितीयम्, 'अतोऽन्यदार्तं, 'नेह नानास्ति किंचन, 'अथात आदेशो नेतिनेतीत्याद्याः श्रुतयः साक्षादेव मिथ्यात्वं प्रतिपादयन्ति । दृश्यत्वेन शुक्तिरजतादिवन्मिथ्यात्वानुमानाच्च । आत्मन्यध्यस्ततयैव चानात्मनि सिद्धे तत्रात्माध्यासः, अनात्माध्यासेन चात्मनो दोषसादृश्यादिसंभवात्तत्रानात्माध्यास इत्यात्माश्रयादिदोषप्रसङ्गाच्च । एतेनात्मानात्माध्यासस्याविद्यकत्वान्न विकल्पावसर इत्यपास्तं, स्वप्रकाशात्मन्यविद्याया अप्यनुपपत्तेः । तथाहि—साप्यध्यस्तानध्यस्ता वा ? तत्राद्ये कथं नात्माश्रयाद्यन्यतमदोषप्रसङ्गः ? अन्त्ये तस्या अनुच्छेदादनिर्मोक्षप्रसङ्गः । सर्वस्याध्यासमूलत्वे च भ्रमप्रमादिव्यवस्था न स्यात् । एकस्यैवात्मनः प्रमाणप्रमेयप्रमितिप्रमातृरूपता च विरुद्धा, अविरोधाभ्युपगमे वा सौगतमतप्रवेशापत्तिरिति ।**

( लघुव्याख्या. )

अध्यासमूलकं प्रमातृत्वमुक्तमध्यास एव तु कथम् ? कृत्स्नसामग्र्यभावादित्यभिप्रेत्याक्षिपति—नन्विति । अपिशब्दादध्यासमूलकप्रमातृत्वम् । असम्भवं समर्थयिष्यन्नादौ विकल्पयति—तथाहीति । अध्यासे ज्ञातसामान्यधर्मवत्त्वमज्ञातविशेषत्वमधिष्ठानावरणमारोप्याधिष्ठानयोः सादृश्यमधिष्ठानारोप्ययोर्भेदाग्रहश्च दोषसामग्री । न चैते निर्धर्मके आत्मनि सन्ति । अतो नाध्याससम्भव इत्याशयेनाह—निःसामान्येति । अधिष्ठानत्वासंभवादित्यत्रान्वेति । निर्गतौ सामान्यविशेषौ यस्मात्स निःसामान्यविशेषस्तस्य भावस्तत्त्वं सत्त्वपरिपूर्णानन्दत्वादिसामान्यविशेषरहितत्वं तेनेत्यर्थः । सत्त्वं सामान्यधर्मः, परिपूर्णानन्दत्वं विशेषधर्म इत्यादिसामान्य-

विशेषभावस्याध्यासिकत्वादिति भावः। सर्वदा भासमानत्वेन वृत्तितदभावकालेऽपि स्वतः स्फूर्तिमत्त्वेन, निर्धर्मकत्वमेव सादृश्याभावे आदिपदोक्तदोषाभावे च हेतुर्बोध्यः। अधिष्ठानत्वासंभवात् अध्यासकारणीभूताज्ञानविषयत्वासंभवात्। तस्य अनात्मनः। मिथ्यात्वेति स्वरूपतो बाधितत्वरूपमिथ्यात्वस्वीकारादित्यर्थः। ननु वस्तुगत्या बाधितस्यैव शुक्त्यादिवदधिष्ठानत्वमस्तु तत्राह—मिथ्यावस्तुन इति। बाधितवस्तुन इत्यर्थः। अधिष्ठानत्वे च आत्माध्यासाधिष्ठानत्वे तु शून्यवादप्रसङ्गात् सर्वमिथ्यात्ववादप्रसङ्गात्, अध्यस्ताधिष्ठानयोर्द्वयोरपि मिथ्यात्वप्राप्तेरिति भावः। ननु मिथ्यात्वमनात्मनोऽसम्प्रतिपन्नमतो न दोषस्तत्राह—तस्यचेति। तस्यानात्मनः। चस्त्वर्थो विभिन्नक्रमः। सत्यत्वे त्वित्यर्थः। तदनिवृत्तेः तस्यानात्मनोऽनिवृत्तेरबाधादनिर्मोक्षप्रसङ्गात् परिपूर्णानन्दस्वरूपात्मनाऽनवस्थितिप्रसङ्गात्। मिथ्या वस्त्वेव बाध्यमित्यत्र युक्तिमाह—नहीति। सत्यं परमार्थसद्रूपं त्रिकालाबाध्यं निवर्तते बाधितं भवति। अबाध्यस्य बाध्यत्वायोगादिति भावः। ननु वर्तमानकाले अबाधात् त्रैकालिकबाधविधुरत्वेऽपि घटादेर्मुद्गरप्रहारादिना, पापादेः प्रायश्चित्त-ज्ञानादिना नाशदर्शनात्कथं सत्यं न निवर्तते तत्राह—निवर्तमानं वेति। नश्यमानं वेत्यर्थः। ज्ञानेन अधिष्ठानसाक्षात्कारेण सत्यं, दृष्टमिति शेषः। शुक्त्याद्यात्मकाधिष्ठानसाक्षात्कारनाश्यस्य शुक्तिरजतादेस्त्रैकालिकाभावप्रतियोगित्वरूपमिथ्यात्वदर्शनात्, ब्रह्मसाक्षात्कारनाश्यस्यानात्मनोऽपि त्रैकालिकबाधप्रतियोगित्वरूपमिथ्यात्वमावश्यकमिति भावः। यथा च त्रिकालबाध्यत्वेऽपि सत्त्वादिव्यवहारोपपत्तिस्तथोपरिष्टाद्व्यक्तीभविष्यति। मिथ्यात्वेन सह गृहीतव्याप्तिकस्य ज्ञाननाश्यत्वहेतोरनात्मजातवृत्तित्वज्ञानसंपत्तये श्रुतिमुदाहरति—भिद्यत इत्यादि। हृदयग्रन्थिः हृदयस्यान्तःकरणस्य ग्रन्थिरिव ग्रन्थिः हृदयवृत्तिवासनामूलमज्ञानं,भिद्यते भेदं विनाशमायाति। सर्वसंशयाः अहं भोक्तृकर्तृस्वरूपो न वेत्यादिसंशयाः छिद्यन्ते तत्कारणीभूतावरणनाशात्। अस्य निवृत्ताविद्यस्य कर्माणि संचितानागतानि क्षीयन्ते विनश्यन्ति तस्मिन् परमात्मनि परावरे पर ईश एवावरो यस्मादित्यखण्डार्थे दृष्टे साक्षात्कृते सतीत्यर्थः। तमेव परमात्मानमेव विदित्वा साक्षात्कृत्य मृत्युं प्रमादरूपमज्ञानम् अत्येति अतिक्रामति नाशयतीति यावत्। साधनान्तरसमुच्चयनिरासायाह—नान्य इति। अन्यः आत्मज्ञानादन्यः पन्थाः उपायः अयनाय स्वरूपप्राप्तये नास्तीत्यर्थः। श्रुत्यन्तरं, तरतीत्यादि। शोकमज्ञानं तरति नाशयति। ज्ञानहेतुकतरणस्य नाशपदार्थत्वात्। तस्य प्रपञ्चस्य मिथ्यात्वं सर्वदेशीयत्रैकालिकाभावप्रतियोगित्वं सूचयति अधिष्ठानसाक्षात्कारनाश्यत्वहेतोः पक्षवृत्तिताबोधसंपादनेन ज्ञापयति। साक्षान्मिथ्यात्वप्रतिपादिकां श्रुतिमुदाहरति—एकमिति। 'सदेव सोम्येदमग्र आसीदिति पूर्ववाक्यम्। इदं नामरूपात्मकं अग्रे सृष्टेः पूर्वं सदेवासीत्। कालत्रयाबाधितस्वरूपं ब्रह्मैवासीत् न नामरूपात्मकम्। एतेन ब्रह्मव्यतिरेकेण जगन्नास्तीति ज्ञापितम्। तदेव समर्थयति—एकं सजातीयद्वितीयरहितम्। एव स्वगतद्वैतरहितम्। अद्वितीयं न विद्यते द्वितीयं यस्मिन्निति विजातीयद्वितीयरहितम्। तथाच प्रतीयमानस्य जगतो ब्रह्मवृत्त्यत्यन्ताभावप्रतियोगित्वलाभान्मिथ्यात्वसिद्धिः। श्रुत्यन्तरं नेहेति। इह ब्रह्मणि किंच-

न किमपि नाना भिन्नं वस्तु नास्तीत्यर्थः। श्रुत्यन्तरम्—अत इति। अतः आत्मनः सकाशात् अन्यत् माया तत्कार्यं आर्तं पीडितं आत्मतत्त्वसाक्षात्कारेण हतमिति यावत्। श्रुत्यन्तरमाह—अथेति अथ सोपाधिकस्वरूपोक्त्यनन्तरमतः ब्रह्मण एवावशेषात् आदेशः निर्देशः आकाशादिप्रपञ्चारोपः नेतिनेति निषेधदार्ढ्यायाभ्यासः। 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चेत्यादिना प्रतिपादितं सर्वं सोपाधिकं नास्तीत्यर्थः। एतदभिप्रायको नह्येतस्मादिति नेत्यन्यत्परमस्तीत्युत्तरभागः हि यस्मादेतस्माद्ब्रह्मणोऽन्यन्नास्तीति हेतोर्नेतिनेति निर्देशो न पुनर्ब्रह्म नास्तीत्यभिप्रायेण। कुतः? अन्यत्परमस्ति यतो निरस्तात् प्रपञ्चादन्यत् सर्वावभासकं ब्रह्मास्ति। सर्वबाधावधित्वेन तस्यावश्यकत्वात्। तथा च स्फुटमेव प्रपञ्चस्य मिथ्यात्वमिति भावः। आदिना 'इन्द्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शनमित्यादिमैत्रायणीयादिवाक्यपरिग्रहः। श्रुतिप्रमितं मिथ्यात्वं नानित्यत्वमात्रं किं तु शुक्तिरजतादेरिव त्रिकालबाध्यत्वमिति ज्ञापयितुमनुमानमाह—दृश्यत्वेनेति। प्रपञ्चो मिथ्या दृश्यत्वात्, शुक्तिरजतादिवदित्यनुमानादित्यर्थः। दृश्यत्वं साक्षिभास्यत्वं, मिथ्यात्वं स्वाश्रयनिष्ठत्रैकालिकात्यन्ताभावप्रतियोगित्वम्। तदेवमनात्मनो मिथ्यात्वेनाधिष्ठानत्वासंभवमुक्त्वात्माश्रयादिदोषेभ्योऽपि तमाह—आत्माध्यस्ततयैवेति सन् घट इत्यात्मनि कल्पितत्वेनैवेत्यर्थः। अनात्मनि नामरूपात्मके देहादौ सिद्धे वस्तुत्वेन सिद्धे तत्रानात्मनि आत्माध्यासः। आत्मन इदमंशस्येव संसृष्टरूपेणाध्यासो वाच्य इति शेषः। इत्थं च भवत्यात्माश्रयादिदोष इत्याह—अनात्माध्यासेन चेति। अज्ञानान्तःकरणादेरध्यासेन चेत्यर्थः। तत्र आत्मनि अनात्माध्यासः आत्माध्यासाधिष्ठानस्यानात्मनः साधकोऽनात्माध्यासः अध्यासमूलकत्वादनात्मनः, अध्यासस्य च सादृश्यादिमूलकत्वात्सादृश्यादेश्चानात्माध्यासमूलकत्वादिति, स्वाध्यासे स्वस्यापेक्षया आत्माश्रयः (१) अन्यकल्पने परस्परापेक्षाऽतोन्योन्याश्रयः (२) तदन्यकल्पने त्रयाणां परस्परापेक्षातश्चक्रकं (३) तत्राप्यन्यकल्पनेऽनवस्थेति (४) भावः। एतेनेति। आत्माश्रयादिदोषप्रसङ्गेन परास्तमित्यन्वयः। आत्मानात्माध्यासस्य आत्मानात्मनोः परस्पराध्यासस्य आविद्यकत्वात् दोषविधयाऽनाद्यविद्याप्रयुक्तत्वात् न विकल्पावसरः आत्मनि अनात्माध्यस्येतानात्मनि वात्मेति विकल्पस्यावकाशो नास्ति, द्वयोरप्यध्याससंभवेन विकल्पवैयर्थ्यादिति भावः। स्वप्रकाशेति। न जानामीत्यज्ञानस्याप्यवभासकतया सिद्धे स्वतःस्फूर्तिमतीत्यर्थः। अविद्याया आवरणात्मिकायाः। अपिशब्दाद्दोषान्तरस्य च अनुपपत्तेः तमःप्रकाशवद्विरोधेनासंभवात्। असंभवं प्रकटयति—तथाहीति। आत्माश्रयादीति। दोषसादृश्यादिकं विनात्मन्यविद्याध्यासासंभवात्तदर्थमपेक्षिताविद्याध्यासस्य स्वापेक्षात आत्माश्रयोऽविद्यान्तराध्यासाद्यपेक्षातोऽन्योन्याश्रय इत्यादिपूर्वोक्तप्रकारः स्फुट इति भावः। तस्या अविद्याया अनुच्छेदात् आत्मन इव नाशायोगात् अनिर्मोक्षप्रसङ्गः अज्ञाननिवृत्त्युपलक्षितस्वरूपावाप्तिरूपमोक्षाभावप्रसङ्गः। नन्वज्ञानाध्यासस्याप्यनादित्वान्नोक्तदोष इत्यतो दूषणान्तरमाह—सर्वस्येति। द्वैतजातस्येत्यर्थः। अध्यासमूलत्वे भ्रममात्रसिद्धत्वे शुक्तिज्ञानं प्रमा, रजतज्ञानं भ्रम इति व्यवस्था न स्यादित्यर्थः।

तयोर्बाध्यबाधकभावो न स्यादिति भावः । तेषां भ्रममात्रशरीरत्वेऽपि चितः प्रमाणत्वादिक-मङ्गीक्रियतेऽतो नाव्यवस्था तत्राह—एकस्यैवेति । अद्वितीयस्येत्यर्थः । प्रमाणत्वाद्युपपादक-धर्मादिना रहितस्येति यावत् । विरुद्धा अन्यतरसत्त्वेनासंभाविता । प्रमां प्रति करणत्वेऽङ्गीकृते प्रमाया विषयत्वमनुपपन्नम्, विषयत्वे तु विषयिप्रमारूपतानुपपन्ना, तथात्वे तदाश्रयत्वम-नुपपन्नम्, एवं परस्परमपीति संक्षेपः । ननु स्वतो विरुद्धाप्याध्यासिकोपाधिभेदेनाविरुद्धाऽत आह—अविरोधेति । अध्यस्ताहंत्वाद्याकारभेदेन ज्ञानमेव प्रमात्रादिरूपमिति सौगतमतादवि-शेषापत्तिरित्यर्थः ।

(संदीपनम्)

ननु दृष्टं हि लोके सामान्यरूपेण विशेषरूपेण वा ज्ञातमधिष्ठानं, ब्रह्म तद्विपरीतं च, कारणाभावा-न्नाध्यास इत्याक्षिपति—नन्विति । तस्येति । द्वयेति शेषः (?) निःसामान्यविशेषत्वेनेति । निर्गतौ सामान्यविशेषरूपौ धर्मौ यस्मात्तेन इदंत्वशुक्तित्वादिवत्सामान्यविशेषधर्मैरहितत्वाद्ब्रह्म नाधिष्ठानमित्यर्थः । भवतु मिथ्यात्वं किं तेन तत्राह—मिथ्यावस्तुन इति । एतदनुपपत्त्या चेत्स-त्यत्वमास्थीयते तर्हि अनिर्मोक्षप्रसङ्ग इत्याह—तस्य च सत्यत्व इति । आत्मवदिति शेषः । को ब्रवीति ज्ञानेन निवर्तत इति तत्राह—श्रुतिश्चेति । तस्येति । यदा ज्ञाननिवर्त्यत्वं तदा मिथ्यात्वसूचनं, यदा तु स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वादिकं तदा साक्षान्मिथ्यात्व-बोधनम् । एवं चागतं प्रपञ्चमात्रस्य मिथ्यात्वमित्यवधेयम् । एवमपि प्रपञ्चमात्रस्य मिथ्यात्वं नागतं किंतु हृदयग्रन्थ्यादेरिति हृदये निधाय सत्यभिन्नत्वं मिथ्यात्वम्, सत्यत्वं च श्रुतितात्पर्य-विषयीभूतत्वमित्याशयेनाह—एकमेवेति । प्रतीतिकालातिरिक्तकाले 'नास्ती'तिप्रतीतिविषयत्वं बाध्यत्वमिति दिक् । नापि द्वितीय इत्यत्र हेत्वन्तरमाह—आत्माध्यस्ततयेति । यदि चात्माध्य-स्ततयैवानात्मनि सिद्धे तत्रात्माध्यासः अनात्माध्यासेन चात्मनो दोषादिसंभवात्तत्रानात्माध्यास इति व्याकुरुषे तदात्माश्रयाऽन्योन्याश्रयादिदोष इत्यर्थः । प्रसङ्गाच्चेत्यत्र चकारस्तु मिथ्या-त्वाभ्युपगमादित्याद्यहेत्वपेक्षया बोध्यः । स्वप्रकाशात्मनीति । आच्छादिकाया इति शेषः । नहि सूर्येऽन्धकारोस्तीति कश्चिद्वदतीति भावः । पूर्वोक्तमात्माश्रयादिदोषमप्यापादयति—कथं-नात्माश्रयादीति । अस्यइति । अनध्यस्तस्य ज्ञाननिवर्त्यत्वाभावश्चेत्यपि बोध्यम् । सर्वस्येति । बाधितविषयकत्वं भ्रमत्वमबाधितविषयकत्वं च प्रमात्वमिति व्यवस्था न स्यादित्यर्थः । सौगतेति । यथा विज्ञानवादिनां सर्वं विज्ञानात्मकं न तदतिरिक्तोऽर्थोऽस्ति तथा त्वन्मतेऽपीत्यर्थः ।

**अत्रोच्यते,—'अहं मनुष्यः कर्ता भोक्ते' त्यादिप्रतीतिस्तावत् सर्वजन प्रसिद्धा सा च न स्मृतिरपरोक्षावभासत्वात्, भेदाग्रहपूर्वकत्वाच्च ।—**

(लघुव्याख्या.)

नन्वध्यासोऽपि नोपपद्यत इत्यादिना सौगतमतापत्तिरित्यन्तेनोक्तान् सर्वान् पूर्वपक्षान् समा-धातुं प्रतिजानीते—अत्रेति । प्रतीत्यन्यथानुपपत्त्या भ्रमसामग्रीं व्यवस्थापयिष्यन् प्रथमतः प्रतीतिं शोधयति—अहं मनुष्य इत्यादि । सूचीकटाहन्यायेन प्रथममख्यातिवादं निराचष्टे—सा चेति । अपरोक्षेति । मनुष्यं मां जानामीति प्रत्यक्षरूपतया प्रतीयमानत्वादित्यर्थः । ननु मनुष्योऽहमित्यादिप्रतीतिर्मनुष्यत्वाम्यात्मविषयापि देहाद्यंशे स्मृतिरूपाऽऽत्मांशे प्रत्यक्षरूपेति

तथा प्रतीयत इत्यत आह—भेदेति । भेदाग्रहजन्यविशिष्टबुद्धित्वादित्यर्थः । देहादिस्वामित्वविषयत्वे भेदग्रहपूर्वकत्वं स्याद्भेदग्रहं विना स्वस्वामिभावभानायोगादिति भावः ।

( संदीपनम् )

नन्वध्यासोऽपीत्यादिना पूर्वपक्षिणाऽऽक्षिप्तेऽध्यासे सिद्धान्ती समाधत्ते—अत्रोच्यतइति । भेदाग्रहपूर्वकत्वाच्चेति । नहि स्मृतौ भेदाग्रहः किंतु विशिष्टानुभवः, तथाचापरोक्षानुभव एवेति ।

**नापि प्रमा श्रुतियुक्तिबाधितत्वात् । तथाच श्रुतयः 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिःपुरुषः, अयमात्मा ब्रह्म, 'सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, य आत्मापहतपाप्मा यत्साक्षादपरोक्षाद्ब्रह्म, अयमात्मा सर्वान्तरः, योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति, स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसंगो ह्ययं पुरुषः, इत्याद्या अकर्तृभोक्तृपरमानन्दब्रह्मरूपतामात्मनो दर्शयन्ति ।—**

( लघुव्याख्या. )

विशिष्टप्रमारूपतां निराकरोति—नापि प्रमेति । श्रुतय इति । अकर्तृभोक्तृरूपतामात्मनो दर्शयन्ति इत्यनेनान्वेति । विज्ञानमयः बुद्ध्यभिमानी, प्राणेषु हृदि, अभिमानसंबन्धेन विद्यमानः प्राणाभिमानी, मनोभिमानीचेत्यर्थः । अन्तर्ज्योतिः जन्यज्ञानरूपबहिर्ज्योतिर्भिन्नः स्वप्रकाशः, पुरुषः सर्वदृश्यानुस्यूतः । अनेन कर्तृभोक्तृविज्ञानभेदलाभादकर्तृभोक्तृरूपतासिद्धिः । अयमात्मा जीवः ब्रह्म परमात्मा समानस्वभावत्वादिति भावः । अभेदोक्त्या चाकर्तृभोक्तृरूपतासिद्धिः । सत्यमिति । अत्रानन्तमित्यनेनापरिच्छिन्नत्वोक्त्या अभेदलाभात्तथार्थलाभः । विज्ञानमिति स्वप्रकाशचिद्रूपत्वोक्त्यात्रापि तथार्थलाभः । कर्त्रादिस्वरूपत्वे परिच्छिन्नत्वापत्त्या भासकत्वानुपपत्तेः । य आत्मेति । अपहतः पाप्मा कर्माशयो यस्मादित्यकर्तृभोक्तृरूप इत्यर्थः । यत्साक्षादिति । साक्षात् अगौणमपरोक्षात् अपरोक्षं स्वत एवापरोक्षं न घटादिवत्तत्तादात्म्येनापरोक्ष इत्यर्थः । अयमिति अपरोक्षः,सर्वान्तरः सर्वस्य कार्यजातस्यान्तरे स्थितः,अधिष्ठानतयेति भावः । तथा च सर्वदृश्याधिष्ठानतया सर्वावभासकत्वसूचनादकर्तृभोक्तृतासिद्धिः, अन्यथा भासकत्वानुपपत्तेरिति भावः । साक्षादेवाकर्तृत्वादिप्रतिपादिकां श्रुतिमुदाहरति—योऽशनायेति । अशितुमिच्छाऽशनाया पातुमिच्छा पिपासा ते प्राणधर्मौ, शोकः अज्ञानं मोहः प्रमादः तौ मनसः,जरा अङ्गजीर्णता मृत्युः प्राणवियोगः तौ स्थूलदेहस्य धर्मौ,अत्येति अतिक्रामति तद्रहित इत्यर्थः । श्रुत्यन्तरं स यदिति । सः अवस्थात्रयसाक्षी यत्किञ्चिद्दृश्यं तत्र जाग्रत्स्वप्नसुषुप्तिषु पश्यति साक्षात्करोति तेन दृश्येन अनन्वागतः असंस्पृष्टो भवति हि यस्मात् अयं अहमितिधिया व्यवह्रियमाणः असङ्गः सङ्गसामान्यरहितः भासकस्य भास्येन समं धर्मधर्मिभावप्रयोजकसंबन्धाभावादित्यन्यत्र विस्तरः । आद्यशब्देन 'अमूढो मूढवद्भुंक्ते माययैवेत्यादिश्रुतिपरिग्रहः ।

( संदीपनम् )

अहं मनुष्य इत्यादिप्रत्ययस्य मनुष्यत्वादिबाधिका बृहदारण्यकादिश्रुतीराह—'योऽयं विज्ञानमय इत्यादि । एतस्य पूर्वं कतम आत्मेति बोध्यम् । इयं श्रुतिस्तु ज्योतिर्ब्राह्मणस्था ।

अयमात्मा ब्रह्मेति श्रुतिस्तु मधुब्राह्मणस्था । 'अपूर्वमनपरमबाह्यमित्याद्या । विज्ञानमानन्दं ब्रह्मेति श्रुतिस्तु शाकल्यब्राह्मणस्था 'रातेर्दातुः परायणमित्यन्ता ॥ तैत्तिरीयकश्रुतिमाह—सत्यमिति । छान्दोग्यश्रुतिमाह—य आत्मेति । विजरो विमृत्युर्विशोको विजिघत्सोऽपिपास इत्यन्ता । उषस्तब्राह्मणस्थामाह—यत्साक्षादिति । कर्तृत्वादिबाधिकां कहोलब्राह्मणस्थां श्रुतिमाह—योऽशनायापिपासे इत्यादि । ज्योतिर्ब्राह्मणस्थां श्रुतिमाह—स यत्तत्रेति । अन्वागतोऽनुपक्तः ।

युक्तयश्च—विकारिणः परिच्छिन्नत्वेनानात्मत्वापत्तेः, स्वेनैव स्वस्य ग्रहणे कर्मकर्तृत्वविरोधात्, दृग्दृश्यसंबन्धानुपपत्तेः, भेदेनाभेदेन वा धर्मधर्मिभावानुपपत्तेश्च, ज्ञानानित्यत्वपक्षे तत्तद्व्यक्तिभेदध्वंसप्रागभावसमवायज्ञानत्वजात्याद्यभ्युपगमे गौरवात्, एकत्वाभ्युपगमे चातिलाघवात्, घटज्ञानं पटज्ञानमित्युपाधिभेदपुरस्कारेणैव ज्ञानभेदप्रतीतेः, स्वतस्तु ज्ञानं ज्ञानमित्येकरूपावगमात्, तदुत्पत्तिविनाशप्रतीत्योश्चावश्यकल्प्य—विषयसंबन्ध—विषयतयाप्युपपत्तेः, उपाधिपरामर्शमन्तरेण स्वत एव घटाद्घटान्तरस्य भेदप्रतीतेस्तत्प्रतिबन्दिग्रहासंभवात्, आकाशकालदिशामपि नानात्वापत्तेश्च, कर्तृत्वादेर्वास्तवत्वेऽनिर्मोक्षप्रसंगात्, स्वप्रकाशानभ्युपगमे च जगदान्ध्यप्रसङ्गात्, परमप्रेमास्पदत्वेन च तस्यानन्दरूपत्वात्, निर्धर्मकनित्यस्वप्रकाशसुखात्मक एवात्मेत्यादयः ।—

(लघुव्याख्या.)

श्रुतिबाधितत्वं प्रदर्श्य युक्तिबाधितत्वं प्रदर्शयति—युक्तय इति । इत्याद्या इत्यग्रेतनेनान्वेति । युक्तयोऽनुमानानि तदनुकूलतर्काश्च । तत्र निर्धर्मकनित्यस्वप्रकाशसुखात्मक एवात्मेत्यनेन वक्ष्यमाणवाक्येन आत्मा निर्धर्मको नित्यत्वात्, आत्मा नित्यः स्वप्रकाशसुखात्मकत्वादिति विवक्षितानुमानद्वयेऽनुकूलतर्कानाह—विकारिण इत्यादि । कर्तृत्वभोक्तृत्वरूपविकारवत आत्मनः परिच्छिन्नत्वेन—विभुत्वे भोगसाङ्कर्यात्, अणुत्वे सर्वदेहव्यापिसुखाद्यनुपलब्धेरवश्यवाच्यमध्यमपरिमाणवत्त्वेन—अनात्मत्वापत्तेः घटादेरिवात्मस्वरूपताभावापत्तेः, मध्यमपरिमाणवतो विनाशिन आत्मत्वायोगादिति भावः । तथा च यद्यात्मा सधर्मकः स्यात् तदाऽनात्मैव स्यादिति तर्कः पर्यवसितः (१) । तत्रात्मा यदि कर्तृत्वादिधर्मवान् स्यात्तदाहं कर्तेति द्रष्टा न स्याज्जडस्य मनआदेर्द्रष्टृत्वायोगात् कर्तृकर्मविरोधेन स्वेनैव स्वस्य ग्रहणायोगाच्चेति तर्कान्तरमाह—स्वेनेति । स्वेनात्मना स्वस्य कर्तृत्वादिमदात्मनः ग्रहणे विषयीकरणे, कर्ता द्रष्टा विषयी व्यवहर्तृत्वात्, कर्म दृश्यं विषयः व्यवहार्यत्वात्तत्र विरोधः द्रष्टृत्वे दृश्यत्वस्य, दृश्यत्वे द्रष्टृत्वस्यानुपपत्तिः । तयोरेकत्रासमावेशस्य साधनादिति भावः (२) । यद्यात्मा सधर्मकः स्यात्तदा निरूपणार्हतत्सम्बन्धवानपि स्यादिति तर्कान्तरमाह—दृग्दृश्येति । दृगात्मा भासकः दृश्यं कर्तृत्वादिकं तयोः संबन्धस्य तादात्म्यस्य समवायस्य वा अनुपपत्तेः असंभवात् । तथाहि—न तादात्म्यसंबन्धः, आत्मनो विनाशित्वापत्तेः । तदभिन्नधर्मनाशे तस्यापि नाशावश्यंभावात्, कूटस्थनित्यताभङ्गप्रसङ्गाच्च । धर्माणामप्यनाशे त्वनिर्मोक्षप्रसङ्गोऽशेषविशेषगुणवियोगस्यैव पुमर्थत्वोक्तेः । नापि समवायः । तस्य संबन्धत्वासंभवात् । तथाहि—संबन्धिभ्यां भिन्नत्वे सति संबन्धिनि संबन्धः । तत्र सम-

वायो न स्वेन संबन्धः । स्वेन स्वं वर्तत इति प्रतीत्यभावात् । नापि संबन्धान्तरेण, तस्य तस्यापि संबन्धान्तरापेक्षायामनवस्थापत्तेरिति संक्षेपः (३) । यद्यात्मा वस्तुतः कर्तृत्वादिमान् स्यात्तदा तैः सह धर्मधर्मिभावो निर्वचनार्हः स्यादिति तर्कान्तरमाह—भेदेनेति । भेदेनात्यन्तिकभेदेन, भेदसहिष्णुनाऽभेदेन, ऐक्येन वा धर्मधर्मिभावानुपपत्तेः, कर्तृत्वादीनां धर्मत्वस्य आत्मनो धर्मित्वस्यासंभवात् । अत्यन्तभेदनिबन्धनस्तादात्म्यैक्यनिबन्धनो वा धर्मधर्मिभावो न संभवतीति यावत् । तथाहि—तौ यद्यत्यन्तं भिन्नौ तदा हिमविन्ध्ययोरिव धर्मधर्मिभावो दूरपरास्तः । यदि भिन्नाभिन्नौ तदा आत्मनः कूटस्थत्वव्याघातः परिणामपरिणामिनोरेव तत्संभवात् । यद्यैक्यं तदा घटो घट इतिवद्धर्मधर्मिभावेन न व्यपदेशार्हौ, ऐक्ये तदसंभवात् । न च राहोः शिर इतिवद्भविष्यतीति वाच्यमनिर्मोक्षप्रसङ्गस्योक्तत्वादिति संक्षेपः । एतेन सम्बन्धानिरूपणेऽपि घटो नील इत्यादिवदहं कर्तेत्यादिप्रमोपपत्तेर्भ्रमवार्ता न युक्तेति निरस्तम्, अविकारित्वेनात्मनस्तद्वैषम्यात् (४) । आत्मा यदि कर्तृत्वादिधर्मवान् स्यात् तदा कालत्रयाव्यभिचारितद्भासकज्ञानस्वरूपो न स्यादिति मूलीभूतापाद्यव्यतिरेकनिश्चयसाधनायाह—ज्ञानेति । ज्ञानानित्यत्वपक्षे आत्ममनःसंयोगादिना ज्ञानमुत्पद्यते तच्च क्षणिकमिति पक्षे, तत्तद्व्यक्तीति तत्तज्ज्ञानव्यक्तयः, तासां भेदाः, ध्वंसाः प्रागभावाः समवायो ज्ञानत्वजातिः, आदिपदेन ज्ञानकरणतत्संबन्धादिकं चेत्येतेषां स्वीकारे गौरवादित्यर्थः । एकत्वाभ्युपगमे सर्वपदार्थगोचरैकैव ज्ञानव्यक्तिरिति स्वीकारे, अतिलाघवात् तस्या एवात्मत्वाङ्गीकारेण धर्म्यन्तराऽकल्पनातोऽतिलाघवात् । ननु यदि सर्वविषयकमेव ज्ञानं, का गतिस्तर्हि घटज्ञानं पटज्ञानाद्भिन्नमिति ज्ञानभेदप्रतीतेस्तत्राह—घटज्ञानमिति । घटज्ञानं पटज्ञानमित्यादौ य उपाधिभेदः अवच्छेदकवृत्तिविशेषस्तत्पुरस्कारेण तद्वैशिष्ट्येन ज्ञान—भेदप्रतीतेः घटज्ञानं पटज्ञानाद्भिन्नमिति घटमठादिनाकाशस्येव स्वरूपज्ञानस्य भेदप्रतीतेः । तथाच वस्तुतस्तत्र प्रमाणजन्यवृत्तीनां धात्वर्थरूपाणामेव भेदो विषयो न स्वरूपज्ञानस्य अनुव्यवसायस्थानीयस्य लाघवादेकत्वादिति भावः । एवकारार्थमाह—स्वत इति । उपाधिपुरस्कारं विनेत्यर्थः । एकरूपावगमात् एकाकारेणावभासमानत्वात् । तथाचात्रायं प्रयोगः—घटज्ञानं पटज्ञानात्स्वतो न भिद्यते, उपाधिपरामर्शमन्तरेणागृह्यमाणभेदवत्त्वात् गगनवत् । एकस्या एव संविदो गगनस्येवोपाधिभेदेन भिन्नव्यवहारोपपत्तौ स्वतस्तद्भेदकल्पनायां गौरवमिति दिक् । ज्ञानव्यक्तेरेकत्वादेव भेदप्रतीतिवदुत्पत्तिविनाशप्रतीतिरप्यन्यथासिद्धैवेत्याह—तदुत्पत्तीति । ज्ञानमुत्पन्नं नष्टमिति ज्ञानोत्पत्तिविनाशप्रतीत्योस्त्वित्यर्थः । अवश्यकल्प्येति । अवश्यकल्प्यो यो विषयस्य ज्ञानेन सह संबन्धः विषयविषयिभावप्रयोजकः, साक्षिणि विषयाकारवृत्तिप्रतिबिम्बितत्वरूपः, विषये प्रतिबिम्बाश्रयवृत्तिवैशिष्ट्यरूपस्तद्विषयतया विनाशित्वेन तद्विषयकत्वेन उपपत्तेः चरितार्थत्वात् । तादृशसंबन्धसत्त्व एव साक्षात्करोमीत्यादिप्रतीतेरसत्त्वे चाप्रतीतेस्तादृशसंबन्धनाश एव लाघवात्तादृशप्रतीत्योर्विषय इति भावः । अपिना वृत्तिनाशसमुच्चयः । नन्वेवं घटादेरपि स घट एतदघटाद्भिन्न इति तत्तेदन्तोपाधिपरामर्शेनैव भेदप्रतीतेः स्वरूपत एकत्वमस्तु

तत्राह—उपाधीति। तत्तद्व्यक्तिस्वरूपतत्तादेर्वक्ष्यमाणरीत्या स्वरूपत्वात्तदतिरिक्ततत्तद्देशकाल-विशिष्टत्वरूपोपाध्युल्लेखं विनेत्यर्थः। स्वत एव तत्तद्व्यक्तित्वाभ्यां भेदप्रतीतेः भेदप्रत्यक्षात् तत्प्रतिबन्दिग्रहासंभवात् ज्ञानैकत्वप्रतिबन्दिनो घटादेरेकत्वस्य ग्रहासंभवात्। घटादीनां भेद-प्रतीतेरुपाधिपरामर्शविषयकत्वं विनाप्युपपत्तेर्ज्ञानभेदप्रतीतिसमकक्षत्वाभावादिति संक्षेपः। स्वमते प्रतिबन्दिशङ्कामपाकृत्य परमते तामाह—आकाशेति। घटमठाद्युपाधिपुरस्कारेणैव भिन्नतया प्रतीयमानस्य वस्तुनः स्वतो भेदाङ्गीकारे घटाकाशो मठाकाशाद्भिन्नः, पूर्वकालो नोत्तरकालः, प्राची न प्रतीचीत्यादिप्रत्ययैराकाशकालदिशामपि स्वरूपतो नानात्वापत्तेरि-त्यर्थः। ज्ञानैकत्वनित्यत्वे प्रसाध्य निर्धर्मकत्वसाधकं, यदि वस्तुतः कर्तृत्वादिरूपधर्मवान् स्यात्तदा, प्रागभावासहवृत्तियावद्गुणनाशस्य धर्मिनाशनान्तरीयकत्वात्कर्तृत्वादेरनिवृत्त्याऽशेषगु-णनिवृत्तिरूपमोक्षभागी न स्यादिति तर्कान्तरमाह—कर्तृत्वादेरिति। कृतिमत्त्वादेरित्यर्थः। आदिपदेन प्रमातृभोक्तृत्वादेः परिग्रहः। अनिर्मोक्षेति। अशेषविशेषगुणनिवृत्तिरूपमोक्षस्या-संभवप्रसङ्गात्। स्वप्रकाशसुखरूपत्वान्नित्य इत्युक्तं तत्र हेतुतावच्छेदकं स्वप्रकाशत्वं साधयति—स्वप्रकाशेति। आत्मनः स्वप्रकाशत्वानङ्गीकारे जगतो दृश्यजातस्य आन्ध्यप्रसङ्गात् व्यव-हारानुपपत्तेरित्यर्थः। सर्वस्यापि जगतो मायिकत्वेन जडस्य प्रकाशकत्वासंभवादात्मनोऽप्यस्व-प्रकाशत्वेन प्रकाशान्तरसापेक्षस्य प्रकाशकत्वायोगाज्जगद्व्यवहारलोपप्रसङ्गात्, दृश्यजातव्यवहार-जनकः स्वतःस्फूर्तिमानात्मेति यावत्। हेतुं साधयति—परमेति। स्वत इच्छाविषयत्वेनेत्यर्थः। तस्य आत्मनः स्वतस्त्वं अन्यविषयकेच्छानधीनत्वम्। तथा चायं प्रयोगः—आत्मा सुखस्वरूपः, अन्यविषयकेच्छानधीनेच्छाविषयत्वात्। यन्नैवं तन्नैवम्। यथा पुत्रादि। तदिच्छायाः स्वीय-सुखेच्छाधीनत्वात्। आत्मनि तु स्वत इच्छाविषयत्वं, मा भूवं न किंतु भूयासमिति स्वानु-भवसिद्धमिति सुखरूपतासिद्धिरिति संक्षेपः। फलितमाह—निर्धर्मकेत्यादि।

## ( संदीपनम् )

'अहं मनुष्यः कर्तेत्यादिप्रत्ययस्य बाधिका श्रुतीरुपन्यस्य युक्तीरुपन्यस्यति—युक्तयश्चेति। सुखात्मक एवात्मेत्यादय इत्यनेनान्वयः। आत्मनः कर्तृत्वादिरूपविकारसत्त्वेन परिच्छिन्नत्वं प्रसाध्य तेनानात्मत्वं साधयति—विकारिण इति। इदं पूर्वमप्युक्तमभावप्रतियोगिनश्चामी इत्यादिना आत्मनो ज्ञानरूपविकाराङ्गीकारे दूषणमाह—स्वेनैवेति। 'मामहं न जानामीतिप्रत्यये एकस्या-त्मनः कर्तृत्वं कर्मत्वं च वक्तव्यं तच्च विरुद्धम्। विरोधमेव प्रदर्शयन्ति—तत्र केचन 'स्वतन्त्रः कर्ता। स्वातन्त्र्यमितरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वम्। एवं चैकस्यैव कर्तृत्वेनेतरकार-काप्रयोज्यत्वं कर्मत्वेनेतरकारकप्रयोज्यत्वरूपं विरोधमिति वदन्ति। अन्ये तु कर्तुरीप्सिततम-त्वेन प्रधानत्वं क्रियानिष्पादकत्वेन गुणत्वम्। तथा चैकस्यैव गुणत्वप्रधानत्वरूपं विरोधं वर्ण-यन्ति। परे तु पाणिनीयप्रथमाध्यायचतुर्थपादे 'आकडारादेका संज्ञेति प्रथमसूत्रेण कडाराः कर्मधारय इत्यतः पूर्वमेका संज्ञा विहिता। एवं च एकसंज्ञाधिकारे एकस्य कथं कर्तृसंज्ञा कर्म-संज्ञेत्युभयसंज्ञाविधानमिति विरोधमुद्भावयन्ति। दृग्दृश्यसंबन्धानुपपत्तेरिति॥ नच ज्ञानं विषयास-म्बद्धमेव प्रकाशकं सर्वेषां जीवानां सार्वज्ञ्यप्रसङ्गात्, नापि संबद्धमात्मस्वरूपस्य तद्गुणस्य वा

ज्ञानस्य विषयेण सह संयोगसमवायरूपसंवन्धान्यतराभावात्। ज्ञानेऽध्यस्तो विषयं इत्याध्यासिकसम्बन्धानङ्गीकारे अन्यस्य साक्षाद्विशिष्टप्रतीतिजनकस्य संवन्धस्याभावात् । नच विषयविषयिभावरूपोऽस्तु स इति वाच्यम्। तस्य विषयत्वविषयित्वरूपत्वादेकमात्रनिष्ठत्वेन संवन्धस्योभयनिष्ठतया विशिष्टप्रत्ययजनकत्वक्षतेश्च तस्य दुर्निरूपत्वाच्च । तथा हि तस्यातिरिक्तत्वेऽपसिद्धान्तात्, अनतिरिक्तत्वेऽपि किं ज्ञानजन्यफलाधारत्वं किं वा ज्ञानजन्यहानादिवुद्धिगोचरत्वम्। तत्र नाद्यः। ज्ञाततारूपफलस्यानङ्गीकारात् । अतीतादावभावाच्च । नापि द्वितीयः। गगनादौ तदभावाच्च। महारजतमलादेरपि तज्ज्ञानप्रसङ्गाच्च। एवमन्यदपि वहुविधमाशङ्क्य निराकृतमद्वैतसिद्धौ गुरुचरणैः। तदपि च विवेचितं मया मत्कृतसिद्धिसाधके । नापि ज्ञानविषययोर्विषयत्वं स्वरूपसंवन्धविशेषः असिद्धेः । तथा हि स्वरूपसंवन्ध इत्यस्य स्वरूपत्वं सम्बन्ध इत्यर्थे संयोगसमवाययोरतिव्याप्तिस्तयोरपि स्वरूपत्वात्। नच संयोगसमवायान्यस्वरूपत्वं, हिमवद्विन्ध्ययोरपि स्वरूपसंवन्धापत्तेः। अथ संवन्धान्तरमन्तरेण विशिष्टप्रमितिजननयोग्यत्वं स्वरूपसंवन्ध इतिचेन्न। आत्मानं जानामीत्यत्राव्याप्तेः। तत्र संवन्धान्तरस्य समवायस्यैव सत्त्वादतीन्द्रिये आकाशाभावादावव्याप्तेश्च। नहि तस्य विशिष्टप्रतीतिजननयोग्यत्वे मानमस्ति । अन्यथा तेन विशिष्टप्रत्ययजननापत्तेः। किंच विशिष्टप्रतीतिजननयोग्यत्वं धर्मो वा सम्बन्धस्तादृशं स्वरूपद्वयमेव वा॥ आद्ये स्वरूपस्य सम्वन्धत्वव्याघातः प्रतीतिघटितस्य चाक्षुषादिज्ञानागोचरत्वप्रसङ्गश्च। न द्वितीयः अननुगमात्। किंच स्वरूपस्य संवन्धत्वे घटाभावभ्रमाद्यनुपपत्तिः । अभावभ्रमस्थले घटतदभावयोरन्यतरस्य स्वरूपरूपसंवन्धस्य सत्त्वेन विशिष्टप्रमासंभवात् । नच संवन्धान्तरमन्तरेण विशिष्टप्रमाजननयोग्यत्वं वक्तव्यम् । वास्तवसम्वन्धत्वे प्रमात्त्वस्यापाद्यत्वादन्यथा तत्र तस्याप्रमात्वे संवन्धाभावः। संवन्धाभावे च तस्याप्रमात्वमित्यन्योन्याश्रयात्। किंच ज्ञानस्याभावः ज्ञातोऽभाव इति प्रतीत्योर्वैलक्षण्यं न स्यात्। ज्ञानाभावयोरेवोभयत्र स्वरूपसंवन्धत्वे विषयकृतविशेषाभावात्। तस्मात्सुष्ठूक्तमध्यासं विना दृग्दृश्यसंवन्धानुपपत्तिरिति दिक्॥ **भेदेनेति**। अत्यन्तभेदे गौरश्व इत्यादौ धर्मधर्मिभावानुपपत्तिरेवमत्यन्ताभेदेऽपि घटस्य न धर्मिभाव इत्यर्थः। अहं मनुष्यः कर्तेत्यादिप्रतीतिवाधिका युक्तीरन्यस्य ज्ञाननित्यत्वसाधनोपयोगितया ज्ञानानित्यत्वं दूषयति—**ज्ञानानित्यत्वपक्ष** इति। ननु ज्ञानानित्यत्वपक्षे एकपुरुषीयज्ञानेऽपि निर्वाहो नास्ति एकस्मिन्नष्टे अन्येषामुत्पादात् किमुत वहुपुरुषज्ञाने इत्याशयेनाह—**तत्तद्व्यक्तिभेद** इति। ज्ञाननित्यत्वपक्षे उक्तदोषाभाव इत्याह—**एकत्वाभ्युपगमे चेति** । ज्ञानैक्यपक्षे अस्माज्ज्ञानादिदं ज्ञानं भिन्नमित्यत्र का गतिरित्यत आह—**घटज्ञानमिति**। अत्र चैतन्यत्वं घटविषयत्वादिकमेवेति नोक्तदोष इति भावः॥ नन्वेवमपि ज्ञानोत्पत्तिविनाशयोः का गतिरत आह—**तदुत्पत्तीति**॥ ककारो नष्ट इति प्रत्ययस्य, यथा वायुसंयोगनाशविषयकत्वं यथा वा स्वर्गी नष्ट इति प्रत्ययस्य स्वर्गविषयकत्वं, यथा दण्डपुरुषोभयसत्त्वे दण्डी नष्ट इति प्रत्ययस्य एतदुभयसंयोगध्वंसविषयकत्वं, यथा नाहं विद्वाञ्जातः, घटाकाश उत्पन्नः, कूपाकाश उत्पन्नः, घटाकाशो नष्टः, कूपाकाशो नष्ट इति प्रत्ययस्य नात्माकाशविषयत्वमपि तु विद्याघटादिविषयत्वं, तथा घटज्ञानं नष्टमिति प्रत्ययस्य न ज्ञानविषयत्वं किंतु तदुभयोः संवन्धविषयकत्वमित्यर्थः। अन्यविषयकप्रत्ययस्यान्यविषयकत्वं सर्ववादिसिद्धं तच्चाधस्तात्प्रदर्शितम्। नच घटाकारा वृत्तिरेव ज्ञानं तस्य च विनाशित्वेन कथं तदपलाप इति वाच्यम्। विषयात्मरूपज्ञानयोः सम्वन्धरूपा वृत्तिर्न तु ज्ञानं, ज्ञानस्य नित्यस्वरूपत्वसुखस्वरूपत्वादिकं तद्विरुद्धम्, 'नित्यं विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतिप्रसिद्धं गुरुचरणप्रदर्शितयुक्तिविरुद्धं च। नच तवापि

शास्त्रे वृत्तौ ज्ञानपदप्रयोगो दृश्यत इति वाच्यम्। वृत्त्यवच्छिन्नचैतन्ये ज्ञानपदप्रयोगात्, नतु केवलवृत्तौ। असंबद्धस्य भासकत्वे तवाप्यतिप्रसङ्गवन्ममाप्यतिप्रसङ्गात्। एवं च ज्ञानविषययोः संबन्धो वक्तव्यः स चास्मन्मते वृत्तिः, परेषां तु पदार्थान्तरम्। उक्तं च नव्यैरपि विषयत्वादयोऽप्यतिरिक्ता एव पदार्था इति दिक्। तर्हि घटादेरपि भेदो न स्यात्तत्राह—**उपाधीति**। यद्यौपाधिकभेदेन वस्तुभेदः साध्यते तर्ह्यतिप्रसङ्ग इत्याह—**आकाशेति**। अहं मनुष्यः कर्तेत्यत्र यदि कर्तृत्वं वास्तवं तत्र दूषणमाह—**कर्तृत्वादेरिति**। तदुक्तं **वार्तिककारपादैः**—आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम्। नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेरिति। 'हर्षशोकभयक्रोधेत्यादिना, 'कुर्वन्त्यचेतनाः काममित्यादिना चात्मनः कर्तृत्वादिकं वास्तवं नास्तीत्यावेदितमधस्तादिति। 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुत्या सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमिति **विवरणेन** च सर्वं चैतन्यभास्यमित्युक्तं तच्च तस्य जडत्वे न संभवतीत्याह—**स्वप्रकाशेति**। **आन्ध्यप्रसङ्गादिति**। अप्रकाशप्रसङ्गादित्यर्थः। आनन्दरूपत्वं साधयति **परमेति**। अत्रार्थे भागवतस्मृतिरपि प्रमाणम्—

> स वै प्रियतमश्चात्मा यतो न भयमण्वपि।
> इति वेद स वै विद्वान्यो विद्वान् स गुरुर्हरिरिति॥

**तस्मात्परिशेषाद्भ्रान्तिरियमिति स्थिते, तत्कारणमपि योग्यं किंचित्कल्पनीयम्। कल्प्यमानं च तदद्वितीयात्मन्यध्यस्ततयैव धर्मिग्राहकमानेन सिध्यतीति 'न जानामी' तिसाक्षिप्रतीति—सिद्धमनिर्वाच्यमज्ञानमेवैतत्। नचेदमभावरूपं, ज्ञानस्य नित्यत्वेन तदभावानुपपत्तिरित्युक्तत्वात्, धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां च व्याघातापत्तेः।—**

(लघुव्याख्या.)

उपसंहरति—**तस्मादिति**। श्रुतियुक्तिभिरकर्तृभोक्तृरूपतालाभादित्यर्थः। **परिशेषात्** स्मृतित्वप्रमात्वयोर्बाधात् इयं 'अहं कर्ता मनुष्यः इत्यादिधीः। **तत्कारणमपि** भ्रान्तेः कारणमपि **योग्यं** भ्रमत्वनिर्वाहकं परिणामितासमर्थं च किंचिद्भावरूपं **कल्पनीयम**नुमेयम्। अहं मनुष्य इत्यादिभ्रमः सोपादानकः, कार्यत्वाद्घटवदित्याद्यनुमानेनानुमेयमिति भावः। नन्वनुमानप्रमाणसिद्धस्य तस्य प्रामाणिकत्वेन सत्यत्वापत्तेरद्वैतानुपपत्तिस्तत्राह—**कल्प्यमानमिति**। श्रुतियुक्तिसिद्धाद्वैतान्यथानुपपत्त्या द्वैतभ्रमकारणतया कल्प्यमानमित्यर्थः। **अद्वितीयात्मनि** द्वितीयसामान्याभाववति **धर्मिग्राहकमानेन** अद्वितीयत्वान्यथानुपपत्तिगर्भिततत्कल्पकानुमानेन **अध्यस्तमेव** प्रतीतिमात्रशरीरमेव **सिध्यति** अनुमितिविषयो भवति। अध्यस्ततयैवेति पाठे तु कल्पितत्वेनैव सिध्यति कल्पितत्वप्रकारकानुमितिविषयो भवतीति यावत्। अद्वैतश्रुत्या सत्यत्वबाधादिति भावः। न केवलमानुमानिकं किंतु प्रत्यक्षसिद्धमपीत्याह—**न जानामीति**। भ्रममात्रशरीरत्वात् न जानामीत्याकारकसाक्षिरूपप्रतीतिविषयसदसद्भिन्नाज्ञानमेव **तत्** कल्प्यमानम्। तथाच प्रत्यक्षानुमानयोरेकविषयत्वे लाघवात् 'नजानामीति पदमधर्मादिपदवद्भावपरमेव नाभावपरमिति भावः। ज्ञानाभावसमनियतस्य ज्ञानाभावरूपतायामपि लाघवमस्तीत्याशङ्क्य प्रत्यक्षप्रतीतेरभावपरत्वं कण्ठतो वारयति—**नचेदमिति**। इदं उक्तप्रतीतिसिद्धमज्ञान-

मभावरूपं ज्ञानाभावरूपं ज्ञानस्य ज्ञानत्वेन प्रतिपादितसाक्षिव्यक्तेर्नित्यत्वेन ध्वंसप्रागभावाप्रतियोगित्वेन तदभावानुपपत्तेः स्वरूपज्ञानाभावस्यासंभवात् । अस्तु तर्हि वृत्तिज्ञानाभाव एव तद्विषयस्तत्राह—धर्मीति । धर्मी अहमर्थः प्रतियोगी ज्ञानं तयोर्ज्ञानसत्त्वे ज्ञानसामान्याभावस्यासिद्ध्या तादृशप्रत्ययस्याप्रमात्वप्रसङ्गो व्याघातः । ज्ञानासत्त्वे तु 'न जानामीति ज्ञानाभावप्रमाया अनुत्पत्तिप्रसङ्गो व्याघातः । धर्मिप्रतियोगिनोर्ज्ञानस्याभावबुद्धिकारणत्वात्तयोर्ज्ञानं विना तादृशप्रमोत्पत्तेरसंभवादित्यर्थः । ननु सामान्यतो 'न जानामीत्यहमज्ञ इत्यादिप्रतीतिर्नास्त्येव किंत्वहमात्मानं न जानामीत्याद्याकारिकैव, तस्याश्चात्मादिज्ञानप्रागभाव एव विषयो लाघवादिति नाज्ञानसिद्धिरिति चेन्न । यथाकथंचिद्यत्किंचिदात्मज्ञानव्यक्तिसत्त्वे सामान्यतो ज्ञानप्रागभावविषयकत्वस्य वक्तुमशक्यत्वात् । विशेषज्ञानत्वग्रहं विनापि तादृशप्रतीतेर्विशेषव्यक्तिप्रागभावविषयकत्वस्याप्ययोगादित्यत्र विस्तरः ।

( संदीपनम् )

तस्मादिति । अहं मनुष्यः कर्ता भोक्तेत्यादिप्रतीतिर्भ्रान्तिरित्यर्थः । साधकमाह—न जानामीति । ज्ञानस्येति । ज्ञानस्य नित्यत्वेन त्रिविधपरिच्छेदशून्यत्वं, तथा च कथं तदभाव इत्यर्थः । तुष्यतु दुर्जन इति न्यायेन परमतमालम्ब्य वास्त्वभावस्तथापि न त्वदिष्टसिद्धिरित्याह—धर्मीति । मयि घटज्ञानं नास्ति, ज्ञानं नास्तीति वा वक्तव्यम् । उभयथाप्ययं सामान्याभावः, स च यत्किञ्चित्प्रतियोगिसत्त्वविरोधी । यदि च प्रतियोगिनो घटज्ञानस्य ज्ञानमस्ति तर्हि ज्ञानज्ञानस्य विषयविषयकत्वनियमेनास्ति घटज्ञानरूपः प्रतियोगी, कुतस्तदभावः सामान्याभावरूपविषयाभावाच्च न तस्य ज्ञानं, यदि च न प्रतियोगिज्ञानं तदा सुतरामेव नाभावज्ञानं, प्रतियोगिज्ञानरूपकारणाभावात् । एवं ज्ञानं नास्तीत्यत्रापि यदि धर्मिप्रतियोगिज्ञानं तदा ज्ञानमस्ति, न तत्सामान्याभावस्तथा च कुतस्तस्य ज्ञानम् । नहि विषयाभावे ज्ञानं जायते जायमानं चाप्रमाऽप्रमा च न स्वविषयसाधिका । यदि च ज्ञानरूपस्य प्रतियोगिनो न ज्ञानं तदा न सुतरां तदभावज्ञानं प्रतियोगिज्ञानरूपकारणाभावादित्यर्थः ।

**नापि भ्रमसंशयतत्संस्कारपरंपरारूपम्, अपरोक्षत्वात्, अतीतानागतभ्रमसंशयतत्संस्काराणां परोक्षत्वेन ज्ञातुमशक्यत्वात्, आवरणात्मकत्वात्, भ्रमाद्युपादानत्वाच्च, आत्मनो निर्विकारत्वात्, अन्तःकरणादेस्तज्जन्यत्वात्, 'देवात्मशक्तिं स्वगुणैर्निगूढामिति गुणवत्त्वश्रुतेश्च, मायां तु प्रकृतिं विद्यात्, इन्द्रो मायाभिः पुरुरूप ईयते, अनृतेन हि प्रत्यूढा नीहारेण प्रावृता भूयश्चान्ते विश्वमायानिवृत्तिरित्यादिश्रुतिभ्यश्च, मायाविद्याशब्दवाच्यमनिर्वाच्यमनृतं तत्वज्ञाननिवर्त्यं चाज्ञानमेव स्वपराध्यासे कारणम् । न चात्माश्रयादिदोषप्रसङ्गोऽनादित्वेन तन्निरासात् । अनादित्वेनोत्पत्त्यभावात् । स्वप्रकाशात्मन एव तज्ज्ञप्तिरूपत्वात् ।**

( लघुव्याख्या. )

साङ्ख्यमतं निराकरोति—नापीति । इदमित्यनुषज्यते । भ्रममात्रं नाज्ञानं दिनद्वयादिवर्तिन एकाज्ञानस्य प्रत्यभिज्ञानादतो भ्रमादिपरम्परारूपं वाच्यं, तथाच नापरोक्षतया प्रतीयेत

इत्याशयेनाह—अतीतेति । ज्ञातुमशक्यत्वात् 'न जानामीत्यपरोक्षतया ग्रहीतुमशक्यत्वात् । ननु सुरभि चन्दनमित्यादौ सौरभांशे परोक्षमपि चन्दनांशेऽपरोक्षं यथा तथा 'न जानामी'-त्यादिकमप्यतीताद्यंशे परोक्षमपि वर्तमानाद्यंशेऽपरोक्षमतोऽज्ञानस्य भ्रमाद्यात्मत्वे न किमपि बाधकमित्यत आह—आवरणेति । 'अज्ञानेनावृतं ज्ञानम्'मित्यादिना प्रतीयमानावरणशक्त्यात्मकत्वादित्यर्थः । अनेकभ्रमादिव्यक्तीनामावरणात्मकत्वकल्पनापेक्षयावरणात्मकत्वेनैकव्यक्तिकल्पनाया एव लघीयस्त्वादिति भावः । ननु कल्प्यापेक्षया क्लृप्तभ्रमवृत्तीनामेव विरुद्धव्यवहारजनकत्वरूपावरणात्मत्वमुचितं, धर्मिकल्पनातो धर्मकल्पनाया एव लघुत्वादित्यत आह—भ्रमेति । भ्रमादेः कार्यत्वेन सोपादानत्वावश्यकत्वात्तदुपादानभूतैकव्यक्तिरेवाज्ञानपदवाच्या, लाघवादिति भावः । नन्वात्मैवास्तूपादानं तत्राह—आत्मन इति । अनात्मनामधिष्ठानभूतेत्यर्थः । निर्विकारत्वात् । तर्ह्यन्तःकरणमेवोपादानमस्तु भ्रमाश्रयतया क्लृप्तत्वादिति तत्राह—अन्तःकरणादेरिति । आदिपदेन प्राथमिकवीक्षणरूपकार्यपरिग्रहः । जन्यत्वात् कार्यत्वात् । तथा च प्राथमिककार्येष्वपि वीक्षणान्तःकरणादिषु सर्वेषु परिणामिकारणतयावश्यकल्पनीयाज्ञानस्य भ्रमादिष्वपि परिणामित्वं कल्प्यते लाघवादिति भावः । बीजाङ्कुरन्यायेनान्तःकरणतत्संस्काराणामेव कारणत्वसंभवान्नैकमज्ञानं प्रामाणिकमत आह— देवेति । देवस्य स्वप्रकाशस्य ब्रह्मणः आत्मशक्तिं निजशक्तिं स्वगुणैः स्वावयवात्मकगुणैः सत्त्वरजस्तमोगुणैः निगूढां व्याप्ताम् । अत्र पूर्वार्धे किंकारणं ब्रह्मेत्युपक्रम्य 'ते ध्यानयोगानुगता अपश्यन्निति' । तथा च मायाया एव सकलकारणत्वलाभान्न केवलं कार्याणामेवान्योन्यं बीजाङ्कुरन्यायेन कारणतेति संक्षेपः । ननु सा शक्तिरीश्वरज्ञानादिरूपैवास्तु तत्राह—गुणवत्त्वेति स्वगुणैर्निगूढामिति गुणवत्त्वश्रुत्या न ज्ञानादिरूपा गुणवत्त्वाभावादिति भावः । ननु स्वगुणैरित्यस्य स्वस्य जन्यैर्गुणैर्जीवादृष्टादिभिर्विशिष्टामित्यर्थः । तथाच नाभीप्सितार्थसिद्धिरित्यतः श्रुत्यन्तरमाह—मायामिति । अजामेकामिति श्रुतिप्रतिपादितसत्त्वरजस्तमोगुणात्मिकां मायां प्रकर्षेण करोतीति प्रकृतिं कारणं मायिनं मायाश्रयं मायाविषयं वा । नन्वत्रापि 'मय ज्ञाने' इति धात्वनुसाराज्ज्ञानात्मिकैव शक्तिरस्त्वित्यतः श्रुत्यन्तरमाह—इन्द्र इति । इन्द्रः परमेश्वरो निरुपाधिः मायाभिः सत्त्वरजस्तमोरूपाभिः शक्तिभिः पुरुरूपः ईयते गम्यते ज्ञायत इति यावत् । अजामेकामित्यादिना गुणत्रयात्मिकायाः शक्तेरेवोपक्रमात् । ननूक्तमजामेकामित्यत्र लोहितशुक्लकृष्णशब्दानामिच्छाज्ञानकृतिपरत्वमत आह श्रुत्यन्तरं—अनृतेनेति । 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्ब्रह्म गच्छन्त्यो न तं विन्दन्तीति पूर्वार्धम् । अयमर्थः—प्रजाः जीवाः अहरहः सर्वदा सुषुप्तौ ब्रह्म गच्छन्त्योऽपि स्थूलसूक्ष्मोपाधिलयेन तदभिमानकृतब्रह्मभेदशून्या अपि, ब्रह्म न जानन्ति हि यस्मात् अनृतेन मिथ्याभूतेनाज्ञानेन प्रत्यूढाः आच्छादितस्वरूपकाः ऋतं ब्रह्म, सत्यं ज्ञानमिति श्रुतेस्तद्भिन्नमज्ञानमनृतम् । अज्ञानेनावृतं ज्ञानमिति भगवदुक्तेरिति भावः । ननु ऋतशब्दस्य ' ऋतं सत्यं तथा धर्मः ' इति धर्मशास्त्रेण धर्मेऽपि प्रयोगादनृतपदेन तद्भिन्नं दुष्कृतमेव ग्राह्यम् । तथाच तेनाच्छादिताः

प्रतिबद्धाः ब्रह्म न जानन्तीति तत्रार्थोऽतः कथमज्ञानसिद्धिस्तत्र श्रुत्यन्तरमाह—नीहारेणेति। 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूवेति पूर्वार्धम्, जल्प्या चासुतृप उक्थशासश्चरन्तीत्युत्तरार्धम्। अयमर्थः—तमात्मानं यूयं न विदाथ न वेत्थ य इमाः प्रजा जजान जनयामास, कुतो न विद्मस्तत्राह—अन्यदन्तरं परमात्मनोऽन्यदावरकं बभूव अस्ति कथं स्वप्रकाशस्यावरकमस्ति तत्राह—नीहारेणेति तुषारेणेव सूर्यवदाच्छादिता इत्यर्थः। प्रकाश्यमपि प्रकाशकस्य वस्तुमाहात्म्यादाच्छादकं भवत्येव, अनुभवसिद्धे तर्कानवकाशादित्यर्थः। न केवलमज्ञानेनाच्छादिताः। किन्तु अन्येनापीत्याह—जल्प्येति। जल्पनं जल्पिः कुतर्कस्तेनेत्यर्थः। न केवलं तैरेवाच्छादिताः किन्तु कर्मवासनयापीत्याह—उक्थेति। उक्थं कर्म शंसतीत्युक्थशासः कर्म कुर्वाणाः सन्तः चरन्ति भ्रमन्ति अतो बहिर्मुखत्वादात्मस्वरूपं न जानन्तीत्यर्थः। ननु मिथ्याज्ञानवासनैव प्रतिबन्धकत्वेन तत्रार्थोऽस्त्वित्यतः श्रुत्यन्तरमाह—भूय इति। 'तस्याभिध्यानाद्योजनात्तत्त्वभावादिति पूर्वार्धम्। तस्य आत्मनः अभिध्यानात् चिन्तनात् श्रवणमननाभ्यामिति यावत्, योजनात् योगान्निदिध्यासनात्, तत्त्वभावात् साक्षात्काररूपतत्त्वप्राप्तेः, विश्वस्य हेतुभूताया आवरणात्मिकाया मायायाः निवृत्तिः। अन्ते प्रारब्धभोगान्ते भूयश्च पुनरपि विक्षेपरूपाया निवृत्तिरित्यर्थः। तथा च ज्ञानादज्ञाननाशद्वारा जगन्नाशोक्तेरनाद्यज्ञानमेवावरकं जगदुपादानं सिध्यति। उपादाननाशेनैवोपादेयनाशसंभवादिति भावः। ननु निवृत्तिपदेन तरणमात्रं लभ्यते न नाशः। 'मायामेतां तरन्तीति भगवदुक्तेः। 'तरति शोकमात्मविदिति श्रुतेश्च। तरणं चासंबन्धमात्रमतो न ज्ञाननाश्यमज्ञानं तत्र सिध्यतीत्यत आह—आदीति। 'एवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति। माया चाविद्या च स्वयमेव भवतीत्यादिश्रुतिपरिग्रहः। श्रुतिभ्यश्चेति चकारात् 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः इत्यादिस्मृतेरज्ञानं विना जीवस्यानवच्छिन्नानन्दाऽप्रकाशानुपपत्तिरूपार्थापत्तेश्च परिग्रहः। तथा च माया न ज्ञानादिरूपा किंतु ज्ञाननाश्याऽविद्यैव, श्रुत्यैव मायाविद्ययोरेकत्वसमर्थनादिति भावः। तस्मात्तत्तन्मतबाधेन वेदान्तिमतसिद्धा मायैव जगदुपादानत्वेन श्रुतिसिद्धेत्याह—मायेत्यादि। सत्त्वादिगुणात्मिका, न ज्ञानात्मिका, किंतु अविद्या विद्यानाश्या अतो न साङ्ख्याभिमता प्रकृतिः किन्त्वनिर्वाच्यमज्ञानमेवेत्यन्वयः। तदपि न मिथ्याज्ञानवासनारूपं किन्तु अनृतं सद्भिन्नं, तदपि न दुष्कृतं किंतु तत्त्वज्ञाननिवर्त्यं साक्षादधिष्ठानसाक्षात्कारनाश्यमित्यर्थः। कार्यादिकं च नैतादृशं परेषामिति भावः। पूर्वोक्तात्माश्रयादिदोषं परिहरिष्यन्नाह—नचेति। अनादीति। स्वरूपस्य ज्ञप्तेश्चानादित्वादुभयत्रापि नात्माश्रयादिप्रसक्तिरित्याह—अनादित्वेनेति। अज्ञानस्यानादित्वेनैवेत्यर्थः। तन्निरासात् आत्माश्रयादिनिरासात्। एतेनोत्पत्तौ तन्निरासः। ज्ञप्तावप्याह—स्वप्रकाशेति। स्वप्रकाशसाक्षिण एव तज्ज्ञप्तिरूपत्वात् अज्ञानाध्यासरूपत्वात्। तथा च तस्याप्यनादित्वान्न तत्राप्यात्माश्रयादिदोषः। उभयत्र कारणस्यानपेक्षणादिति भावः। ननु तर्हि न कल्पितत्वमज्ञानस्य जन्यस्यैव रजतादेः कल्पितत्वदर्शनात्। जन्यत्वे चानादित्वभङ्ग इति चेन्न। बाधितरूपकल्पितत्वस्यैव तत्राङ्गीकारात्। कल्पितशब्दस्योत्प्रेक्षामात्रपरत्वादिन्यत्र विस्तरः।

(संदीपनम्)

संस्कारस्यातीन्द्रियत्वमित्यभिप्रेत्याह—**अपरोक्षत्वादिति** । भ्रमादीनामप्यपरोक्षत्वे बाधकमाह—**अतीतेति** । **आवरणात्मकत्वादिति** । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव इत्याद्याः स्मृतयो भावरूपाज्ञानस्य ज्ञानस्वरूपात्मन आवरकत्वे प्रमाणं, वृत्तिज्ञानस्याज्ञानावृतत्वं नोक्तिसंभवमभावस्य चावरकत्वं न दृष्टं न श्रुतमित्याशयः ॥ भ्रमसंशयादीनामपि भावकार्यत्वेनोपादानं वक्तव्यं तदपि च विवक्षितविवेकेनाज्ञानमेवेत्याह—**भ्रमेति** । तथाचागतं भ्रमाद्यतिरिक्ताज्ञानेन, स्वस्य स्वानुपादानत्वादित्याशयः । आत्माऽन्तःकरणं वोपादानमस्तु तत्राद्यमभिप्रेत्याह—**आत्मन इति** । अन्त्यमभिप्रेत्याह—**अन्तःकरणादेरिति** । तस्याप्यनिर्वचनीयस्य जन्यत्वेनोपादानगवेषणायामज्ञानमेव पर्यवसितमिति भावः । श्वेताश्वतरश्रुतिमुदाहरति—**देवेति** । इतः पूर्ववाक्यं, ते ध्यानयोगानुगता अपश्यन्निति । स्वगुणैर्निगूढामित्यनेन गुणवत्त्वश्रुतेर्नाभाव इति भावः । तत्रैव च चतुर्थाध्याये **मायां** त्विति । विद्यादित्यनन्तरं 'मायिनं तु महेश्वरमिति बोध्यम् । इतः पूर्ववाक्यं 'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्ध इत्यन्तम् । बृहदारण्यकवाक्यमाह—**इन्द्र** इति छान्दोग्यदशमाध्यायीयश्रुतिमुदाहरति—**अनृतेनेति** । एतस्य पूर्ववाक्यं 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरिसंचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति । तत्र हेतुमाह—**अनृतेन हि प्रत्यूढा इति** । असत्येनाच्छादिता इत्यर्थः । वाजसनेयसंहितायाः सप्तमाध्यायस्थकण्डिकावर्तिवाक्यमाह—**नीहारेणेति** । तद्यथा कण्डिका 'न तं विदाथ य इमा जजानान्यद्युस्माकमन्तरं बभूव नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्तीति । श्वेताश्वतरस्थप्रथमाध्यायवाक्यमाह—**भूयइति** । एतस्य पूर्ववाक्यं 'तस्याभिधानाद्योजनात्तत्त्वभावादित्यन्तम् । नन्वविद्याध्यासे सैवाविद्या चेत्कारणं तर्हि आत्माश्रयः, अन्याविद्याचेतदविद्याध्यासे कारणं तर्ह्यन्योन्याश्रयः, तदध्याससिद्धौ एतदध्यास एतदध्याससिद्धौ च तदध्यास इत्याशङ्क्याह—**न चेति**। ननूत्पत्तावात्माश्रयः ज्ञप्तौ वा । नाद्य इत्याह—**अनादित्वेनेति** । नान्त्य इत्याह—**स्वप्रकाशेति** ।

तेनाज्ञानाध्यासविशिष्टे चैतन्येऽहङ्काराध्यासः, तद्विशिष्टे च कामसंकल्पादीनामहंकारधर्माणामिन्द्रियधर्माणां च काणत्वबधिरत्वक्लीवत्वादीनामध्यासः। इन्द्रियाणां च परोक्षत्वान्नापरोक्षधर्म्यध्यास इति सिद्धान्तः। तद्विशिष्टे च स्थूलदेहाध्यासो धर्मपुरस्कारेणैवाहं मनुष्य इत्याकारो नतु स्वरूपतोऽहं देह इत्यध्यासस्तथा प्रतीत्यभावात् । तद्विशिष्टे च स्थौल्यादीनां देहधर्माणामध्यासः। तद्विशिष्टे बाह्यानां पुत्रभार्यादीनां साकल्यवैकल्यादिधर्माध्यासः। एवं चैतन्यस्याप्यहङ्कारादिषु देहपर्यन्तेष्वध्यासः संसर्गतः। अध्यासव्यवधानतारतम्याच्च प्रेमतारतम्यम्। तदुक्तं वार्तिकामृते—

वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियम् ।
इन्द्रियेभ्यः प्रियः प्राणः प्राणादात्मा परः प्रियः ॥ इति।

पिण्डः स्थूलशरीरं, प्राणोऽन्तःकरणम् । देहापेक्षया चेन्द्रियाणां प्रियत्वं शस्त्रवृष्ट्यादिधारापाते चक्षुषो निमीलनदर्शनादनुभवसिद्धम्। तेनान्योऽन्याध्यासाच्चिदचिद्ग्रन्थिरूपोऽध्यासः, एकतरस्याध्यासाङ्गीकारेऽन्यतरस्या-

भानप्रसङ्गात्, अध्यस्तस्यैव भ्रमे भाननियमात्, इमे रङ्गरजते इति समूहालम्बनभ्रमवदवश्यमितरेतराध्यासः। सर्वबाधावधिभूतचैतन्यपरिशेषेण च न शून्यवादापत्तिः, सत्यानृतसंभेदावभासत्वादध्यासस्य। तस्मात्पूर्वपूर्वाध्यासमूल एवायमुत्तरोत्तराहङ्काराद्यध्यासो बीजाङ्कुरवदनादिः। अविद्याध्यासश्चैक एवानादिः।

( लघुव्याख्या. )

चित्प्रतिबिम्बाध्यासद्वारा मनसः प्रमातृत्वमुक्तम् । तत्र नन्वध्यासोऽपि नोपपद्यत इत्यादिना दत्तदोषानुक्तप्रकारेण निरस्येदानीं तदेव प्रमातृत्वं विस्तरेणोपसंहरति—तेनेति । अध्यासस्य निर्दुष्टत्वसमर्थनेन । अज्ञानेति । अज्ञानप्रतिबिम्बितत्वविशिष्टेऽहङ्कारस्यान्तःकरणस्याज्ञोऽहमित्यात्मकाध्यासः। तद्विशिष्टे अज्ञोऽहमहमस्म्यहं स्फुराम्यहमात्मेत्याद्यहङ्काराध्यासविशिष्टे कामेति । 'कामः सङ्कल्पो विचिकित्सेत्यादिश्रुत्युक्तानामहङ्कारधर्माणाम् । इन्द्रियधर्माणामित्यनेनादृष्टविशेषरूपाः काणत्वादयो मनोधर्मा एवेति मतनिरासः । तथा सति मनः काणमित्यादिव्यवहारापत्तेः । नन्विन्द्रियाध्यासमनुक्त्वा कथं तद्धर्माध्यास उक्तस्तत्राह—इन्द्रियेति । परोक्षत्वात् अतीन्द्रियत्वात् । अपरोक्षधर्म्यध्यासः अपरोक्षे धर्मिण्यहङ्कारविशिष्टे चैतन्ये तादात्म्येनाध्यासः । अहं चक्षुः श्रोत्रमित्याद्यप्रतीतेः । इति सिद्धान्त इत्यनेन, धर्माध्यासेनैव तद्व्यवहारोपपत्तौ काण इत्यादिव्यवहारोपपत्तौ तद्रूपेण धर्म्यध्यासकल्पनमप्रामाणिकाऽनतिप्रयोजनकमिति युक्तिसिद्धमेवाचार्यमतमिति ज्ञापितम् । तद्विशिष्टे च दर्शितसूक्ष्माध्यासविशिष्टे च स्थूलदेहस्य तादात्म्येनाध्यासः धर्मपुरस्कारेण मनुष्यत्वादिधर्मविशिष्टरूपेण न स्वरूपतः न देहत्वादिधर्मविशिष्टरूपेण । कुतः प्रतीत्यभावात् । संस्कारमूलभूततादृशप्रत्ययस्यालीकत्वात् । तद्विशिष्टे देहाध्यासविशिष्टे स्थौल्यादीनां स्थूलत्वकृशत्वादीनां देहधर्माणां, तद्विशिष्टे स्थौल्याद्यध्यासविशिष्टे पुत्रेति । पुत्रभार्यादीनां ये साकल्यवैकल्यादयो धर्मास्तेषामध्यास इत्यर्थः । स्वामित्वाध्यासपूर्वकमिति शेषः । साकल्यं विनयादिगुणवत्त्वं, तदभावो वैकल्यम् । स्थौल्यादिविशिष्टे पुत्रस्वामित्वमध्यस्य पुत्रादिगतसाकल्यवैकल्ये अध्यस्ते, पुत्रादौ पूजितेऽहमेव पूजित इत्यादि प्रतीतिदर्शनादिति फलितार्थः । न केवलमनात्मन एवाध्यास आत्मनि किंतु गौरोऽहं चेतनश्चेतनोऽहं गौर इति प्रतीतेः, इदं रजतं रजतमिदमित्यादौ रजतेदमंशयोः परस्पराध्यासवदात्मनोऽप्यनात्मन्यध्यासो युक्त एवेत्यभिप्रेत्याह—एवमिति । अज्ञानविशिष्टचैतन्यस्याहङ्काराद्याधाररूपस्य अहङ्कारादिषु मनआद्यवच्छेदेन देहपर्यन्तेषु साकल्याध्यासविशिष्टदेहपर्यन्तेषु संसर्गतः रजतेदमंशस्येव संसृष्टत्वरूपेण । एतेन शून्यवादाशङ्का निराकृता । स्वरूपतोऽध्यस्तस्यैव विशेषदर्शनबाध्यत्वाङ्गीकारादित्यन्यत्र विस्तरः । ननु मनआदीनां सर्वेषां परिपूर्णानन्दे तादात्म्येनाध्यासात् तेषु जायमानप्रेम्ण उत्कटानुत्कटत्वे कुतस्तत्राह—अध्यासेति । अध्यासैरानन्दस्य व्यवधानाधिक्यन्यूनत्वत इत्यर्थः । स्थूलाधिकदृष्टित आनन्दव्यवधानाधिक्यात्प्रेम्णोऽनुत्कटत्वं, सूक्ष्माधिकदृष्टित आनन्दव्यवधानन्यूनत्वात्प्रेम्ण उत्कटत्वं, प्रेमा सर्वत्रानन्द एव । स च यदाऽहङ्काराद्याधिक्यादिना संक्रान्तस्तत्र प्रेमा तथा नोदेति । अहङ्कारादिन्यून-

तायां तु व्यवधानबाहुल्याभावात्सूक्ष्मदृष्टित उदेति प्रेमेति यावत् । एवंविधकल्पनायामनुभवरूपं वार्तिकाचार्यवाक्यं प्रमाणयति—तदुक्तमिति वित्तादिति । प्रियः सुखसाधनेच्छाविषयः । अनेन प्रायः पुत्रादिस्वामित्वविशिष्टे वित्तादिस्वामित्वाध्यास इत्यनुक्तमपि सूचितम् । पिण्डात्तथेन्द्रियम् इन्द्रियेभ्यः प्रियः प्राण इत्यनेन पटुत्वकाणत्वादिना चक्षुरादीनां मनोविशिष्टेऽध्यास इति ज्ञापितम् । तथा चैकैकाध्यासविशिष्ट एवापराध्यासो न साक्षात्सर्वेषां यस्य प्रथमतोऽध्यासस्तत्र प्रेमाधिकोऽन्यत्र न्यून इति संक्षेपः। पिण्डशब्दस्यान्नग्रासपरतानिरासायाह—पिण्ड इति । प्राणशब्दस्य केवलवायुपरताशङ्कानिरासायाह—प्राण इति । इन्द्रियप्रियत्वं स्फुटयति—देहापेक्षयेति । तेनेति । परस्पराध्यासकृतकार्योपलब्ध्येत्यर्थः । अन्योन्याध्यासात् परस्परमध्यासाङ्गीकारात् । चिदचिद्ग्रन्थिरूपः चिदचितोः परस्परावच्छेदेन परस्परसंबन्धरूपः । घटः सन्, सन् घटः, इत्यादिप्रतीतेरिति भावः । नन्वेकतराध्यासेनैव द्विविधप्रत्ययोपपत्तेरलं परस्पराध्यासेनेति तत्राह—एकतरस्येति । विशेष्यस्य वा अन्यतरस्य विशेष्यस्य विशेषणस्य वा अभानप्रसङ्गात् भ्रमाविषयत्वापत्तेः । कुतस्तत्राह—अध्यस्तस्यैवेति । स्वाश्रयनिष्ठाभावप्रतियोगिन एवेत्यर्थः । विशेषदर्शनबाध्यत्वेनेति शेषः । भ्रमेभानेति । भ्रमविषयत्वेत्यर्थः । अन्यथा शुक्तित्वादीनामपि भानं स्यादित्यन्यत्र विस्तरः । ननु रजतमिदमिति भ्रमे इदमंशस्य कारणत्वाद्भानं, शुक्तित्वादेस्तु विरोधादेवाभानं नत्वनध्यासादभानमिदमंशस्याध्यासाद्भानं, तथाच कथमध्यस्तस्यैव भाननियममङ्गीकृत्य परस्पराध्याससमर्थनं तत्राह—इमे इति । इदंशब्दवाच्ययोरेव रङ्गरजतयोः रजतरङ्गे इति भ्रमे परस्परमधिष्ठानारोप्यभावाद्विशेषणविशेष्ययोरप्याध्यासिकत्वमिति 'इदं रजतमिति विशिष्टभ्रमेऽपि भ्रमत्वाविशेषात् । विशेषणविशेष्यतत्संसर्ग( र्गाणामाध्यासिक ? )त्वमङ्गीक्रियत इत्यर्थः । अवश्यमित्युक्त्यात्र परस्पराध्यासस्यापरिहार्ययुक्तित्वं ध्वनितम् । इतरेतराध्यासः परस्परं तादात्म्याध्यासः, तयोः संसर्गाध्यासश्च । ननु विशेषणविशेष्ययोर्द्वयोरप्यध्यस्तत्वे बाधात् सर्वशून्यतैव स्यात्तत्राह—सर्वेति । सर्वबाधकधीविषयचैतन्यस्य परिशेषेण मिथ्यात्वास्वीकारेण न शून्यवादापत्तिः न सर्वमिथ्यात्ववादस्य प्रसङ्ग इत्यर्थः । आधारांशस्यैवाविद्योपहितस्य सत इदमंशस्येवाध्यस्तेऽध्यासो नाधिष्ठानस्य परिपूर्णानन्दस्य शुक्त्यंशादेरिव । अत आधाराध्यस्तयोर्द्वयोर्बाधेऽप्यधिष्ठानस्य बाधाभावान्न शून्यताप्रसङ्गगन्धोऽपीत्यन्यत्र विस्तरः । उपपादयति—सत्येति । वस्तुगत्या सत्यवस्तुनिष्ठो योऽनृतस्य संभेदः संबन्धस्तादात्म्यरूपस्तद्विषयकत्वाद्भ्रमस्येत्यर्थः । सत्यविषयत्वं विनाधिष्ठानज्ञानस्य बाधकत्वायोगादधिष्ठानं सत्यमेवेति भावः । देहादेर्मनुष्यत्वप्रकारेणैवाध्यासो नान्यथेत्यत्र हेतुं समर्थयन्नुपसंहरति—तस्मादिति । प्रतीत्यनुसारेणैवाध्यासकल्पनादिति भावः । अध्यासमूल एव संस्कारद्वाराध्यासकारणक एव अहङ्कारादेः अहङ्कारेन्द्रियदेहतद्धर्माणामध्यासः स्वरूपतो ज्ञानतश्च । अत्रानवस्थानादिको बीजाङ्कुरादाविव प्रामाणिकत्वान्न दोष इत्याह—बीजेति । बीजादङ्कुरमङ्कुराच्च बीजान्तरं

ततोऽङ्कुरान्तरमिति यथा, तथा पूर्वाध्यासात्संस्कारस्ततोऽध्यासस्ततः संस्कार इत्येवमेकजातीययोः कार्यकारणयोः स्वसृष्ट्यवधि स्वप्रलयपर्यन्तं घटीयन्त्रवदावृत्तिरनादित्वमित्यर्थः। संस्कारसाधारणकार्यपरिणामितयाङ्गीकृताया अविद्याया अध्यासस्तु स्वरूपतोऽनादिरित्याह—अविद्येति। अविद्यायाः कारणभूतायाः अध्यासः एक एव न धारान्तःपातितयाऽनेकः। अतः स्वरूपतोऽनादिः उत्पत्तिरहितः। तस्योत्पत्तिकल्पने तु तस्य तस्यापि कारणान्तरापेक्षायामनवस्थाप्रसङ्गादिति भावः।

( संदीपनम् )

एवमज्ञानाध्याससिद्धौ कुत्र कस्याध्यास इति शिष्याकाङ्क्षायां तदन्तमध्यासं सङ्कलय्य दर्शयति—तेनेति। अज्ञानाध्यासस्यानादित्वात्प्राथम्येनेत्यर्थः। अहङ्काराध्यासवदिन्द्रियाध्यासः किमिति नोक्तस्तत्राह—इन्द्रियाणां त्विति। नत्वित्यत्र हेतुमाह—अहं देह इति। साकल्यवैकल्ये संपत्तिविपत्ती। चैतन्येऽहङ्काराध्यासमुक्त्वाहङ्कारादौ चैतन्याध्यासमाह—एवमिति। संसर्गत इति। संसर्गत इति षष्ठ्यर्थे तसिल् 'सर्वविभक्तिभ्यस्तसिल्' इति सूत्रेण। एवं च संसर्गस्येत्यर्थः। अन्यथा संसर्गत्वेनाप्यध्यासे शून्यवादतादवस्थ्यमिति भावः। यथाहङ्कारादीनां स्वरूपतोऽध्यासस्तथा न किंतु चैतन्यस्य संसर्गतः। अनात्मवच्चैतन्यस्यापि स्वरूपतोऽध्यासेऽनात्मवच्चैतन्यस्यापि मिथ्यात्वप्रसङ्गाच्छून्यवादप्रसङ्ग इत्यर्थः। सर्वस्य प्रियात्माध्यस्तत्वे प्रेमतारतम्यं कुतस्तत्राह—अध्यासेति। पुत्रात् पिण्ड इति। प्रिय इत्यनेनान्वयः। इन्द्रियमिति। प्रियमिति शेषः। उपसंहरति तेनेति। हेतुमाह—एकतरस्येति। अभानप्रसङ्गे हेतुमाह—अध्यस्तस्यैवेति। अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथंचन परिस्फुरति भ्रमेष्वित्यादिना संक्षेपशारीरकाचार्यैरुक्तत्वात्। एवं देहपर्यन्तेष्वेव चैतन्याध्यासो नान्यत्रेति भावः। ननु जडचैतन्ययोरुभयोरध्यस्तत्वे शून्यवादापत्तिरत आह—सर्वबाधेति। चैतन्यसंसर्गस्याध्यासेऽपि न स्वरूपतोऽध्यासो यतः शून्यवादापत्तिरित्यर्थः। ननु ज्ञातस्यैवाध्यासस्तथाचाहङ्कारात्पूर्वं तस्य ज्ञातत्वाभावात् कथमध्यास इत्याशङ्कामुपसंहारव्याजेन परिहरति—तस्मादिति। अनादौ संसारे पूर्वं ज्ञातानामहङ्काराणामुत्तरोत्तरेऽध्यासस्तस्य च प्रवाहानादित्वमित्यर्थः।

**नन्वध्यासस्यानादित्वे 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इतिवदता भाष्यकारेण स्मृतिरूपत्वेन संस्कारजन्यत्वमुक्तं विरुध्येत, न, कार्याध्यासाभिप्रायत्वात्तस्य। 'परत्र परावभास इत्येतावन्मात्रस्यैवोभयानुगतस्य लक्षणत्वात्। यद्वा 'सत्यानृते मिथुनीकृत्येति भाष्यवचनात्सत्यानृतवस्तुसंभेदावभासोऽध्यास इत्येव सिद्धान्तलक्षणम्। तेन कारणाध्यासेऽपि न लक्षणाव्याप्तिः। कार्याध्यासस्य च प्रवाहरूपेण बीजाङ्कुरवदनादित्वाभिधानान्न कोऽपि दोषः।**

( लघुव्याख्या. )

अध्यासस्य अज्ञानाध्यासस्य अनादित्वे अजन्यत्वे स्मृतिरूपः संस्कारजन्यत्वेन स्मृतिसदृशः परत्र तदभाववति पूर्वदृष्टावभासः। ज्ञानपक्षे अवभासनमवभासः पूर्वदृष्टस्यावभासः पूर्वदृष्टावभासः, पूर्वदृष्टजातीयस्यावभास इति यावत्। अन्यथाऽन्यथाख्यात्यापत्तेः, पूर्वदृष्टस्य नैयायिकैरपि भानाङ्गीकारात्। अर्थपक्षे तु अवभासत इत्यवभासः अवभासमानः पदार्थः,

पूर्वदृष्टश्चासाववभासश्चेति पूर्वदृष्टावभास इत्यर्थः। तथा च स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वमर्थाध्यासस्य, तादृशार्थविषयकत्वं ज्ञानाध्यासस्य लक्षणमिति निष्कर्षः। स्मृतिरूपत्वेन स्मृतिसदृशत्वेन। कार्येति। अहङ्काराद्यध्यासाभिप्रायकत्वात्। 'अहमिदं ममेदमिति भाष्येण तस्यैवोपक्रमादिति भावः। ननु तर्हि भाष्ये कारणानुक्त्या न्यूनता तत्राह—परत्रेति। पूर्वदृष्टपदमारोप्यार्थपरम्। तथा च परत्र स्वाभाववति परस्य पदार्थस्य योऽवभासः अवभासमानो वा परः सोऽध्यासो भ्रम इति यावत्। उभयेति। कार्यकारणोभयाध्यासलक्षणत्वादित्यर्थः। अस्मिन् लक्षणे भाष्यकारपङ्क्तिस्थस्मृतिरूपपदस्वारस्यभङ्ग इत्यतो लक्षणान्तरमाह—यद्वेति। संभेदस्तादात्म्यम्। तेनेति प्रकृतलक्षणकरणेनेत्यर्थः। अव्याप्तिः कारणाध्यासासङ्ग्रहः। ननु कारणाध्यासस्यानादित्वसमर्थने 'अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इति भाष्यकारेण कार्याद्यहङ्काराद्यध्यासस्याप्यनादित्वमुक्तं विरुध्येत तत्राह—कार्येति।

(संदीपनम्)

नन्वेवमर्थाध्यासलक्षणे भाष्यविरोध इत्याशङ्कते—नन्विति। स्मृतिरूपपदं व्याचष्टे—स्मृतिरूपत्वेनेति। इत्थंभूतलक्षणे तृतीया। एवं च स्मृते रूपमस्येति व्युत्पत्त्या स्मृतिसदृशत्वं प्राप्तं तच्च संस्कारजन्यत्वमित्यर्थः। ननु नेदमविद्याध्याससाधारणं लक्षणमपि तु पञ्चभूतादिरूपकार्याध्यासाभिप्रायत्वादिति। इदं तु लक्षणमध्यस्यत इत्यध्यास इतिव्युत्पत्त्या अर्थाध्यासस्य, अध्यसनमध्यास इति व्युत्पत्त्या ज्ञानाध्यासस्येति विवेकः। नन्विदमयुक्तं सामान्यलक्षणाभावाद्विशेषलक्षणस्य तत्पूर्वकत्वात्तत्राह—परत्रेति।

**एवमध्यासे सिद्ध एकस्याप्यात्मनो जीवेश्वरादिव्यवस्था मानमेयादिप्रतिकर्मव्यवस्था चोपपद्यते।**

(लघुव्याख्या.)

अध्यासनिरूपणस्य फलपर्यवसानमाह—एवमिति। निरुक्तप्रकारेणेत्यर्थः। अध्यासे आत्मानात्मनोरितरेतराध्यासे। जीवेश्वरादीत्यादिना ब्रह्मविष्णुरुद्रादेर्विश्वादेश्च परिग्रहः। मानेति। मानमेयादीनां प्रतिविषयव्यवस्था कदाचित्कुत्रचित्केनचिदेव विषयो गृह्यत इत्यात्मिका।

(संदीपनम्)

अध्याससाधनफलमाह—एवमिति। मानमन्तःकरणवृत्त्यवच्छिन्नं चैतन्यम्। मेयं घटाद्यवच्छिन्नं चैतन्यम्।

**तथाहि—अज्ञानोपहितात्मा[1] अज्ञानतादात्म्यापन्नः[2] स्वचिदाभासाविवेकादन्तर्यामी साक्षी जगत्कारणमिति कथ्यते। बुद्ध्युपहितात्मा[3] तत्तादात्म्यापन्नः[4] स्वचिदाभासाविवेकाज्जीवः कर्ता भोक्ता प्रमातेति च कथ्यत इति वार्तिककारपादाः। प्रतिदेहं च बुद्धीनां भिन्नत्वात्तद्गतचिदाभासभेदेन तदविविक्तं चैतन्यमपि भिन्नमिव प्रतीयते। अज्ञानस्य तु सर्वत्राभिन्नत्वात् तद्गतचिदाभासभेदाभावात्तदविविक्तसाक्षिचैतन्यस्य न कदाचिदपि भेदभानमिति।**

१. °हित आ०। २. °पन्नस्व०। ३. °तश्च। ४. °पन्नस्व०। इति पाठाः।

( लघुव्याख्या. )

एतस्या जीवेशविभागपूर्वकत्वाज्जीवेशविभागमेवादौ दर्शयति–तथाहीति । तत्र 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति श्रुतेः कार्यकोटिस्त्वंपदार्थस्य, कारणकोटिस्तत्पदार्थस्य । तत्रापि कार्यकारणयोर्विशेषणत्वमुपाधित्वमुपलक्षणत्वं चादाय तत्त्वंपदार्थावपि विशिष्टावुपहितावुपलक्षिताविति त्रिविधौ भवतः । तत्रान्तःकरणविशिष्टस्त्वम्पदार्थो जीवः 'तद्यथा महामत्स्य इत्यादि श्रुतिप्रमितावस्थात्रयवान् । अन्तःकरणोपहितो जीवसाक्षी 'त्रिषु धामसु यद्भोज्यमिति श्रुतिप्रमितः, अहंत्वपुरस्कारेणैव जीवस्य द्रष्टृत्वप्रतीतेः । अन्तःकरणोपलक्षितः शुद्धस्त्वं पदार्थः 'अविजिघत्सोऽयमात्मेति श्रुतेः प्रपञ्चनिरूप्यसाक्षित्वादिधर्मातीतः केवलः सच्चिदानन्दमात्रः । एवं तत्पदार्थोपि अज्ञानविशिष्ट ईश्वरः 'मायिनं तु महेश्वरमिति श्रुतेः । मायोपहित ईशसाक्षी 'एको देवः सर्वभूतेष्विति श्रुतिप्रमितः, मायोपहितस्यैव मायातत्कार्यद्रष्टृत्वसंभवात् । मायोपलक्षितः शुद्धः 'केवलो निर्गुणश्चेत्यादिपदैरेव तथा प्रतिपादितो वस्तुतः शुद्धस्त्वंपदार्थाभिन्नः । तत्र–यद्यपि साक्षाद्व्यावर्तकत्वं विशेषणत्वं, स्वप्रकारकधीजनकमात्रत्वरूपमुपरञ्जकपदाभिधेयमुपाधित्वं, परम्परया व्यावर्तकत्वरूपं परिचायकपदाभिधेयमुपलक्षणत्वं नैयायिकाभिमतमैकस्यैकपदाभिधेये न संभवति विरोधात् । अत एकैकपदाभिधेययोरुक्तरीत्या त्रैविध्यं दुर्घटं–तथापि स्वसिद्धान्ते तन्मतपरिभाषाया अनङ्गीकारात् । किंतु विशेष्यवृत्तिधर्माश्रयत्वे सति व्यावर्तकं विशेषणं यथा घटोऽस्तीत्यत्र घटे घटत्वं नीलादिश्च, विशेष्यघटवृत्तिविधेयसत्ताश्रयत्वे सति घटत्वस्य पटादिभ्यो नीलादेश्च पीतादिभ्यो व्यावर्तकत्वात् । उपाधिश्च विशेष्यवृत्तिधर्मानाश्रयत्वे सति साक्षाद्व्यावर्तको यथा श्रोत्रमस्तीत्यादौ नभोरूपार्थे श्रोत्रे कर्णशुष्कुली, तामादायैव नभसोऽस्तित्वादिनियमाभावात्, तस्यास्तत्र विशेष्यनभोवृत्तिसत्त्वाद्यनाश्रयत्वे सति भेर्याकाशादिभ्यो व्यावर्तकत्वात् । उपलक्षणं तु विशेष्यवृत्तिधर्मानाश्रयत्वे सति परम्परया व्यावर्तकं यथा यत्र शाखाग्रं तत्र चन्द्र इत्यादौ चन्द्रे शाखादिः, देशविशेषोपस्थापनद्वारैव तस्य व्यावर्तकत्वात् । दार्ष्टान्तिके च प्रकृतेऽन्तःकरणगताभासवृत्तिबन्धाश्रयत्वाद्भवति तत्रान्तःकरणं विशेषणं, साक्षिणि चोपाधिः तद्वृत्तिभासकत्वरूपसाक्षितायास्तस्मिन् बाधात्; शुद्धे चोपलक्षणं–विशिष्टोपस्थापनद्वारा विशिष्य तज्ज्ञापनात् । एवमज्ञानस्यापि तत्पदाभिधेये त्रयं संभवति, तद्वृत्तिकर्तृत्वाश्रयत्वात्, साक्षित्वबाधात्, विशिष्टोपस्थापनद्वारा विशिष्य तज्ज्ञापकत्वाच्चेत्यादिपरिभाषयैव जीवेशसाक्षिशुद्धविभागव्यवस्थाया उपपादनान्न काप्यनुपपत्तिः ।

( संदीपनम् )

किञ्चिदुपहितेश्वरस्य जीवत्वादुपजीव्यत्वेन प्रथमत ईश्वरस्वरूपलक्षणमाह—अज्ञानोपहितेति । अज्ञानोपहितो य आत्मा स एवात्माऽज्ञानतादात्म्यापन्नो यः स्वचिदाभासः स्वस्याज्ञानोपहितस्यात्मनो यश्चिदाभासस्तदविवेकात् तदगृहीतभेदकः सन्नन्तर्यामीत्यादिरुच्यत इत्यर्थः । अन्तर्यामीति 'यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयतीत्यादिनान्तर्नियमनशील उक्त इत्यर्थः ।

साक्षी सर्वद्रष्टा। ईश्वरं निरूप्य जीवं निरूपयति—बुद्ध्युपहितश्चेति। पूर्वोक्तेनात्मनानुषङ्गः। तत्तादात्म्यापन्नो बुद्धितादात्म्यापन्नः जीवस्य प्रमातृत्वमधिकञ्चुकप्रवेशादित्यवधेयम्। तर्हि जीवभेदः कथं तत्राह–प्रतिदेहं चेति। तर्हि जीवभेदवत् साक्षिभेदोऽपि स्यात्तत्राह–अज्ञानस्य त्विति।

( लघुव्याख्या. )

अविद्यायास्तत्कार्यस्य, जीवस्य तद्भोक्तुः, कर्त्तुरीशस्य, द्रष्टुः साक्षिणश्च, स्वप्नत्वप्रतिपादिकायाः वक्ष्यमाणश्रुतेः स्वारस्यमस्मिन्नेव पक्षे उपपद्यत इत्यभिप्रेत्य वार्तिककारैरङ्गीकृतमिमं पक्षमवतारयति–अज्ञानोपहितात्मा अज्ञानोपहितस्यात्मा प्रतिबिम्बत्वेन स्वरूपः, तस्य जगत्कारणत्वेन निर्देशे हेतुगर्भं विशेषणमाह–अज्ञानेति। अज्ञानतादात्म्यविशिष्टतया प्रमित इत्यर्थः। प्रतिबिम्बस्य मिथ्याभूतस्य कथमन्तर्यामित्वादिकं तत्राह–स्वचिदाभासेति। स्वस्मिन्नज्ञाने यश्चिदाभासः तस्य बिम्बेनाविवेकात्। तथाच बिम्बाभेदमादाय तत्रान्तर्यामित्वादिव्यपदेशः। अन्तर्यामी सर्वेषां प्रेरकः साक्षी सर्वव्यवहारहेतुज्ञानस्वरूपः। जगत्कारणं जगदुपादानम्। बुद्धीति। बुद्ध्युपहितस्यात्मा प्रतिबिम्बत्वेन स्वरूपः। तस्य कर्तृत्वे हेतुगर्भं विशेषणमाह–तत्तादात्म्यापन्नः बुद्धितादात्म्यविशिष्टतया प्रतीयमानः। ननु मिथ्याभूतस्य कथं चेतनत्वादिकं तत्राह-स्वेति। स्वस्मिन्नहङ्कारे यश्चिदाभासस्तस्य बिम्बेनाविवेकात्। अत्रापि बिम्बाभेदमादायैव सर्वं चेतनत्वादिकमिति भावः। ननु जीवसाक्षिणः प्रतिबिम्बभेदोऽवभासते ईशसाक्षिणस्तु नेति भेदः किंनिबन्धनस्तत्राह–तद्वतेति। बुद्धिगतचित्प्रतिबिम्बभेदेन तदविविक्तं चैतन्यमपि प्रतिबिम्बाद्भिन्नतया प्रमितं जीवसाक्षिचैतन्यमपि भिन्नमिव प्रातीतिकभेदविशिष्टं प्रतीयते। सर्वत्र सर्वकार्येषु अभिन्नत्वात् एकत्वात्। तद्वतेति। अज्ञानगतेश्वररूपप्रतिबिम्बभेदाभावात्, तदविविक्तेति तदभिन्नेत्यर्थः। भेदभानमौपाधिकप्रातीतिकभेदमानम्।

अस्मिंश्च पक्षे तत्त्वमादिपदे जहल्लक्षणैव, साभासस्योपाधेर्वाच्यार्थस्य हानादाभासस्यापि जडाजडविलक्षणत्वेनानिर्वचनीयत्वात्। तदुक्तं संक्षेपशारीरके–'साभासाज्ञानवाची भवति यदि पुनर्ब्रह्मशब्दस्तथाहंशब्दोऽहङ्कारवाची भवति तु जहती लक्षणा तत्र पक्षे' इति। नचाभासस्यैव बद्धत्वात्केवलचैतन्यस्य च मुक्तत्वाद्बन्धमोक्षयोर्वैयधिकरण्यं, स्वनाशार्थं प्रवृत्त्यनुपपत्तिश्चेति वाच्यम्। केवलचैतन्यस्यैवाभासद्वारा बद्धत्वाभ्युपगमात्। तदुक्तं वार्तिककारपादैः—'अयमेव हि नोऽनर्थो यत्संसार्यात्मदर्शनम्' इति। तेन शुद्धचैतन्यस्याभास एव बन्धः, तन्निवृत्तिश्च मोक्ष इति न किंचिदसमञ्जसम्। अथवाऽभासाविविक्तं चैतन्यमपि तत्त्वमादिपदवाच्यम्, तेन वाच्यैकदेशस्यात्यागादस्मिन् पक्षेऽपि जहदजहल्लक्षणैवेति न कोऽपि दोषः। अयमेव च पक्ष आभासवाद इति गीयते।

( लघुव्याख्या. )

अस्मिंश्च पक्षे जीवेशयोः कार्यकारणोपाध्यन्तर्गताभासरूपतापक्षे तत्त्वमादिपदे तत्त्वमसीतिवाक्यघटकीभूततत्त्वमादिपदे। आदिपदादहं ब्रह्मास्मीत्यादिपरिग्रहः। जहल्लक्षणैव जहति

१ इयं टीका ४८ पत्रे लघुव्याख्यायामवगंतव्या।

पदानि स्वार्थं यस्यां वृत्ताविति वाच्यार्थस्य सर्वांशपरित्यागेनाशक्यवृत्तिरूपैव । तत्र बीजमाह–साभासस्येति । आभाससहितस्योपाधेरित्यर्थः । वाच्यार्थस्य शक्यार्थस्य हानात् त्यागात् अभेदान्वयित्वासंभवादिति भावः । ननु विनिगमकाभावादुपाधिविशिष्टाभासोऽपि तत्त्वमादिपदवाच्यः, आभासश्चोपाध्यन्तर्गतत्वरूपारोपितधर्मविशिष्टा बिम्बचिदेव, तथाच जहदजहल्लक्षणैव तत्राह–आभासस्येति । सोपाध्याभासस्यापि । जडेति । अहं चेतन इत्यादिप्रतीतेरहङ्कारादिरूपजडविलक्षणत्वेन आभासत्वादेव साक्षिरूपाजडविलक्षणत्वेनेत्यर्थः । अनिर्वचनीयत्वात् स्वरूपतो मिथ्यात्वात् । प्रमाणं चात्र जीवेशादीन् प्रकृत्य 'तदेतत्त्रयं स्वप्नं मायामात्रमित्यादिश्रुतिः, चिदाभासो मिथ्या, आभासत्वात् मुखाभासवदित्यनुमानं च । साभासा ज्ञानवाची साज्ञानाभासवाची वा, अहङ्कारवाची साभासाहङ्कारस्य साहङ्काराभासस्य वा वाचकः । तत्र पक्षे मिथ्याभूताभासाङ्गीकारपक्षे जहती निःशेषेण स्वशक्यार्थं परित्यजन्ती । आभासवादे बन्धमोक्षयोर्वैयधिकरण्यापत्तिरूपं दोषमपरिहार्यत्वेन पराभिप्रेतं परिहरिष्यन्नाशङ्कते–नचेति । आभासस्यैव बुद्धिगतानिर्वचनीयचित्प्रतिबिम्बस्यैव न कूटस्थस्यावभासकस्य बद्धत्वात् अहं करोमि, मे दुःखमित्यादिप्रतीतिसिद्धकर्तृत्वादिरूपसंसारसंबन्धवत्त्वात्, केवलचैतन्यस्य अविद्यादिरहितकूटस्थसाक्षिचैतन्यस्य तु सत्यस्य मुक्तावन्वययोग्यस्य मुक्तत्वात् अविद्यानिवृत्त्युपलक्षितपरिपूर्णानन्दरूपत्वात्, बन्धमोक्षयोः अविद्याप्रयुक्तकर्तृत्वतत्त्वज्ञानप्रयुक्ताविद्यानिवृत्त्योः वैयधिकरण्यं भिन्नाधिकरणनिष्ठत्वम् । तथा च मुक्त्यर्थं बद्धजीवस्य प्रवृत्तेरयुक्तेः प्रवृत्तस्य मिथ्यात्वेन फलकालेऽसत्त्वेन फलालाभादिति भावः । आभासवादे दूषणान्तरमाह—स्वेति । बन्धस्येव आभासस्यापि मिथ्यात्वात्तदीयतत्त्वज्ञानेन बन्धस्येवाभासस्यापि नाशोऽवश्यमङ्गीकर्तव्यः नचैतद्युक्तं स्वनाशार्थं प्रवृत्त्यदर्शनादिति भावः । मतापरिज्ञानाद्दूषणमिति ज्ञापयिष्यन् स्वमतप्रदर्शनेन दूषणं परिहरति–केवलेति । साक्षिचैतन्यस्यैव नाभासस्येत्यर्थः । आभासद्वारा स्वानिर्वचनीयप्रतिबिम्बद्वारा बद्धत्वाङ्गीकारात् कर्तृत्वादिमानरूपबन्धसंबन्धाङ्गीकारात् । प्रतिबिम्बभावानन्तरं कर्तृत्वग्रहणं बन्धः स च साक्षिण एव, तन्निवृत्तिरूपो मोक्षोऽपि तस्यैवेति न बन्धमोक्षयोर्वैयधिकरण्यगन्धोऽपीति यावत् । अपसिद्धान्तशङ्कां वारयति–तदुक्तमिति । वार्तिककारैरिति शेषः । नः अस्माकं भासकचिद्रूपाणामनर्थः बन्धः । संसार्यात्मदर्शनं संसार्यात्मना संसारिरूपेणाभासतादात्म्यविशिष्टतया दर्शनं प्रतीतिः । दोषसमाधानस्य फलितार्थमाह–तेनेति । स्पष्टम् । जहल्लक्षणावादो न भाष्यकाराणामभिमत इत्यतस्तदनुसारेणाभासवादे तत्त्वंपदार्थावाह–अथवेति । आभासादविविक्तं चैतन्यमज्ञानगताभासतादात्म्यविशिष्टतया प्रतीयमानमीशसाक्षिचैतन्यं तत्पदवाच्यं, बुद्धिगताभासतादात्म्यविशिष्टतया प्रतीयमानं जीवसाक्षिचैतन्यं त्वंपदवाच्यमित्यर्थः । अपिना विनिगमकाभावादाभासाविविक्तचैतन्यस्य, चैतन्याविविक्ताभासस्य च द्वयोरेव तत्त्वमादिपदवाच्यत्वं वक्तुं शक्यमिति ज्ञापितम् । प्रकृतोक्तेः फलमाह–तेनेति । आभासाविविक्तचैतन्यस्य वाच्यत्वाङ्गीकारेणेत्यर्थः । वाच्यैकदेशस्य वाच्यार्थैकदेशस्य साक्षिणः अत्यागात् अन्वयितया

ग्रहणादस्मिन्नपि पक्षे आभासस्य मिथ्यात्वमिति पक्षे जहद्जहल्लक्षणैव जहति न जहति च पदानि स्वार्थं यस्यां वृत्तौ सैव शक्यैकदेशपरित्यागेन शक्यैकदेशे वृत्तिरूपैवेति यावत्। एवकाराद्वृत्त्यन्तरव्यवच्छेदः। न कोऽपि दोषः नाचार्योक्तिविरोधरूपो दोषः। अयमेव पक्ष इति। जीवेशौ बिम्बादतिरिक्तौ चिदाभासावेवेति पक्षः। आभासवादः स्वरूपतो मिथ्याभूतः प्रतिबिम्ब इति वादः।

(संदीपनम्)

विनाशिनः साभासस्योपाधेस्तत्त्वंपदवाच्यार्थत्वे गता जहद्जहल्लक्षणेत्याशङ्क्येष्टापत्त्या परिहरति—**अस्मिंश्चेति**। भवत्वाभास एव वाच्यार्थस्तत्राह—**आभासस्यापीति**। **आभासस्यैवेति**। बुद्धितादात्म्यापन्नचिदाभासस्यैव जीवत्वेन बद्धत्वादित्यर्थः। ननु प्रपञ्चवदाभासस्यानिर्वचनीयत्वेन ज्ञाननाश्यत्वमेवं च स्वनाशस्याप्युद्देश्यत्वं वाच्यं तच्चानुपपन्नम्, नह्यात्मापि दुःखहेतुत्वान्निवर्तयितव्य इतिवादि—विज्ञानवादिवदास्तिकोऽपि न स्वनाशार्थं प्रवर्तेत इत्याह—**स्वनाशार्थमिति**। **संसार्यात्मदर्शनमिति**। संसारित्वेनात्मनो दर्शनमित्यर्थः। आभास एव तत्त्वंपदवाच्य इति मतं समर्थ्याभासातिरिक्तं चैतन्यं तत्त्वंपदवाच्यमिति समर्थयति—**अथवेति**।

**अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीव इति विवरणकाराः। 'अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः, बुद्धिप्रतिबिम्बितं चैतन्यं जीवः, अज्ञानोपहितं तु बिम्बचैतन्यं शुद्धमिति संक्षेपशारीरककाराः। अनयोश्च पक्षयोर्बुद्धिभेदाज्जीवनानात्वम्, प्रतिबिम्बस्य च पारमार्थिकत्वाज्जहदजहल्लक्षणैव तत्त्वमादिपदेषु। इममेव च प्रतिबिम्बवादमाचक्षते।**

(लघुव्याख्या.)

बिम्बस्यैव प्रतिबिम्बव्यवहारतत्कृतकार्यसंभवान्नातिरिक्ताभासकल्पनं युक्तं, गौरवादित्यभिप्रायकं विवरणमतमाह—अज्ञानेति। अज्ञानरूपोपाधिना परिचायकेन परिच्छिन्नं कर्णशष्कुल्यादिना श्रोत्रादिवत्। एतेन महाकाशमिव शुद्धमिति लब्धम्। तथाचेश्वरचैतन्यं ग्रीवास्थमुखवदुपाध्यनन्तर्गतमिति फलितम्। उपाध्यादिलक्षणं प्रागेवोक्तम्। अन्तःकरणं स्थूलावस्था बुद्धिः। संस्कारः सूक्ष्मावस्था बुद्धिः। तयोरन्यतरविशिष्टं यदज्ञानं तत्र प्रतिबिम्बितं तदन्तर्गतत्वरूपारोपितधर्मविशिष्टं चैतन्यं बिम्बात्मकमेव जीवः जीवपदाभिधेय आत्मा। तथा च बिम्बप्रतिबिम्बयोः स्वरूपत एकत्वम्। भेदस्तु कल्पितः। अतः स्वरूपेण जीवस्य सत्वाद्बन्धमोक्षयोः सामानाधिकरण्यादिकमपि स्वरसत उपपद्यत इति संक्षेपः। नेयं कल्पना युक्ता 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इति' श्रुतिविरोधात्, किंतु कार्यकारणगतप्रतिबिम्बावेव ताविति संक्षेपशारीरकाचार्यमतमाह—अज्ञानेति। अज्ञानान्तर्गतत्वरूपारोपितधर्मविशिष्टं चैतन्यमित्यर्थः। बुद्धीति। बुद्ध्यन्तर्गतत्वरूपारोपितधर्मविशिष्टं चैतन्यमित्यर्थः। अतो न वार्तिककारमतादविशेषस्तन्मतेऽतिरिक्तस्यैवाभासस्याङ्गीकारात्। शुद्धमाह—अज्ञानेति। अज्ञानोपलक्षितमित्यर्थः। शुद्धं जीवेशयोरनुस्यूतसाक्षिरूपम्। अत एवोपहितशब्देन निर्देशः। भास्यभासकभावरूपस्याज्ञानकृतसंबन्धस्य च व्यवहारकाले सत्वात्।

अनयोः बिम्बप्रतिबिम्बावीशजीवौ कार्यकारणोपाधिकौ जीवेशावित्युक्तयोः। नानात्वमिति। बुद्ध्यवच्छिन्नस्यैव संसाराश्रयत्वप्रतीतेर्बुद्धेरुपाधित्वमाश्रयतयाऽवच्छेदकतया चावश्यं, तथा च जीवनानात्वमिति भावः। आभासवादाद्वैलक्षण्यकल्पनायाः फलमाह—प्रतिबिम्बस्येति। प्रतिबिम्बस्वरूपचितः सत्यत्वात् प्रतिबिम्बत्वरूपधर्मविशिष्टतया मिथ्यात्वेऽपि प्रतिबिम्बत्वोपलक्षितं स्वरूपचैतन्यं त्रिकालाबाध्यमेवेति भावः। जहदजहल्लक्षणैव प्रतिबिम्बत्वाद्यंशपरित्यागेन वाच्यार्थैकदेशरूपशुद्धचिद्बोधोपयिका वृत्तिर्भागाख्या लक्षणैव। इममेव एकैव कूटस्थचिदुपाध्यन्तर्गतत्वादिना जीवेशादिव्यपदेशभाक् न तु भिद्यतेऽप्याभासेनेति पक्षं प्रतिबिम्बवादं स्वरूपतः सत्यः प्रतिबिम्ब इति वादं आचक्षते तत्त्वविद इति शेषः।

## ( संदीपनम् )

एकाविद्यापक्षेऽपि जीवेश्वरभेदो जीवनानात्वं चेत्यभिप्रेत्याह—अज्ञानोपहितमिति। बिम्बचैतन्यमित्यत्र बिम्बपदं स्वरूपकथनार्थम्। अन्तःकरणतत्संस्कारावच्छिन्नेत्यज्ञानविशेषणं जीवनानात्वस्य सुषुप्तौ जीवनाशाभावस्य च संपादनाय। अन्तःकरणावच्छिन्नस्य जीवत्वे कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इति श्रुतिः प्रमाणं, भगवद्भाष्यकारवचनं च 'अन्तःकरणसंभिन्नबोधः स त्वंपदाभिधः, इति। उक्तोभयपक्षे जीवनानात्वमुपपादयति—अनयोरिति।

**अज्ञानविषयीभूतं चैतन्यमीश्वरः, अज्ञानाश्रयीभूतं च जीव इति वाचस्पतिमिश्राः। अस्मिन्पक्षेऽज्ञाननानात्वाज्जीवनानात्वम्, प्रतिजीवं च प्रपञ्चभेदः, जीवस्यैव स्वाज्ञानोपहिततया जगदुपादानत्वम्, प्रत्यभिज्ञा चातिसादृश्यात्, ईश्वरस्य च सप्रपञ्चजीवाविद्याधिष्ठानत्वेन कारणत्वोपचारादिति। अयमेवावच्छेदवादः।**

## ( लघुव्याख्या. )

ईशेऽज्ञानकल्पनं न युक्तं, भ्रमकारणतया कल्पनीयस्य तस्य भ्रमाश्रये जीव एवौचित्यात्, कार्यकारणयोरेकाश्रितत्वनियमात्, अन्यथाऽतिप्रसङ्गात्, तस्मात् 'तस्यैव नित्यतृप्तस्य सदानन्दमयात्मनः। अवच्छिन्नस्य जीवस्य संसृतिः कथ्यते बुधै'रित्यादिस्मृतेरविद्यावच्छिन्नानवच्छिन्नावेव जीवेशावित्यभिप्रायकं वाचस्पतिमतमवतारयति—अज्ञानेति। 'ब्रह्म नास्ति न भातीति जीवनिष्ठभ्रमकारणीभूताज्ञानविषयीभूतं, न त्वविद्याश्रयम्। अभ्रान्तत्वादित्यर्थः। भ्रान्तत्वात् 'ज्ञाज्ञौ द्वावजावीशानीशाविति श्रुतेश्चाज्ञानाश्रयो जीव एवेत्याह—अज्ञानेति। आश्रयतासम्बन्धेनाज्ञानविशिष्टमित्यर्थः। न चाज्ञानाश्रयस्यैव जीवत्वादात्माश्रय इति वाच्यम्। अज्ञानोपहितस्यैव जीवत्वेन जीवाश्रितस्याज्ञानस्य स्वाश्रितत्वाभावात्, दण्डत्वस्येव दण्डत्वोपहितवृत्तित्वेऽपीत्यन्यत्र विस्तरः। अज्ञाननानात्वादिति। कस्मिंश्चिज्जीवे मुक्तेऽपि कस्यचिद्बन्धोपलम्भाज्जीवभेदप्रयोजकं जीवोपाध्यज्ञाननानात्वं कल्प्यत इत्यर्थः। अन्यथा 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवदित्यादिश्रुतिविरोधापत्तेरिति भावः। जीवाज्ञानकार्यत्वात्स्वप्नवत्प्र-

---

१ अतःपरं 'अस्मिंश्च पक्षेऽवच्छेदवादपक्षे यथा दण्डत्वोपहितस्य घटकारणत्वेन दण्डाश्रितस्य कारणत्वस्य (न) दण्डत्ववृत्तिता, यथा वा दण्डत्वोपहितस्यैव दण्डत्ववत्त्वेन दण्डाश्रितस्य दण्डत्वस्य (न) स्वाश्रितत्वम्।' इतिदृश्यते।

पञ्चोऽपि प्रति जीवं भिन्न एव परिणामिविवर्तोपादानयोर्भेदादित्याह—प्रतिजीवमिति । युगपदनेकपुरुषीयभ्रमसिद्धानेकप्रातीतिकपदार्थवदपेक्षाबुद्धिजन्यानेकपुरुषीयद्वित्वादिवच्च जीवभेदेन वियदादिप्रपञ्चनानात्वमित्यर्थः एकाज्ञाननाशेऽप्यन्याज्ञानकार्याकाशादीनांदर्शनात्प्रपंञ्चनानात्वमिति भावः । वस्तुतस्तु सकलजीवाविद्याभिरेक एव प्रपञ्चो जन्यते । एकस्मिन्मुक्ते च महापटनाशे खण्डपट इव महाप्रपञ्चनाशे खण्डप्रपञ्च इति प्रपञ्चभेद इत्यन्यत्र विस्तरः । नन्वविद्या यदि जीवाश्रिता तदा ब्रह्म कथं प्रपञ्चोपादानम्, परिणममानाऽविद्याश्रयत्वाभावादित्याशङ्क्यानावृतत्वेन जडशक्त्ययोगान्न ब्रह्मण उपादानत्वं किंतु 'पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रमिति श्रुतेर्जीवस्यैवेत्याह—जीवस्यैवेति । नन्वज्ञानाश्रयस्याज्ञानप्रेरकत्वाद्ययोगात् कथं कर्तृत्वादिकं तत्राह—अज्ञानेति । अज्ञानरूपोपाधिना परिचितत्वादित्यर्थः । तथाचाज्ञानस्योपाधित्वेन जीवत्वानाश्रयत्वाज्जीवशरीरेऽप्रवेशादज्ञानोपहितस्य कर्तृत्वादिकं संभवत्येवेति भावः । उपहितरूपेण जीवचैतन्यं सृष्टिस्थितिसंहारे कारणम्, विशिष्टरूपेण भ्रान्तमिति निष्कर्षः । ननु यदि जीव एवोपादानं प्रतिजीवं च प्रपञ्चभेदस्तर्हि कथं यो घटस्त्वया दृष्टः स एव मयेति प्रत्यभिज्ञा तत्राह—प्रत्यभिज्ञा चेति । त्वया दृष्टो मया दृश्यत इत्याद्याकारिकेत्यर्थः । सादृश्यादिति । युगपद्भ्रमसिद्धानेकसर्पादाविव, तदेवेदमौषधमित्यादाविव च तद्वृत्त्यसाधारणधर्मवत्त्वादित्यर्थः । धर्मिणां प्रतिजीवं भेदेऽपि धर्माणामभेदात्प्रत्यभिज्ञोपपद्यत इति भावः । ननु जीव एव जगदुपादानं तर्हि "यतो वा इमानि भूतानि जायन्ते" इति श्रुतिविरोधस्तत्रेश्वरस्यैव जगत्कर्तृत्वप्रतिपादनादित्यंत आह—ईश्वरस्येति । मायाविषयस्येत्यर्थः । सप्रपञ्चेति । प्रपञ्चसहिता या जीवोपाधिभूताऽविद्या तद्विषयत्वेन गौणकारणताव्यवहारात् । अभिन्ननिमित्तोपादानत्ववादिनां वेदान्तिनां मते यत्र कर्तृत्वादिना निमित्तत्वं तत्रैवोपादानत्वं मुख्यं वाच्यं तदुभयं च स्वप्नं प्रतीव प्रपञ्चं प्रत्यपि जीवस्यैवाविद्याश्रयत्वेन संभवति न ब्रह्मणः । अतः शुक्त्यादेरिवाविद्याविषयत्वेनोपादानत्वं भाक्तं, न मुख्यमिति भावः । ननु तर्हि मायोपाधिकानां रामकृष्णादीनामनुपास्यत्वं स्यादिति चेत् भ्रान्तोऽसि, जीवाज्ञानविषयस्य ब्रह्मण एव भक्त्यादिवशाद्रामकृष्णादिना [ नारूपेण ] प्रादुर्भावस्य भक्तिकृतफलसद्भावादेश्चाङ्गीकारात्, रजताद्यात्मना दोषवशात् शुक्त्यादेरिवेत्यन्यत्र विस्तरः । अयमेव अविद्यावच्छिन्नानवच्छिन्नावेव जीवेशाविति पक्षः अवच्छेदवादः महाकाशस्य घटाकाशादिरिव जीवः शुद्धस्य परमात्मनोंऽश इति वादः । शब्दार्थस्तु अवच्छिद्यते अयमयं न भवत्ययमेतादृशगुणक इति परिच्छेदः प्राप्यते इत्यवच्छेदः इति । एतन्मतनिष्कर्षस्त्वस्मत्कृतसिद्धान्तबिन्दुगुरुटीकायां द्रष्टव्यः ।

( संदीपनम् )

परज्ञा नेच्छादिवत्पराविद्यायाः प्रत्यक्षत्वाभावेन परप्रत्यक्षत्वाभावादाह—**प्रतिजीवं** चेति । अत्र केचन पराविद्याकल्पितत्वं स्वाप्रत्यक्षे तन्त्रं न, किन्तु स्वाविद्याकल्पितत्वं स्वप्रत्यक्षे तन्त्रम् ॥ तथा यावतां पुरुषाणां यद्वस्तु प्रत्यक्षं तावतामविद्याभिरेव तदारब्धम् । नचैकस्य मोक्षे तदविद्या-

नाशात् तत्प्रपञ्चनाशेन पुनः प्रपञ्चप्रत्यक्षानुपपत्तिरिति वाच्यम्, खण्डघटवत् पुनरुत्पत्तेः। चरम-स्मरणस्य संस्कारनाशकत्ववद्वा चरमाविद्यानाशस्यैव तन्नाशकत्वकल्पनेन त्वदुक्तदोषाभावादेव-मेव सर्वसामञ्जस्येऽनन्तकोटिप्रपञ्चकल्पनं स्वभिन्नत्वे सति स्वगतभूयोधर्मवत्त्वरूपेण सादृश्येन प्रत्य-भिज्ञासमर्थनं न चातिरमणीयमिति वदन्ति। पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्र-मित्यादिश्रुत्यनुसारेणाह–जीवस्यैवेति। प्रत्यभिज्ञेति। यज्ञदत्तेन यो घटो दृष्टः स एवायं मया विष्णुमित्रेण दृश्यत इत्यादिरूपेत्यर्थः। तर्हि ईश्वरस्य कारणत्वव्यपदेशः कथं तत्राह–ईश्वरस्येति।

**अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अज्ञानप्रतिबिम्बितं चैतन्यं जीव इति वा, अज्ञानानुपहितं शुद्धं चैतन्यमीश्वरः, अज्ञानोपहितं जीव इति वा, एकजीववादाख्यो मुख्यो वेदान्तसिद्धान्तः। इममेव च दृष्टिसृष्टि वादमाचक्षते।**

(लघुव्याख्या.)

प्रपञ्चभेदे जीवभेदे च गौरवान्नावच्छेदवादो युक्तः किन्तूपहितानुपहितावेव जीवेशाविति दृष्टिसृष्टिपक्षमाह–अज्ञानेति। अज्ञानोपहिताद्भिन्नमित्यर्थः। शुद्धं सर्वज्ञत्वादिधर्मातीतसच्चिदा-नन्दमात्रस्वरूपम्। नच तस्य यः पृथिव्यां तिष्ठन्नित्याद्यन्तर्यामित्वबोधकश्रुतिविरोधः, निरुपा-धिकस्य तस्य प्रपञ्चेऽवस्थानायोगादन्तर्यामित्वाद्यसंभवादिति वाच्यम्। स्वतोऽवस्थानायोगेऽपि जीवचैतन्याधिष्ठानस्य जीवद्वारावस्थानसंभवान्न कोऽपि दोषः। 'अजो ह्येको जुषमाणोऽनुशेते जहात्यादिश्रुत्या जीवस्याज्ञानोपाधिकत्वश्रवणादज्ञानोपाधिकं चैतन्यं जीवः। अज्ञानो-पाधिकत्वेऽपि न विशिष्टो नवाऽज्ञानप्रतिबिम्बितः किंतूपहित एवेत्याह–अज्ञानेति। अज्ञानो-पाधिना जीवत्वेन ज्ञापितं न त्वज्ञानविशिष्टत्वेन जीव इत्यर्थः। नाज्ञानवैशिष्ट्यान्मनोवैशिष्ट्याद्वा जीवानां भेद उचितः। तथा च सति हस्ताद्यवच्छिन्नत्वादिनापि प्रातीतिकानन्तभेदापत्तेरति-गौरवम्। अतोऽज्ञानमेकं तदुपाधिको जीवोऽप्येक एवेति वादोऽतिप्राचीनाभिमतो युक्त इत्यभिप्रेत्य प्रकृतवादमुरीकरोति–मुख्येति। मुख्यत्वं च 'तदेतत्त्रयं स्वप्नं मायामात्रमित्यादि-श्रुत्या स्वप्नत्वसमर्थनेन स्वप्नदृष्टान्तसलिलधारया समस्तशङ्कामलप्रक्षालनात्। एकजीववादाख्य एक एव स्वप्नद्रष्टेव सजीवजीवोऽअन्ये स्वप्नकल्पिता निर्जीवजीवा इत्येकजीववादाख्यः। अथवा सर्वत्र समष्टिजीवो हिरण्यगर्भाख्यो मुख्योऽज्ञानोपहितोऽन्येऽन्तःकरणावच्छिन्ना व्यष्टिभूता जीवाभासा इति सविशेषानेकशरीरैकजीववादः। यद्वा। कायव्यूहादाविवैकेनैव जीवेन सर्वशरीरेष्वहमित्यादिव्यवहार इत्येकजीवेन सर्वशरीरसजीववादः। इममेव च मतभेदेन त्रिविधमपि एकाज्ञानोपाधिकमेकजीववादं, दृष्टिरेव जगतः सृष्टिः नत्वीशसृष्टस्य प्रमाणादिना जीवस्य दृष्टिरिति वादम्। आचक्षते कथयन्ति। प्राचीना इति शेषः।

(संदीपनम्)

एकजीववादे द्वितीयं मतमाह–अज्ञानानुपहितमिति।

**अस्मिंश्च पक्षे जीव एव स्वाज्ञानवशाज्जगदुपादानं निमित्तं च, दृश्यं च सर्वं प्रातीतिकं, देहभेदाच्च जीवभेदभ्रान्तिः, एकस्यैव च स्वकल्पितगुरु-**

---

१ अयमेव। २ आख्यायते।

**शास्त्राद्युपबृंहितश्रवणमननादिदार्ढ्यादात्मसाक्षात्कारे सति मोक्षः, शुकादीनां मोक्षश्रवणं चार्थवाद एव, महावाक्ये च तत्पदमनन्तसत्यादिपदवदज्ञानानुपहितचैतन्यस्य लक्षणयोपस्थापकमित्याद्यवान्तरभेदाः स्वयमूहनीयाः।**

(लघुव्याख्या.)

अस्मिन्पक्षे दृष्टिसृष्टिपक्षे स्वाज्ञानवशात् स्वं प्रत्यावरकं यदज्ञानं तद्वशाज्जगदुपादानं स्वस्मिन् स्वप्नवत्सर्वकार्यकल्पकं स्वाविद्यया स्वप्नवद्विषयाकारेण विवर्तमानमिति यावत्। निमित्तं च कर्त्ता च। कर्तृत्वं कार्यानुकूलज्ञानवत्त्वमात्रं नतु स्रष्टव्यालोचनवत्त्वम्, रजतादिभ्रमे तस्याहेतुत्वाद्वियदादिभ्रमे तदनपेक्षणात्। कार्यानुकूलं चाधिष्ठानमात्रं, तच्च जीवेऽस्त्येवान्यथा भ्रमानुपपत्तेः। तथाच यथा स्वप्नभ्रमे आलोचनाभावेऽपि स्वात्मकाधिष्ठानप्रकाशेन स्वस्य जगदात्मना विवर्तमानत्वेनोपादानत्वं तदनुकूलज्ञानवत्त्वेन निमित्तत्वं च। एवं प्रपञ्चेऽपि ईशस्यैव तदुपादानत्वकल्पने तु मायाविकर्तृकेन्द्रजालादाविव आलोचनमपि कल्पनीयं तच्च न युक्तं, गौरवात्। तथा च स्वप्न इव स्वाविद्यया जगदादिरूपेण विवर्तमानत्वादुपादानत्वं तदनुकूलज्ञानवत्त्वाच्च निमित्तत्वमिति यावत्। ननु कथमावृतस्य जीवस्य तदनुकूलज्ञानवत्त्वं सर्वज्ञस्यैव तत्संभवादित्यत आह—दृश्यं चेति। अज्ञानतत्कार्यजातं प्रातीतिकं प्रतीतिमात्रकालिकम्। तथाच यदाऽनादिमायया साक्षिभास्यं जगदुत्थाप्यते तदावश्यं साक्षिरूपेण जीवेन स्वस्मिन् कल्पितं कार्यं स्वप्नवत्प्रकाश्यत एव न तत्रावरणं तद्भञ्जकमनोवृत्तिर्वा कल्प्यते गौरवात्। इन्द्रियान्वयव्यतिरेकौ स्वप्न इव नेयौ। तथाच प्रमाणमन्तरेणैव स्वसंनिहितसर्वावभासकत्वाज्जीवस्यापि सर्वज्ञत्वेन स्रष्टृत्वोपपत्तिरिति भावः। नन्वेकजीववादपक्षे, चैत्रो न मैत्र इत्यादिभेदप्रत्यक्षविरोधस्तत्राह—देहेति। देहावच्छिन्नानां प्रातीतिकभेदेऽप्यविद्यावच्छिन्नरूपेणैक्यं न विरुद्धमिति भावः। अत एव चैत्रसुखादीनां मैत्रेणाननुसन्धानमपि देहावच्छिन्नानामिवान्तःकरणावच्छिन्नानामपि प्रातीतिकभेदाङ्गीकारात्। अविद्यावच्छिन्नस्य चैतन्यस्य सर्वानुसंधातृतायामिष्टापत्तेरित्यादिमहद्व्याख्याने प्रपञ्चितमस्माभिः। नन्वेकजीववादे वस्तुत उपदेष्टव्यादन्यस्योपदेष्टुरभावात्सर्वज्ञस्यासर्वज्ञस्य वा शास्त्रप्रयोक्तुरभावेन शास्त्राभावाच्च कथमुपदेशसाक्षात्कारादिकं तत्राह—एकस्यैवेति। स्वप्न इव 'तत्त्वमस्यादिवाक्यवक्तृत्वादिना कल्पितगुरुशास्त्रादेरुपदेष्टृत्वकरणत्वादिसंभवान्न साक्षात्कारानुपपत्तिरित्यर्थः। नन्वेकजीवपक्षे कथमस्माकमिदानीमप्यनिर्मोक्षः शुकादीनां मोक्षेणास्माकमपि मोक्षौचित्यात्, तेषामनिर्मोक्षे तु तन्मुक्तिप्रतिपादकशास्त्रविरोधोऽस्मदादीनामनाश्वासप्रसङ्गश्चेत्यत आह—शुकेति। अर्थवादः विधेयस्य श्रवणादेः स्तुतिः। अयं भावः—स्वप्नन्यायेन कल्पिततद्भेदतत्तन्मुक्तानुवादकानां तत्परत्वाभावात् ज्ञानतत्साधकश्रवणादिस्तुतिमात्रपरत्वं नात्मभेदमुक्त्यादिमात्रपरत्वं तथाऽस्मदादीनां शास्त्रप्रामाण्यादेव प्रवृत्त्युपपत्तिश्चेति न कोऽपि दोष इत्यन्यत्र विस्तरः। ननु यदि जगदुपादानं जीव एव तदा तत्पदस्येशपरामर्शकत्वानुपपत्तिस्तत्तेजोऽसृजतेत्यादिना भवन्मते जीवस्यैव प्रक्रान्तत्वात्तत्राह—महावाक्येति। तत्त्वमस्यादि महावाक्ये चेत्यर्थः। सत्यादिपदवत् यथा सत्यं ज्ञानमनन्तमिति वाक्ये सत्यादिपदम् 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्यादिना जगत्कारण-

त्वेन प्रतिपाद्यमानमप्यपरामृश्य सत्यत्वाद्युपस्थितिद्वारा लक्षणया कालत्रयाऽबाधितं सद्व्यक्तिमात्रं बोधयति, तथा तत्पदमपि सर्वज्ञत्वाद्यारोपितधर्मोपस्थितिद्वाराऽनुपहितं चिन्मात्रं बोधयति, तत्रैव तात्पर्यादिति न कोऽपि दोषः। ननु तान्त्रिकानुभवविरुद्धेयं व्युत्पत्तिस्तत्राह-इत्यादीति। तत्तेजोऽसृजतेत्यादिना प्रतिपादितं तत्सत्यमित्यत्र तत्पदेनानूद्य सत्यमित्यनेन परमात्मत्वं प्रसाध्य पुनः स आत्मेति व्यवहारेणाभेदं तत्त्वमसीत्यनेन दृढीकरोति। तत्र त्वंपदं लाक्षणिकं, तत्पदं त्वाकाशादिपदवद्धर्मिमात्रस्य शक्त्या बोधजनकमित्यवान्तरभेदा इति भावः। मतनिष्कर्षस्त्वस्मदीयमहद्व्याख्यानेऽनुसन्धेयः।

( संदीपनम् )

ननु जीवस्यैकत्वे गुरुशिष्यभावः कथं, कथमेकस्यैव श्रवणादिना मम मोक्षः स्यादित्याशङ्कया बहूनां श्रवणादौ प्रवृत्तिश्च न स्यादित्याह—एकस्यैव चेति। स्वप्ने यथा गुरुशिष्यभावकल्पनया व्यवहारस्तथा जागरणेऽपि। यथा वा स्वप्ने एकस्य नानात्वकल्पनया क्रीडा तथा श्रवणादौ प्रवृत्तिः। नित्यमुक्तानन्तकोटिब्रह्माण्डेश्वरश्रीकृष्णसौभरिप्रभृतीनां यथा कायव्यूहेन धर्मादौ प्रवृत्तिस्तथा श्रवणादौ प्रवृत्तिः शीघ्रमोक्षार्थम्। नच जीवस्यैक्ये कथं बहूनां प्रवृत्तिरिति शङ्कास्मन्मते 'कामः सङ्कल्पोविचिकित्सेत्यादि, 'कुर्वन्त्यचेतनाः कर्मेत्यादि, 'हर्षशोकभयक्रोधेत्यादि-श्रुतिस्मृत्यादिपर्यालोचनयाऽचेतनस्यैव प्रवृत्तेः, तान्यचेतनान्यन्तःकरणानि बहूनीति नोक्तदोष इति दिक्। ननु तर्हि कथं शुको मुक्तः प्रह्लादो वेति प्रथा संगच्छते तत्राह—शुकादीनामिति। नन्वस्मिन्पक्षे लक्षणाऽस्ति न वा, सत्यामपि तस्यां कस्योपस्थापकत्वं तत्राह—महावाक्येति।

**ननु वस्तुनि विकल्पासंभवात्कथं परस्परविरुद्धमतप्रामाण्यं, तस्मात्किमवहेयं किमुपादेयमितिचेत्, न। क एवमाह वस्तुनि विकल्पो न संभवतीति, स्थाणुर्वा पुरुषो वा राक्षसो वेत्यादिविकल्पस्य वस्तुन्यपि दर्शनात्। अतात्विकी सा कल्पना पुरुषबुद्धिमात्रप्रभवा, इयं तु शास्त्रीया जीवेश्वरविभागादिव्यवस्थेतिचेन्नूनमतिमेधावी भवान्। अद्वितीयात्मतत्त्वं हि प्रधानं फलवत्त्वादज्ञातत्वाच्च प्रमेयं शास्त्रस्य। जीवेश्वरविभागादिकल्पनास्तु पुरुषबुद्धिमात्रप्रभवा अपि शास्त्रेणानूद्यन्ते तत्त्वज्ञानोपयोगित्वात्, फलवत्संनिधावफलं तदङ्गमितिन्यायाद् भ्रमसिद्धस्यापि श्रुत्यानुवादसंभवात्। एतेन द्वैतज्ञानेनाद्वैतज्ञानस्य बाधो निरस्तः। घटादिद्वैतज्ञानस्याद्वैतसन्मात्रांशेऽज्ञाते प्रामाण्याभ्युपगमाच्च। ज्ञानाज्ञानयोः समानाश्रयविषयत्वनियमात्, जडे च प्रमाणप्रयोजनयोरभावेनाज्ञानानङ्गीकारात्, सर्वप्रमाणानां चाज्ञातज्ञापकत्वेनैव प्रामाण्यात्। तदवच्छिन्नचैतन्याज्ञानादेव तत्राप्यज्ञातव्यवहारोपपत्तेः, प्रामाण्यस्य चाज्ञातज्ञापकत्वरूपत्वादन्यथा स्मृतेरपि तदापत्तेरिति। एवं वेदान्तेषु सर्वत्रैवंविधविरोधेऽयमेव परिहारः। तदाहुर्वार्तिककारपादाः—**

**यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।**
**सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता॥ १॥ इति।**

---

१ यथाहु०। २ ०येह स्यात्साध्वी।

( लघुव्याख्या. )

नन्वेकरूपे प्रयत्नानिष्पाद्ये वस्तुनि कथं परस्परविरुद्धमतानि ? कथं वा तेषां प्रामाण्यमित्याशङ्कते—नन्विति । वस्तुनि पुरुषप्रयत्नानिष्पाद्ये विकल्पासंभवात् विरुद्धानेकपक्षसमावेशासंभवात् । प्रयत्नसाध्ये कर्मणि कालविषयभेदादिना षोडशिग्रहणाग्रहणादीनां व्यवस्था संभवति नातथाभूते विरुद्धपक्षाणामिति भावः । किं प्रयत्नानिष्पाद्ये विरुद्धकोटिरेव न संभवति आहोस्विद्विरुद्धकोटिमत्त्वादप्रामाण्यात् फलवत्त्वं न संभवतीत्यभिप्रायः ? तत्राद्ये व्याघातः, द्वितीये साक्षात्फलवत्त्वाभावे इष्टापत्तिरेवेत्यभिप्रायेण सिद्धान्तयितुमुपक्रमते—क एवमिति । विकल्पमात्रेण न तवेष्टसिद्धिः प्रकृते शास्त्रीयविकल्पव्यवस्थाया आवश्यकत्वात्तव च सा कठिनेत्यभिप्रायेणाशङ्कते—अतात्विकीति । परम्परयापि फलवत्त्वशून्या सा कल्पना संशयात्मिका धीः पुरुषबुद्धिमात्रप्रभवा कोटिद्वयोपस्थितिजन्या । मात्रपदं तात्पर्यप्रयुक्तत्वं वारयति । शास्त्रीया शास्त्रतात्पर्याधीना । तथाचैकतरप्रामाण्यनिश्चय आवश्यक इति भावः । अनुवादकस्याप्यनूद्यांशे तात्पर्यं वदन् भवान्न पण्डितः किंतु केवलं श्रुतिभारवाहक एवेत्युपहसन् समाधत्ते—नूनमिति । स्वाभिप्रायं विशदयति—अद्वितीयेति । जीवपरमात्मनोरभेदरूपात्मतत्त्वं हीत्यर्थः । प्रधानम् इतरप्रधानो(?)पकार्यप्रतिपत्तिकम् । फलवत्त्वात् ज्ञानद्वारा साक्षान्मुक्तिरूपफलवत्त्वात् । अज्ञातत्वाच्च मानान्तरानधिगतत्वरूपापूर्वत्वाच्च । प्रमेयं तात्पर्यविषयः । उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय इति श्रुत्या प्रकृतलिङ्गषट्कोपेत एव श्रुतीनां तात्पर्योक्तेः । अस्ति च छान्दोग्यषष्ठादावद्वैते 'एकमेवाद्वितीयमित्युपक्रमः ऐतदात्म्यमिदं सर्वमित्युपसंहारः (१) तत्त्वमसीति नवकृत्वोऽभ्यासः ( २ ) आचार्यवान् पुरुषो वेदेत्यपूर्वत्वम् ( ३ ) तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति फलवत्त्वम् (४) येनाश्रुतं श्रुतं भवतीत्येकविज्ञानेन सर्वविज्ञानमर्थवादः ( ५ ) यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयमित्याद्युपपत्तिश्चेति ( ६ ) तत्रैव शास्त्रतात्पर्यं नान्यत्रेत्यन्यत्र विस्तरः । मूले चात्र फलवत्त्वाज्ञातत्वयोर्द्वयोरेव प्रदर्शनं प्रमाशरीरे तावन्मात्रप्रवेशादिति संक्षेपः । जीवेश्वरकल्पनाया अपूर्वत्वं प्रतिक्षिपन् तात्पर्यविषयत्वं प्रतिक्षिपति—जीवेति जीवेश्वरविभागास्त्वित्यर्थः । पुरुषेति । भिन्नभिन्नपुरुषीयानेकप्रतिभादिमात्रजन्या अपि शास्त्रेण दर्शितश्रुत्या । पुरुषबुद्धिमात्रकल्पितत्वेऽपि तेषामेवानुवादे बीजमाह—तत्त्वज्ञानेति । लक्षणया शुद्धचिद्बोधानुकूलविशिष्टोपस्थितिविषयत्वादित्यर्थः । तत्त्वज्ञानोपयोगित्वं शरीरादेरप्यस्तीत्यत आह—फलवत्संनिधौ स्वातन्त्र्येण फलजनकसन्निधौ पठ्यमानमफलं स्वातन्त्र्येण फलाजनकं तदङ्गं प्रधानोपकारकमिति यावत् । यथा दर्शपूर्णमासादेः प्रयाजादिकम् । भ्रमेति । भ्रममात्रशरीरजाग्रत्स्वप्नसुषुप्त्याद्युपाधिकत्वेन भ्रमसिद्धस्यापि विश्ववैश्वानरादेः श्रुत्या 'सोऽयमात्मा चतुष्पादित्यादिश्रुत्या । श्रुतीनामद्वैतपरत्वं सन् घट इत्यादिप्रत्यक्षादिविरोधान्न संभवति, नचाद्वैतश्रुतिविरोधेन प्रत्यक्षादेरेवाप्रामाण्यमिति वाच्यम्, प्रत्यक्षस्यैव सर्वप्रमाणोपजीव्य-

त्वेन बलवत्त्वाद्विनिगमकाभावाच्चेति जल्पितमतिदेशेन निराकरोति—एतेनेति । अद्वैतस्य फलवत्त्वापूर्वत्वादिना वास्तवत्वेनेत्यर्थः। द्वैतज्ञानेन 'सन् घट इत्यादिद्वैतप्रत्यक्षेण अद्वैतज्ञानस्य 'नेह नानास्ति किंचनेत्यादिश्रुतिबोधिताद्वैतज्ञानस्य सर्वमिथ्यात्वेन शुद्धाखण्डार्थबोधस्य बाधः अवगतार्थत्वपरित्यागः । न केवलमद्वैतस्य बलवत्त्वात्प्रत्यक्षाद्यबाध्यत्वं किंतु प्रत्यक्षादेः स्वार्थे प्रामाण्याभावादपीत्याह—द्वैतेति । सन्मात्रांशे केवलशुद्धे न तु घटाद्यंशे अज्ञाते अज्ञानविषयतावति प्रामाण्याच्च अबाधितार्थविषयकत्वप्रामाण्यात्; चः पूर्वहेतुसमुच्चायकः । ननु कथं चक्षुरादिजन्यद्वैतज्ञानस्यापि सदंशे ब्रह्मण्येव प्रामाण्यं रूपादिहीनतया ब्रह्मणश्चक्षुराद्ययोग्यत्वात् । नच स्वरूपतोऽयोग्यत्वेऽपि चन्द्रावच्छिन्नत्वेन राहोरिव घटाद्यवच्छिन्नत्वेन योग्यतेति वाच्यम् । शब्दाद्यवच्छिन्नत्वेन गगनादेरपि योग्यताप्रसङ्गात् । राहोस्तु नीलस्य स्वतो योग्यस्य दूरदेशविशेषेणायोग्यस्य शुक्लभास्वरचन्द्रसंबन्धाच्चाक्षुषत्वमिति विशेषात् । नच "न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इति मीमांसकोक्तरीत्या कालस्येव ब्रह्मणो भविष्यतीति वाच्यम् । तस्याप्यत एवानङ्गीकारात् । नचानुभवविरोधः । परमाणुवानयं देश इत्याद्यनुमानरूपज्ञानलक्षणयाप्युपपत्तेरिति चेन्न । इदानीं घट इति स्वाधिकरणक्षणावच्छिन्नत्वेनानुभवस्य सार्वजनीनस्यापलापापत्तेः । नच रूपादिसामग्रीबाधात्कथमनुभवः स्यादिति वाच्यम् । प्रतिनियतेन्द्रियग्राह्यप्रत्यक्षत्वावच्छिन्नं प्रत्येव रूपादेर्हेतुत्वकल्पनात् । सर्वेन्द्रियग्राह्यं तु ब्रह्म कालश्च, अतो न रूपादिहीनत्वेऽपि चाक्षुषत्वानुपपत्तिः । वस्तुतस्तु द्रव्यप्रत्यक्षं प्रत्येव रूपादेः कारणत्वान्न ब्रह्मणः कालस्य वा प्रत्यक्षानुपपत्तिः । तयोः सिद्धान्तेऽद्रव्यत्वात् । ब्रह्मणः स्वप्रकाशसच्चिदानन्दस्य स्वतन्त्रपदार्थत्वात् कालस्य चाविद्यात्मकत्वादिति संक्षेपः । ननु घटं पश्यामीत्यादिना घटादिज्ञानानां घटाद्यंशेऽपि प्रामाण्यग्रहात् कुतः सन्मात्रांश एव प्रामाण्यं तत्राह—ज्ञानेति । ज्ञानाज्ञानयोरेकाश्रयविषयकत्वनियमात् । चिन्मात्राश्रिताज्ञाननाशायोत्पन्ना प्रमाणजन्या वृत्तिः चितमेव विषयीकरोति न घटादिकं मानाभावात् । घटं पश्यामीत्यादिधीस्तु चाक्षुषादिवृत्तिविषयतावच्छेदकत्वेनैव घटादिकं भासयति न मुख्यविषयत्वेन, अतो न तत्र प्रामाण्यमिति भावः । नन्वज्ञातत्वं विना यदि प्रामाण्यं दुर्घटं तदा तादृशप्रतीतिप्रामाण्यान्यथानुपपत्त्याऽज्ञातत्वमप्यस्तु घटादौ प्रतीयतेऽपि घटं न जानामीत्यादिना तत्राह—जडेति । अज्ञानतत्कार्यादावस्वप्रकाशे । प्रमाणेति । आत्मा वा अरे द्रष्टव्य इत्यादिनाऽऽत्मनो दर्शनार्हत्वोक्त्याऽज्ञातत्वेन प्रमेयत्वलाभवदनात्मनोऽज्ञातत्वसूचकप्रमाणस्य जडत्वादेवास्वप्रकाशे स्वप्रकाशत्वकृतभानावरणरूपप्रयोजनस्य चाभावेन, अज्ञानेति विषयतयाऽज्ञानास्वीकारात् । घटाद्यवच्छेदेन चिति स्फुरणावरणाय घटाद्यवच्छेदेन चिति स्वप्रकाशेऽज्ञानविषयतावश्यं कल्प्या, ततस्तदवच्छेदकत्वेनैव घटादीनामभानोपपत्तौ तेष्वज्ञानान्तरकल्पने गौरवादिति भावः । ननु मास्त्वज्ञातत्वं तथापि प्रामाण्ये किमागतं तद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वरूपप्रामाण्यस्य घटादावव्याहतेस्तत्राह—सर्वेति । सर्वप्रतीतीनामज्ञानविषयतावद्विषयकत्वेनैव प्रमात्वादित्यर्थः । एतदनङ्गीकारेऽनिष्टमाह—अन्यथेति । अनधिगतार्थगन्तृत्वं विनापि प्रामाण्याङ्गीकारेत्यर्थः ।

तदापत्तेः प्रामाण्यापत्तेः। तद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वस्य तव मते स्मृतावपि सत्त्वात्। नचानुभवत्वविशेषणेन तन्मते स्मृतेः प्रमात्ववारणमिति वाच्यम्। याथार्थ्याविशेषेऽप्यनुभवत्वविशेषणेन तद्वारणस्य निर्बीजत्वात्। गृहीतग्राहित्वरूपापराध एव तद्वारणे बीजमिति चेत् तर्हि तद्धेतोरेवास्त्विति न्यायेनागृहीतग्राहित्वमेव प्रमालक्षणमुचितमिति भावः। प्रासङ्गिकं परिसमाप्य प्रकृतमाह—वेदान्तेष्विति। वेदान्तेषु 'जीवेशावाभासेन करोति' 'रूपं रूपं प्रतिरूपो बभूव, ज्ञाज्ञौ द्वावजावीशानीशौ, अजो ह्येको जुषमाणोऽनुशेते, इत्यादिश्रुतिषु सर्वत्र तत्तद्वादाभिप्रायपरासु अनन्तशाखास्वासु। एवंविधविरोधे परस्परविरोधेनाप्रामाण्यलक्षणादिविरोधे अयमेव अबाधिताज्ञातफलवदर्थे एव प्रामाण्यं नान्यत्रेति। एतादृशपरिहारे वार्तिकाचार्यसंमतिमाह—तदुक्तमिति। यया यया प्रक्रियया, आभास—प्रतिबिम्बा—वच्छेद—दृष्टिसृष्टिवादान्यतमरूपया पुंसां जीवानां प्रत्यगात्मनि प्रति जडादिप्रातिकूल्येनाञ्चति प्रकाशत इति प्रत्यगात्मा जीवेशजगद्व्यावृत्तोऽखण्डैकरसरूपस्तस्मिन् व्युत्पत्तिर्दृढबुद्धिः प्रक्रिया प्रक्रियते व्युत्पाद्यतेऽनयेत्यभेदसाधनसम्पत् जीवेशविभागादिव्यवस्था साध्वी तदंशे सोपपत्तिकदृष्टिपुरुषं प्रति प्रामाणिकी सा च प्रक्रिया अनवस्थिता अप्रतिष्ठिता। स्वांशे प्रामाण्यरहितेति यावत्। साक्षात्फलवत्त्वाज्ञातत्वादेरभावादिति भावः।

(संदीपनम्)

अथैकमेव चैतन्यं तदप्युपाधिभेदेन भिन्नं तत्र चैकं नित्यमुक्तमपरं च बद्धमित्यादिव्यवस्था कथमित्याशङ्कते—नन्विति। यदुक्तमियं तु शास्त्रीयेत्यादिना तत्सोपहासं दूषयितुमुपक्रमते—नूनमित्यादिना। जीवेश्वरत्वादिविभागस्य शास्त्रप्रमेयत्वाभावं वक्तुमादौ अद्वितीयात्मतत्त्वस्य प्राधान्यं मेयत्वं च व्यवस्थापयति—अद्वितीयेति। प्रधानत्वे हेतुः फलत्वादिति। प्रमेयत्वे हेतुः अज्ञातत्वादिति। जीवेश्वरादीनां शास्त्रप्रमेयत्वं दूषयति—जीवेश्वरादीति। अथ कथं पुरुषबुद्धिमात्रप्रभवस्य श्रुत्यानुवादस्तत्राह—भ्रमसिद्धस्यापीति। एतेनेति। अज्ञाताद्वैतप्रधानविषयत्वेनेत्यर्थः। अज्ञातबोधकं चेत्प्रमाणं तर्हि घटादिबोधकस्य का गतिरित्यत आह—घटादिद्वैतज्ञानस्येति। इदमेव प्रतिपादयति—ज्ञानाज्ञानयोरित्यादि। उपसंहरति—एवमिति।

**श्रुतितात्पर्यविषयीभूतार्थविरुद्धं त्वंवहेयमेवेति शतश उद्घोषितमस्माभिस्तस्मान्न किंचिदेतत्।**

(लघुव्याख्या.)

नन्वनूद्यत्वेऽपि यदि जीवेशविभागकल्पनाऽवान्तरतात्पर्यमादाय साध्वी तदा 'द्वा सुपर्णेति मन्त्रोक्तभेदांशोऽपि साधुः स्यात्तत्राह—श्रुतीति। श्रुतीनां तात्पर्यस्याद्वैत एव प्रदर्शनात्तद्विरुद्धभेदांशो न साधुरिति भावः। शतशः अद्वैतसिद्धिवेदान्तकल्पलतिकाऽद्वैतरत्नादौ। तस्मात् अद्वितीयात्मन्येव सकलप्रमाणसमन्वयसमर्थनात्। एतत् भेदांशादेः प्रामाणिकत्वाप्रामाणिकत्वकथा न किञ्चित् न किमपि, वृथेति यावत्।

(संदीपनम्)

यदुक्तं किमवहेयं तत्राह—श्रुतीति। अतिमेधावीत्यादिनोपालम्भः कुतस्तत्राह-शतशइत्यादिना।

---

१ तुहेय०। त्वत्र हे०।

**तदेवं जीवस्योपाधिनाभिभूतत्वात्संसारोपलब्धिः परमेश्वरस्य तूपाधिवशित्वात्सर्वज्ञत्वादिकमिति सम्यगुपपद्यते व्यवस्था।**

( लघुव्याख्या. )

जीवेशादिव्यवस्थामुपसंहरति—तदेवमिति। अभिभूतत्वात् अनाद्यज्ञानेनावृतत्वात् संसारोपलब्धिः सत्यत्वेन प्रपञ्चोपलम्भः। उपाधिवशित्वात्। वशीकृतमायत्वात्। सर्वज्ञत्वादिकमित्यादिना सर्वान्तर्यामित्वपरिग्रहः। सम्यगुपपद्यते साहङ्कारनिरहङ्काराभ्यामिति भावः।

( संदीपनम् )

'ननु वस्तुनीत्याशङ्क्य यत्समाहितं तदिदानीमुपसंहरति—तदेवमिति।

**ननु भवत्वविद्यावशाज्जीवेश्वरादिविभागव्यवस्था, मानमेयादिप्रतिकर्मव्यवस्था तु कथमिति चेदुच्यते—दृश्यत्वाद्विनाशित्वाच्च परिच्छिन्नाऽसर्वगताप्यविद्याऽनिर्वचनीयत्वेन विचारासहाऽऽवरणविक्षेपशक्तिद्वयवती सर्वगतं चिदात्मानमावृणोति, अङ्गुलिरिव नयनपुरःस्थिता सूर्यमण्डलम्। तत्र चक्षुष एवावरणेऽङ्गुलेरप्यभानप्रसंगात्। अधिष्ठानावरणमन्तरेण च विक्षेपानुपपत्तेः। ततश्च सा पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती निखिलजगदाकारेण परिणमते। सा च स्वगतचिदाभासद्वारा चित्तादात्म्यापन्नेति तत्कार्यमपि सर्वमाभासद्वारा चिदनुस्यूतमेव। तथाच चैतन्यस्य दीपवत् स्वसंबद्धसर्वावभासकत्वाज्जगदुपादानचैतन्यं प्रमाणापेक्षामन्तरेणैव सर्वदा सर्वं भासयत् सर्वज्ञं भवति, तेन तत्र न मानमेयादिव्यवस्था, किंतु जीवे, तस्य बुद्ध्यवच्छिन्नत्वेन परिच्छिन्नत्वात्। तेन चिदभिव्यक्तियोग्यत्वेन[1] येन येनान्तःकरणेन यदा यत्संबद्धं भवति तदेव तदा तदवच्छिन्नो जीवोऽनुभवतीति न सर्वसांकर्यप्रसङ्गः।**

( लघुव्याख्या. )

प्रतिकर्मव्यवस्थामुपपादयिष्यन्नाशङ्कते—नन्विति। मानमेयादीत्यादिना मातृमितिफलानां परिग्रहः प्रतिकर्म ज्ञानविषयः व्यवस्था कदाचिदेव क्वचिदेव केनचिदेव कस्यचिदेव ग्रहणमिति कालदेशसहकारिविशेषादिना विषयविशेषार्थग्राहिता। दृष्टिसृष्टिपक्षे प्रतिकर्मव्यवस्थाया अनपेक्षायामपि सृष्टिदृष्टिपक्षानुसारेण सिद्धान्तयितुमुपक्रमते—उच्यत इति। परिच्छिन्ना सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगिनी असर्वगता स्वकल्पितैकदेशे विद्यमाना अविद्या अघटितघटनापटीयसी अनिर्वचनीयत्वेन सदसद्भिन्नत्वेन विचारासहा धर्मिभिन्नत्वाभिन्नत्वाभ्यां निरूपणानर्हा आवरणं सतो नास्तीति धीरस्तीतिव्यवहारप्रतिबन्धश्चेत्यादिः विक्षेपः आकाशादिप्रपञ्चस्तदनुकूलशक्तिद्वयवती। तथाचासर्वगताया अपि सर्वगतावरकत्वं तदनुकूलशक्तिमत्त्वादिति भावः। परिच्छिन्नस्य स्वापेक्षयातिव्यापकावरकत्वे दृष्टान्तमाह—अङ्गुलिरिवेति। न स्वापेक्षयाङ्गुलिर्व्यापकमावृणोति किंतु स्वापेक्षया परिच्छिन्नमेव, तथा चासिद्धो दृष्टान्त इत्याशङ्कां परिहरति—

[1] योग्येन।

तत्रेति । तत्र दृष्टान्ते चक्षुषः चक्षुरिन्द्रियस्यावरणे निर्गमप्रतिबन्धे । अभानेति । गोलकाद्-निर्गतस्य चक्षुषो न ग्राहकत्वं ग्राह्यासंबन्धादिति भावः । सर्वगतमावृणोतीत्यत्र हेतुमाह—अधिष्ठानेति । शुक्त्यंशस्येव परिपूर्णानन्दरूपाश्रयविशेषस्याभानं विना कार्यासंभवादित्यर्थः । अधिष्ठानभाने भ्रमानुत्पत्तेरिति भावः । सृष्टौ क्रमवैचित्र्ये ज्ञापयिष्यन् विशेषसामग्रीसहकृता-विद्यातो जगदुत्पत्तिमाह—ततश्चेति । सर्वगतावरणाच्चेत्यर्थः । संस्कारेति । कार्यसूक्ष्मावस्थे-त्यर्थः । अनेन वैचित्र्योपपत्तिः सूचिता । जीवकर्मेति । जीवादृष्टेत्यर्थः । अनेन पौर्वापर्यक्रम-स्योपपत्तिः सूचिता । प्रयुक्ता सहकृता । सृष्टिकथनस्य प्रयोजनमाह—सा चेत्यादि । सा च अविद्या चिदाभासद्वारा चित्तादात्म्यापन्ना चिदाभासतादात्म्यवत्त्वादाभासतादात्म्यापन्नचित्ता-दात्म्यवतीत्यर्थः । चिदनुस्यूतं भासकचित्संबद्धम् । सर्वावभासकत्वात् अस्ति भातीति सर्व-व्यवहारजनकत्वात् । भासयत् निरुक्तप्रकारेण प्रकाशयत् सर्वेशं सर्वविषयकेक्षणरूपमायावृ-त्तिमत् । तेन चिदाभासद्वारा सर्वसंबद्धस्य प्रमाणद्वारकसंबन्धापेक्षाया अभावेन तत्र ईश-चैतन्ये न मानमेयादिकृतप्रतिकर्मव्यवस्था । ननु जीवेऽपि कथं व्यवस्था तस्यानावृतचितोऽ-भेदात्तत्राह—तस्येति । जीवस्येत्यर्थः । बुद्ध्यवच्छिन्नत्वेन अन्तःकरणावच्छिन्नत्वेन परिच्छिन्नत्वात् सर्वासंबद्धत्वात् । तथाच ग्राहकचिदभेदेऽपि ग्राहकतदीयोपरागाभावान्नास्य सर्वावभासोऽतो मानमेयापेक्षेति । आदौ सामान्यतः प्रतिकर्मव्यवस्थां दर्शयति—तेनेति । तेन जीवस्योपाधि-कृताऽसवसंबन्धेन चिदभिव्यक्तिः चित्प्रतिबिम्बसंबन्धः सत्त्वप्राधान्याच्चिदुपाधिता वा, येन येन चैत्रमैत्रीयेत्यादिना तदा तत्तदाकारसाक्षात्कारादिवृत्तिजनकाऽसाधारणप्रमाणसमवधानदशायां यत्किञ्चिदविद्यातत्कार्यजातं संबद्धम् अन्वितं तदेव तत्तत्प्रमाणव्यापारेणान्तःकरणान्वितं वस्तु तदा तत्तत्प्रमाणवृत्तिदशायां तदवच्छिन्नो जीवः अन्तःकरणावच्छिन्नः प्रमाता । न साङ्कर्यप्रसङ्गः न युगपत्सर्वार्थग्राहकत्वप्रसङ्गः, न वा पश्यामि जिघ्रामि स्पृशामि स्वादयामि शृणोमि जानामि अनुमिनोमि उपमिनोमि शब्दयामीत्यादिप्रतीतिसिद्धचाक्षुषत्वादिविजातीय-धर्मानवच्छिन्नतया ईशस्येव ग्रहप्रसङ्गः । प्रतिकर्मव्यवस्थायाः परिच्छिन्नत्वेनापेक्षत्वोक्तेरिति भावः।

## ( संदीपनम् )

प्रतिकर्मव्यवस्थामुपपादयितुं भूमिकामारचयति—**नन्विति** । **आवरणेति** । अविद्याऽऽवरण-शक्त्या सर्वगतमखण्डपरमानन्दसाक्षात्कारस्वरूपमात्मानमावृणोति, अत एवात्मा स्वप्रकाशस्व-रूपोऽपि तेन रूपेण न भासते, विक्षेपशक्त्या च वियदादिसावरणब्रह्माण्डान्तं प्रपञ्चमुद्भावयतीत्य-वधेयमुभयशक्तिप्रयोजनम् । **आवृणोतीति** । अन्यथाखण्डानन्दरूपेण ब्रह्मणः स्फूर्तिः स्यादि-त्यर्थः । अल्पदेशव्यापकेन बहुदेशव्यापकस्यावरणे दृष्टान्तमाह—**अङ्गुलिरिति** । अङ्गुलिनावृते चक्षुषि यथा सूर्यमण्डलमावृतमिति बुद्धिस्तथाऽविद्यया बुद्धिपिधानेन ब्रह्मावृतमिति बोध्यम् ॥ ननु तत्रैवं वक्तव्यमङ्गुलिश्चक्षुरावृणोति आवृतं चक्षुश्च न ग्राहकमतो न सूर्यमण्डलदर्शनमित्यत आह—**चक्षुष एवेति** । ननु मास्त्वावरणं ब्रह्मणस्तत्राह—**अधिष्ठानावरणमिति** । यथा शुक्तित्वां-शावरणं विना न रजतोत्पत्तिस्तथा ब्रह्मावरणं विना न प्रपञ्चोत्पत्तिरित्यर्थः । **साऽविद्या** चिदा-त्मानमावृत्य जगदात्मना परिणमत इत्याह—**ततश्चेति** । **सा चेति** । अविद्येत्यर्थः । अग्रे वक्ष्य-

माणस्वसंबद्धभासकत्वोपपादनार्थमाह—तत्कार्यमपीति। ननु भवतु तत्कार्यं चिदनुस्यूतं किं तेन तत्राह—तथा चेति। ननु भवतु जगदुपादानं चैतन्यमेवं क्रमेण सर्वज्ञं तेन प्रकृते किमायातमत आह—तेनेति। प्रमाणनैरपेक्ष्यतया सर्वभासकत्वेनेत्यर्थः। तत्र ईश्वरे। तस्येति। जीवस्य परिच्छिन्नत्वेन सर्वसंबद्धत्वाभावादिति भावः। फलितमाह—तेनेति। चिदभिव्यक्तियोग्यत्वेनेति॥ सर्वस्यैव चिदभिव्यक्तियोग्यत्वेन स्वरूपकथनमात्रपरम्। येनेति। येनान्तःकरणेन स्वपरिणामद्वारा यस्मिन् काले च घटादीनां मध्ये यद्वस्तु संबद्धं भवति विषयी क्रियते तदेव वस्तु तस्मिन् काले तदन्तःकरणावच्छिन्नो जीवोऽनुभवतीत्यर्थः। न सांकर्येति। न बुद्ध्यन्तरावच्छिन्नजीवस्यानुभवप्रसङ्ग इत्यर्थः।

**एवमत्र प्रक्रिया—शरीरमध्ये स्थितः सर्वशरीरव्यापकः सत्त्वप्राधान्येन सूक्ष्मपञ्चमहाभूतारब्धोऽन्तःकरणाख्योऽविद्याविवर्तो दर्पणादिवदतिस्वच्छो नेत्रादिद्वारा निर्गत्य योग्यान्घटादिविषयान्व्याप्य तत्तदाकारो भवति, द्रुतताम्रादिवत्। तस्य च सौरालोकादिवद् झटित्येव संकोचविकासावुपपद्येते। स च सावयवत्वात् परिणममानो देहाभ्यन्तरे घटादौ च सम्यग्व्याप्य देहघटयोर्मध्येऽपि चक्षुर्वदविच्छिन्नो व्यवतिष्ठते। तत्र देहावच्छिन्नान्तःकरणभागोऽहंकाराख्यः कर्तेत्युच्यते। देहविषयमध्यवर्ती दण्डायमानस्तद्भागो वृत्तिज्ञानाख्या क्रियेत्युच्यते। विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्मत्वसंपादकमभिव्यक्तियोग्यत्वमित्युच्यते। तस्य च त्रिभागस्यान्तःकरणस्यातिस्वच्छत्वाच्चैतन्यं तत्राभिव्यज्यते। तस्याभिव्यक्तस्य चैतन्यस्यैकत्वेऽप्यभिव्यञ्जकान्तःकरणभागभेदात् त्रिधा व्यपदेशो भवति। कर्तृभागावच्छिन्नश्चिदंशः प्रमाता, क्रियाभागावच्छिन्नश्चिदंशः प्रमाणं, विषयगताभिव्यक्तियोग्यत्वभागावच्छिन्नश्चिदंशः प्रमितिरिति। प्रमेयं तु विषयगतं ब्रह्मचैतन्यमेवाज्ञातम्। तदेव च ज्ञातं सत् फलम्।**

( लघुव्याख्या. )

विशदयितुमाह—एवमिति। शरीरमध्यस्थः सुखादिरूपेण परिणममानत्वात् शरीरमध्ये स्थितः सर्वशरीरव्यापकः सर्वशरीरावयवेषु व्यापकः युगपद्धस्तपादाद्यवच्छिन्नसुखदुःखादिरूपेण परिणममानत्वात्। ज्ञानाकारवृत्तेरेवाधिकपरिणामदर्शनादाह—सत्त्वेति। अनेन रजस्तमोऽन्वयोऽपि ज्ञापितः कामनिद्रादिवृत्तीनामुपलम्भात्। उत्क्रमणसमये गतिविघाताभावादाह—सूक्ष्मेति। पञ्चभूतानां गुणग्राहकत्वादाह—पञ्चेति। आरब्धः परिणामः सत्त्वांशाधिक्ययुक्ताऽपञ्चीकृतपञ्चभूतपरिणाम इति समुदायार्थः। विवर्तः परिणामः। भूतानां विशेषपरिणामित्वेऽपि सामान्यपरिणामिन्यविद्येत्यर्थः। अतिस्वच्छः सान्निध्यमात्रेण प्रतिबिम्बग्रहसमर्थः सत्त्वप्रधानत्वात्प्रमातृभावादियोग्यो वा। नेत्रादिद्वारा नेत्रस्थानादिछिद्रमार्गेण योग्यान्महत्त्वोद्भूतरूपवदालोकादिसंयोगविशिष्टान् व्याप्य तत्तदाकारो भवति पृथुबुध्नाद्याकारो भवति। पृथुबुध्नाद्याकारताशालिचाक्षुषादिवृत्तिरूपेण परिणमत इत्यर्थः। विषयेन्द्रियसन्निकर्षस्येव विषयमनोयोगस्यापि हेतुत्वज्ञापनाय व्याप्य तत्तदाकारो भवतीत्युक्तम्। अत्र दृष्टान्तः—द्रुतेति। यथा द्रवीभूतताम्रं

१ मध्यस्थः।

मूषापात्रे निक्षिप्तं वाय्वाद्यपसारिततेजोभागं सत्कठिनं भवति, तथा मनो विषयसंयुक्तं तदाकाराख्यविषयतासंबन्धेन घटादिसंबद्धं चाक्षुषादिरूपं भवतीत्यर्थः । निर्गत्य निःसृत्य देशान्तरे गतस्य विषयाकारतायां तु दृष्टान्तस्तडागोदकम् तद्यथा । तडागोदकं छिद्रान्निः-सृत्य कुल्यात्मना केदारेषु प्रविश्य केदाराकारं भवतीत्यादि स्पष्टम् । ननु कथमतिशीघ्रमेव मनसः सूर्यमण्डलादिसंयोगस्तत्राह—तस्येति । स्पष्टम् । ननु 'युगपज्ज्ञानानुत्पत्तिर्मनसोलिङ्गमिति सूत्रयता भगवताऽक्षपादेन मनसोऽणुत्वसमर्थनात्तस्य चाणोर्बहिर्निर्गमने सद्यो मरणापत्तेर्विषय-सन्निकर्षव्याप्तिरयुक्तेत्यत आह—स चेति । अविद्याविवर्तश्चेत्यर्थः । सावयवत्वात् भूतसूक्ष्मांश-रूपावयववत्त्वात् । 'अन्नमयं हि सोम्य मन इत्यादि श्रुत्या भूतकार्यत्वोक्त्या सावयवत्वज्ञापनादिति भावः । अतो युगपन्नानावृत्त्याकारपरिणामोऽपि युज्यत एवेत्यभिप्रायेणाह—परिणममान इति । तस्मादेवाभ्यन्तरे बहिश्च स्थितिरपि युज्यत इत्याह—देहेति । देहघटयोर्मध्येऽपीत्यपिना मध्येऽ-न्तराले सम्यग्व्याप्त्यभावः सूचितः । मध्ये व्याप्तिफलस्य प्रमादेरनुपलम्भादित्यत्र विस्तरः । अविच्छिन्नः शरीरघटान्तरालदेशेषु युगपत्संयुक्तः । तत्र दृष्टान्तः चक्षुर्वदिति । यथा चक्षुर-दृष्टवशाज्जीवदशायां शरीरं न त्यजत्यन्धत्वप्रसङ्गात्, नापि मध्ये व्यवच्छेदः, खण्डितत्वप्रसङ्गा-न्मनःसंयुक्तेन्द्रियस्य विषयेण संयोगाभावेनाग्राहकत्वप्रसङ्गाच्च, एवं मनसोऽपीति भावः । अन्तःकरणस्य सर्वत्रावस्थितिप्रयोजनमाह—तत्रेति । तत्र तेषु भागेषु मध्ये कर्ता कार्यानुकूल-कृतिमान् चेतनाऽवृति(?)त्वादिति भावः । ज्ञानेति । आवरणनिवृत्त्यादिरूपस्य ज्ञानरूपक्रिया-जन्यफलस्य संपादकम् । तत्र हेतुः अभिव्यक्तीति । आवरणनिवृत्तिरूपाभिव्यक्तिं प्रति कार-णीभूताया वृत्तिज्ञानरूपक्रियाया योग्यतारूपमित्यर्थः । विषयसंसृष्टस्वभागावच्छिन्नक्रिया विष-याभिव्यक्तिजननयोग्या भवतीति भावः । अन्तःकरणविभागकथनस्य प्रयोजनमाह—तस्येति । अतिस्वच्छत्वात् प्रतिबिम्बसंबन्धयोग्यत्वात् । तत्र त्रिभागेऽन्तःकरणे अभिव्यज्यते प्रतिबि-म्बितं भवति । अस्तु प्रतिबिम्बस्तथापि तस्यैकस्य प्रमात्रादिव्यवस्था कथं तत्राह—तस्येति । स्पष्टम्, त्रिधा व्यपदेशमेव स्पष्टयति—कर्तृभागेति शरीरसम्बद्धान्तःकरणभागावच्छिन्नेत्यर्थः । प्रमाता धात्वर्थज्ञानाश्रयः, ज्ञानानुकूलव्यापारवत्त्वादिति शेषः । क्रियाभागेति अन्तरालदेशा-वच्छिन्नान्तःकरणभागावच्छिन्नेत्यर्थः । प्रमाणं विषयसंसृष्टभागरूपप्रमाया अयोगव्यवच्छेदेन संबन्धि, फलायोगव्यवच्छिन्नकारणस्यैव करणत्वाङ्गीकारात् । इन्द्रियादीनां तु प्रयोजकत्वेन करणत्वव्यपदेशो भाक्त इति भावः । विषयेति । घटादिरूपविषयगतो यः प्रमाणवृत्तेर्योग्यतारूपो भागः, विषयसंसृष्टभागावच्छिन्नत्वेनैव प्रमाणवृत्तेरभिव्यक्तिजनकत्वादभिव्यक्तिकारणतावच्छे-दकीभूतो भाग इति यावत् । तदवच्छिन्नचित्प्रतिबिम्बः प्रमितिः अज्ञातविषयकभागत्वादिति शेषः । तदनन्तरमेवाज्ञातविषयाभिव्यक्तिरूपफलदर्शनेन तस्यैवाज्ञातविषयकत्वादिति भावः । एकत्वेऽपि त्रिधा व्यपदेशो भवतीत्यनेन ग्रन्थेनान्तःकरणगत एक एव प्रतिबिम्बोऽन्तःकरणा-भिन्नवृत्तीनां प्रमितित्वादिसम्पादको न तु तत्र प्रतिबिम्बान्तरमपि युक्तं प्रमाणाभावाद्गौरवाच्चेति ध्वनितम् । प्रमेयस्य सर्वसाधारणत्वात् प्रमेयं पृथगाह—प्रमेयं त्विति । निरुक्तप्रमाया विषय-

स्त्वित्यर्थः । ब्रह्मेति । जीवचैतन्यस्य स्वत एवाभिव्यक्तत्वात्प्रमेयाभिव्यज्यमानं ब्रह्मचैतन्यमेव विषय इति भावः । विषये घटादौ स्फूर्त्यर्थं विषयाकारवृत्तौ चित्प्रतिबिम्ब एव फलमिति मतनिरासायाह—तदेवेति । ब्रह्मचैतन्यमेव प्रमेयात्मकमेवेत्यर्थः । ज्ञातमभिव्यक्तं निवृत्तावरणमिति यावत् । वृत्त्याऽऽवरणे निवृत्ते ब्रह्मणैव स्वतः स्फूर्तिमता घटादेः स्फूर्तिसंभवात् तदर्थं घटाकारवृत्तौ प्रतिबिम्बकल्पनमप्रामाणिकमिति भावः ।

( संदीपनम् )

स्वपरिणामद्वारेति यदुक्तं तत्प्रकटयति—एवमत्रेति । सर्वशरीरावच्छेदेन ज्ञानमुपादानस्य सर्वशरीरसम्बन्धं विना नसंभवतीत्यत उक्तं **सर्वशरीरव्यापक** इति । चिदभिव्यक्तियोग्यत्वप्रकटनायाह—**सत्त्वप्राधान्येने**ति । सत्वोद्रिक्ते स्वच्छ एव प्रतिबिम्बो भवति न रजस्तमउद्रिक्तेऽस्वच्छे लोष्ठादाविति भावः । भवत्वेवं तथापि कथं झटिति ध्रुवलोकादिगमनं तत्राह—**तस्य** चेति । पञ्चभूतारब्धत्वं यदुक्तं तस्य फलमाह—**स** चेति । अन्तःकरणाख्य इत्यर्थः । प्रमात्रादिविभागाय तदुपाधिविभागमाह—**तत्र** देहेति । नन्वास्तामुपाधिविभागस्तथापि तत्र चैतन्याभिव्यक्तिः कुतः ? तथाच कथं तदभिव्यक्तचैतन्यस्य प्रमातृत्वादिकं तत्राह—**तस्य** चेति । औपनिषदमते तु सर्वत्र चक्षुरादिप्रयोज्यान्तःकरणवृत्तिः प्रमाणमित्यभिप्रेत्याह—**क्रियाभागावच्छिन्न** इति । अत्रापि च मूलावच्छिन्नः प्रमाणम् । मध्यमभागस्तु इन्द्रियविषययोः **सन्निकर्षः** । सन्निकर्षजन्यं च ज्ञानं प्रत्यक्षम् । तदुक्तमक्षपादाचार्यैः 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' । अत्र भाष्यम्—इन्द्रियस्यार्थेन समं सन्निकर्षाद्यदुत्पद्यते ज्ञानं तत्प्रत्यक्षं, नामधेयशब्देन व्यपदिश्यमानं शाब्दं प्रसज्यतेऽत आह—अव्यपदेश्यमिति । शब्दसंबन्धज्ञानानधीनमित्यर्थः । भ्रमवारणायाव्यभिचारीति । संशयवारणाय व्यवसायात्मकमिति । एवं च संनिकर्षविधया विषयपर्यन्तान्तःकरणवृत्तिरपेक्षितेत्यवधेयम् । एतेनात्राप्यनुमानादिवदन्तर्द्धा(?)समुल्लास एव न तु विषयपर्यन्तान्तःकरणवृत्तिरित्यपास्तम् । संनिकर्षाजन्यत्वेनानुमित्यादिवत् प्रत्यक्षाभावाच्च ।

**अत्र च यस्मिन्पक्षेऽन्तःकरणावच्छिन्नो जीवः, यस्मिंश्च पक्षे सर्वगतोऽसङ्गोऽविद्याप्रतिबिम्बो जीवस्तत्रोभयत्रापि प्रमातृचैतन्योपरागार्था विषयगतचैतन्यावरणभङ्गार्था चान्तःकरणवृत्तिः । यस्मिंश्च पक्षेऽविद्यावच्छिन्नः सर्वगतो जीव आवृतस्तस्मिन्पक्षे जीवस्यैव जगदुपादानत्वेन सर्वसंबद्धत्वादावरणभङ्गार्था वृत्तिरिति विवेकः ।**

( लघुव्याख्या. )

ब्रह्मणैव यदि विषयप्रकाशस्तदा वृत्तेः क्वोपयोगस्तत्राह—अत्र चेति । अत्र प्रमात्रादिमध्येऽन्तःकरणवृत्तिः प्रमारूपा । उभयत्रापि प्रमातृचिदुपरागार्था विषयगतचैतन्यावरणभङ्गार्था चेति योजना । सर्वगतः सर्वकार्यतादात्म्यापन्नाविद्योपाधिकः असङ्गः घटादितादात्म्यशून्यः, जीवान्यचित एव जगदुपादानत्वाज्जीवस्य घटादितादात्म्यशून्यतेति भावः । तथाचोपादानस्य ब्रह्मण एव विषयेण सह साक्षात्संबन्धाद्भासकत्वं संभवति न जीवस्येति 'घटमहं जानामीति जीवव्यवहारप्रयोजको वृत्तिघटितविषयसंबन्ध आवश्यक इत्यभिप्रेत्याह—प्रमात्रिति । प्रमा-

तृचैतन्यस्य जीवस्य उपरागः विषयेण सह संबन्धः तदर्था तत्फलिकेत्यर्थः । प्रत्यक्षस्थले प्रतिबिम्बाश्रयप्रमावच्छेदकत्वरूपस्य, परोक्षस्थले प्रतिबिम्बाश्रयप्रमाविषयत्वरूपस्य वृत्तिं विना-भावाद्वृत्तिनिर्वाह्यत्वेन वृत्तिफलत्वमिति भावः । ननु यद्युपरागार्था वृत्तिस्तदा ब्रह्माकारवृत्तिर्व्यर्था, अधिष्ठानब्रह्मणा साक्षादेव जीवस्य सम्बन्धात्तत्राह—विषयेति । विषयसंसृष्टं यत्प्रमातृचैतन्यं प्रत्यावरकं तद्भङ्गार्थेत्यर्थः । तथा च सर्वत्र ब्रह्मसाधारणविषयनिष्ठाज्ञानावरणाभावप्रयोजकतयाऽप्यन्तःकरणवृत्तिरिति भावः । सर्वगतः सर्वद्रव्येषु तादात्म्येन सम्बद्धः आवृतः घटाद्यवच्छेदेनाज्ञानावरणविषयः, घटं न जानामीत्यादिप्रतीतेः । नोपरागार्थो वृत्तिरिति ज्ञापनायाह—जीवस्यैवेति । आवरणभङ्गार्थैव आवरणनिवृत्त्या स्वतः सम्बद्धजीवेनैव भानोपपत्तेर्नोपरागार्था वृत्तिरस्मिन् पक्षे युक्तेति भावः ।

(संदीपनम्)

कस्मिन् पक्षे वृत्तेः किं प्रयोजनमिति विविच्य वक्तुमुपक्रमते—अत्र चेति । अन्तःकरणावच्छिन्नजीवपक्षे जीवस्य परिच्छिन्नत्वात्तस्यैव परिच्छिन्नजीवस्य वृत्तिमदन्तःकरणरूपाधिककञ्चुकप्रवेशात् **प्रमातृत्वम्** । एवं च प्रमातृचैतन्याभिन्नजीवस्य विषयसंबन्धार्था वृत्तिः । एवं सर्वगतस्यापि स्वतोऽसङ्गस्य वृत्तिमदन्तःकरणरूपाधिककञ्चुकप्रवेशात् **प्रमातृत्वम्** । तथाच स्वतोऽसङ्गस्य विना वृत्तिं विषयसंबन्धाभावादसङ्गसर्वगतपक्षेऽपि वृत्तिरपेक्षिता । अन्यथा ममायं विदितो घट इति प्रमेयचैतन्यप्रमातृचैतन्ययोः संबन्धप्रत्ययो न स्यात् । अत उभयपक्षेऽपि प्रमातृचैतन्योपरागार्था वृत्तिरावश्यकीति मन्तव्यं सूरिभिः । **सर्वगतः** स्वप्रपञ्चव्यापकः । **असङ्गः** अविद्यासङ्गरहितोऽनावृत इत्यर्थः । विषयस्य प्रमातृचैतन्येन सह यः सम्बन्धः स विना वृत्तिं न संभवति, एकलोलीभावाभावात् । विना च प्रमातृचैतन्यसंबन्धं ममायं विदितो घट इत्यादिप्रत्ययो न भवतीत्यतः प्रमातृचैतन्यसंबन्धो विषयस्यावश्यक इत्याह—**प्रमातृचैतन्योपरागार्थेत्यन्तेन** । अत्रचेत्यादिना पूर्वोक्तोभयमते विषयस्तु ब्रह्मचैतन्येऽध्यस्त इत्यवधेयम् । उपरागः सम्बन्धः । **विषयगतेति** । विषयचैतन्यावरणभङ्गस्तु विना वृत्तिं न भवतीति उक्तोभयपक्षेऽपि विषयावरणभङ्गार्था वृत्तिरावश्यकीत्यर्थः । वाचस्पतिमिश्रमते आवरणभङ्गार्थैव वृत्तिर्न संबन्धार्था सर्वेषां पदार्थानां तत्सम्बद्धत्वादित्याह—**यस्मिंश्चेति** ।

**ननु चिदुपरागार्था वृत्तिरिति पक्षे स्वतोऽन्तःकरणसंबद्धानां धर्माधर्मादीनां ब्रह्मणश्च वृत्तिमन्तरेणैव सर्वदा भानं स्यात् । न स्यात्, चैतन्यस्य तत्तदाकारत्वाभावात् । तदभावश्च स्वच्छेऽपि ब्रह्मचैतन्य आवरणात्, अनावृतेऽपि शुक्तिरजतादावस्वच्छत्वात्, धर्माधर्मादावस्वच्छत्वादावृतत्वाद्वा । तेन स्वच्छेऽप्यावृते प्रमाणवृत्त्या तदाकारता, अनावृतेऽप्यस्वच्छे शुक्तिरजतादावविद्यावृत्त्या तदाकारता, अनावृते स्वच्छे तु सुखदुःखादौ स्वत इति नान्तःकरणसंबन्धमात्रेण भानप्रसंगः ।**

(लघुव्याख्या.)

स्वत इति, वृत्तिं विना । धर्मादीत्यादिपदात् शुक्तिरूप्यादिपरिग्रहः । भानं स्यादिति । प्रतिबिम्बाश्रयमनस्तादात्म्येन सुखादीनामिव धर्माधर्मादीनामपि साक्षात्कारः स्यादित्यर्थः ।

ब्रह्मणस्तु स्वाधिष्ठानभूतस्याभेदरूपः संबन्धः स्फुट एवेति संक्षेपः। न यथा कथंचित्संबन्धमात्रं पदार्थभानप्रयोजकं, किंतु स्वप्रतिबिम्बाश्रयप्रमावच्छेदकत्वमेव, तच्च तेषु नास्त्येवेति न तेषां भानसंभव इत्याशयेनाह—न स्यादिति। चैतन्यस्य प्रमातृचैतन्यस्य तत्तदाकारत्वाभावात् निरुक्तसंबन्धेन संबद्धत्वाभावात्। एतदेव समर्थयति—तद्भावश्चेति। संबन्धाभावश्च स्वच्छेऽपि प्रतिबिम्बसम्बन्धयोग्येऽपि ब्रह्मचैतन्ये अधिष्ठानचैतन्ये आवरणात् श्रवणादिजन्यवृत्तेः पूर्वं ब्रह्म नास्ति न भातीति च विरुद्धव्यवहारजनकाज्ञानात्। तथाच श्रवणादिजन्यैव वृत्तिरज्ञाननाशिका न सामान्यवृत्तिरतो भासकसम्बन्धाभावान्न सदा तद्भानमिति भावः। शुक्तिरजतभानापत्तिं वारयति—अनावृतेति। प्रतीतिमात्रशरीरत्वेनाज्ञातसत्त्वाभावेनाज्ञानविषयतावच्छिदनवच्छेदकत्वेऽपि अस्वच्छत्वात् तमः—प्रधानाज्ञानपरिणामत्वात् प्रतिबिम्बावच्छेदकत्वायोग्यत्वात्। अनावृतत्वेऽपि तमःकार्यस्य तस्योत्पन्नमात्रस्य भानं, विनावृत्तिमसंभावितमिति चिदुपरागार्थं तत्रापि वृत्तिरावश्यकीति भावः। दोषद्वयमेवेदं यद्यपि धर्मादावप्यस्ति तथाप्यन्यतरत्वेनैव तयोस्तत्र संबन्धव्यावर्तकता न मिलितस्य व्यावर्तकत्वेत्यभिप्रेत्य विकल्पमाह—अस्वच्छेति। अस्वच्छत्वात् स्वभावविशेषकृतायोग्यत्वात्। आवृतत्वात् फलसंस्काररूपाणां सूक्ष्मत्वेन जीवाज्ञानविषयत्वात्। तेन स्वाभाविकेन तत्तदाकारत्वाभावेन स्वच्छेप्यावृते इति पूर्ववत् ब्रह्मणीति शेषः। प्रमाणवृत्त्या वेदान्तप्रमाणजन्याखण्डाकारवृत्त्या तदाकारता तत्संबद्धत्वमिति यावत्। अनावृते प्रतीतिमात्रशरीरत्वेनाज्ञानविषयतावच्छिदनवच्छेदके अविद्यावृत्त्या ज्ञानाकारसत्त्वपरिणामरूपवृत्त्या तदाकारता निरुक्तसंबन्धेन संबद्धता। ननु यदि वृत्तिद्वारक एव सर्वत्र संबन्धस्तर्हि साक्षिमात्रभास्यानां सुखादीनां कथं भानं तत्राह—स्वच्छे त्विति। प्रतिबिम्बसंबन्धयोग्ये त्वित्यर्थः स्वतः वृत्तिं विना भानप्रसङ्गः अपरोक्षभानप्रसङ्गः, स्वतः संबद्धानां धर्माधर्मादीनामिति शेषः। अयमत्र निष्कर्षः—घटाद्यवच्छेदेनान्तःकरणवृत्तौ चैतन्यस्य प्रतिबिम्बात् प्रतिबिम्बाश्रयवृत्त्यवच्छेदकत्वेन घटादौ, सुखाद्यवच्छेदेन ब्रह्मचैतन्ये प्रतिबिम्बात् प्रतिबिम्बाश्रयब्रह्मचिदवच्छेदेन सुखादौ, ब्रह्मचैतन्यावच्छेदेन ब्रह्माकारवृत्तौ प्रतिबिम्बाश्रयवृत्त्यवच्छेदकत्वेन ब्रह्मणि, प्रातिभासिकरजताद्यवच्छेदेन रजताकारायामविद्यावृत्तौ प्रतिबिम्बात् प्रतिबिम्बाश्रयवृत्त्यवच्छेदकत्वेन संबन्धेन प्रातिभासिके संबद्धत्वाज्जीवस्य घटसुखब्रह्मरजतादिभानं न धर्मादेः, धर्माद्यवच्छेदेन धर्मानुस्यूतचैतन्ये प्रतिबिम्बाभावात् कल्पनाहेतोरभावात्, फलानुसारित्वात्कल्पनाया इति दिक्।

## ( संदीपनम् )

प्रमातृचैतन्योपरागार्था वृत्तिरित्यत्र शङ्कते—नन्विति। वृत्तिव्यतिरेकेणापि संबद्धत्वादिति भावः। धर्माधर्मादीनामित्युपलक्षणमनावृतचैतन्याध्यस्तानां शुक्तिरजतादीनाम्। परिहरति—न स्यादिति। तद्भावस्तदाकारत्वाभावः। आवृतत्वाच्चेति। तद्भावश्चेत्यनेनान्वयः। ब्रह्मणश्चेत्यादिना यदुक्तं तत्परिहरति—स्वच्छेऽपीति। तदाकारत्वाभावप्रयोजकमुपपाद्य तदाकारत्वप्रयोजकमाह—तेन स्वच्छेऽप्यावृत इति, ब्रह्मणीति शेषः।

**ननु ब्रह्मणः कथमावरणं निरवद्यस्वप्रकाशत्वेन सर्वज्ञत्वात्, सत्यम्, स्वसंबद्धसर्वावभासकतया सर्वज्ञमप्यन्तःकरणावच्छिन्नजीवाज्ञानविषयतयाऽऽवृतमिति व्यपदेशात्। तस्माद्ब्रह्म जगदुपादानमिति पक्षे चिदुपरागार्थावरणभङ्गार्था च वृत्तिर्जीवोपादानत्वपक्षे त्वावरणभङ्गार्थैवेति।**

( लघुव्याख्या. )

ननु विषयावभासकमधिष्ठानब्रह्मचैतन्यमावृतमित्युक्तं तन्न युक्तं, तस्यावृतत्वे जगदान्ध्यप्रसङ्गादिति भ्रान्तः शङ्कते—नन्विति। ब्रह्मणः अधिष्ठानभूतचैतन्यस्य निरवद्येति अविद्यातीतेत्यर्थः। सर्वज्ञत्वात् वशीकृतमायत्वेन सर्वविषयकेक्षणादिसमर्थत्वात्। अन्यथा विशिष्टत्वेन तस्य जगदध्यासाधिष्ठानत्वानुपपत्तेः। अविद्याविशिष्टस्याप्याध्यासिकत्वादिति भावः। स्वं प्रत्यावृतत्वमेव सार्वज्ञ्याद्यभावप्रयोजकं, नतु जीवं प्रत्यपि, ब्रह्मणश्च जीवं प्रत्येवावृतत्वमित्यभिप्रेत्य समाधत्ते—सत्यमिति। स्वसंबद्धसर्वावभासकतया स्वाध्यस्तजगत्प्रकाशकतया, जीवाज्ञानविषयतया जीवं प्रत्येवावरकं नास्ति न भातीति व्यवहारजनकं, यदज्ञानं तद्विषयतया। उपसंहरति—तस्मादिति। वृत्तिं विनाऽऽवृतानावृतादौ प्रमातृचैतन्यस्य भासकसंबन्धाभावाच्चिदुपरागार्था प्रमातृचैतन्यसंबन्धफलिका आवरणेति अज्ञाननाशफलिकेत्यर्थः।

( संदीपनम् )

ननु यदि ब्रह्मण्यावरणं संभवति तदा प्रमाणवृत्त्या तदाकारत्वं वक्तव्यम्। तदेव न संभवति, तथाच कथमुक्तं स्वच्छेऽपि ब्रह्मचैतन्ये आवरणादित्याशङ्कते—ननु ब्रह्मण इति। जीवाज्ञानविषयत्वेनावृतत्वादिति। यद्यप्यावरणशक्तिमत्यविद्या ईश्वरोपाधिस्तथापि तस्या ईश्वरं प्रति नावरकत्वम्। अन्यथा सार्वज्ञ्यभङ्गापत्तेः। किंतु जीवं प्रतीत्यर्थः। अत्र चेत्यादिना यदुक्तं तदुभयमुपसंहरति—तस्मादिति। यस्मिंश्च पक्षे इत्यनेन यदुक्तं तदुपसंहरति—जीवोपादानत्व इति।

**नन्वेकेनैव घटादिज्ञानेनावरणस्य भङ्गे सद्योमुक्तिप्रसंगः, अज्ञानस्यैकत्वात्, नानाज्ञानपक्षेऽप्येकस्य जीवस्यैकाज्ञानोपाधित्वात्। न। उत्तेजकेन मणेरिव वृत्त्यावरणस्याभिभवाङ्गीकारात्। तथाच प्रमाणजन्यान्तःकरणवृत्त्यभावसहकृतमज्ञानं सति भात्यपि वस्तुनि, नास्ति न भातीति प्रतीतिजननसमर्थमावरणमित्युच्यते। वृत्तौ जातायां त्ववच्छेदकाभावाद्विद्यमानमप्यविद्यमानसममेवेति न स्वकार्यसमर्थमज्ञानं, तेनाभिभूतमित्युच्यते।**

( लघुव्याख्या. )

आवरणस्य अज्ञानस्य। नानाज्ञानपक्षे जीवभेदेनाज्ञानभेदपक्षे। उत्तेजकेन प्रतिबन्धकशक्तिविघटकेन मणिमन्त्रमहौषध्यन्यतमेन वृत्त्या 'अयं घट' इत्यादिविषयज्ञानेन आवरणस्य घटमहं न जानामीत्याद्यज्ञानस्य। अभिभवेति स्वकार्याक्षमत्वेत्यर्थः। एतदेव स्पष्टयति तथाचेति। सहकृतं विशिष्टम्। जननेति। अस्तिभातीतिव्यवहाराभावप्रयोजकमित्यपि बोध्यम्। अवच्छेदकाभावात् जनकताप्रतिबन्धकतयोरवच्छेदकस्य वृत्त्यभावस्याभावात्। न स्वकार्येति। यथोत्तेजकाभावविशिष्ट एव मणिर्दाहप्रतिबन्धकः, प्रतिबन्धकतावच्छेदकश्चोत्तेजकाभाव इत्युत्तेजकसत्त्वे प्रतिबन्धकतावच्छेदकस्याभावान्न मणिः प्रतिबन्धकः तथा चक्षुरादिप्रमाण-

जन्या यान्तःकरणवृत्तिस्तदभावविशिष्टमेवाज्ञानं विरुद्धव्यवहारजनकमुचितव्यवहारप्रतिबन्धकं चेति कारणतावच्छेदकः प्रतिबंधकतावच्छेदकश्च वृत्त्यभाव इति वृत्तिसत्त्वे तदुभयरूपस्याभावान्न स्वकार्ये विरुद्धव्यवहारे उचितव्यवहारप्रतिबन्धे च शक्तमित्यर्थः। तत्सत्त्वेऽप्युत्तेजकेन मणेरिव तस्य शक्तेर्नाशादिति भावः। तेन असमर्थत्वहेतुना।

( संदीपनम् )

ननु विषयप्रकाशायावरणभङ्गार्था चेद्वृत्तिरङ्गीक्रियते तर्ह्यतिप्रसङ्ग इत्याशङ्कते—नन्विति। ननु नानाज्ञानपक्षोऽप्यस्ति, तथाच नातिप्रसङ्गस्तत्राह—नानाज्ञानपक्षेऽपीति। फलितमाह—तथाचेति। आवरणपदार्थमाह—सतीत्यारभ्य समर्थमित्यन्तेन। नन्वेवं चेत्तर्हि कथमभिभवस्तत्राह—वृत्तौ जातायामिति।

**नन्वेवं सति ब्रह्मज्ञानेनाप्यविद्याया अनिवृत्तेरनिर्मोक्षप्रसंगः। न। तत्त्वमस्यादिवाक्यार्थज्ञानादविद्यानिवृत्त्यभ्युपगमात्। स्वविषयप्रमात्वेनैवाविद्यानिवर्तकत्वात्, महावाक्यार्थज्ञानस्यैवाबाधितविषयतया प्रमात्वात्। प्रत्यक्षादीनां तु बाधितविषयतया भ्रमत्वेऽपि व्यवहारसामर्थ्येन प्रामाण्याभिमानात्। ज्ञानादज्ञाननिवृत्तेरन्यत्रादर्शनं चाकिंचित्करं, स्वानुभवसिद्धत्वात्। अन्यथानुपपत्तेश्च सर्वतो बलवत्त्वात्। तदुक्तम्—**

**अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका।**
**पिनष्ट्यदृष्टिवैमत्यं सैव सर्वबलाधिका॥ इति।**

**अथवा मूलाज्ञानस्यैवावस्थाऽज्ञानानि ( घटादि ) विषयावरणानि, अज्ञानस्य ज्ञानप्रागभावस्थानीयत्वेन यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यभ्युपगमात्। एकेन च ज्ञानेनैकाज्ञानस्यैव नाशात्, घटादिज्ञानेनावरणनाशेऽपि न कांचिदनुपपत्तिः।**

( लघुव्याख्या. )

एवं सति घटादिज्ञानस्याज्ञानानाशकत्वे सति अनिवृत्तेः अनाशादनिर्मोक्षप्रसङ्गः तन्नाशेन स्वस्वरूपप्राप्तिलक्षणमोक्षस्यासंभवप्रसङ्गः। तयोर्नाश्यनाशकभावदर्शनं विना ब्रह्मज्ञानादज्ञाननिवृत्त्या मुक्तिरिति निर्णयस्यासंभवादिति भावः। नानाऽज्ञानवादिवाचस्पतिमिश्रमते समाधानमाह—तत्त्वमिति। अविद्येति। नानाऽविद्योच्छेदाभ्युपगमात्। तथाच पुरुषान्तरे शुकादौ च जीवन्मुक्ते तयोर्नाश्यनाशकभावग्रहान्नानिर्णय इति भावः। ननु घटादिज्ञानान्नाज्ञाननिवृत्तिः, किंतु तत्त्वमस्यादिवाक्यादेवेत्यत्र किं विनिगमकं तत्राह—स्वविषयेति अज्ञानविषयविषयकप्रमात्वेनेत्यर्थः। प्रमात्वं चाबाधितविषयकत्वं तच्च तत्वमस्यादिवाक्यजन्यज्ञानस्यैव नान्यस्येत्याह—महावाक्येति। तत्त्वम्पदार्थाभेदज्ञानस्येत्यर्थः। अबाधितेति। कालत्रयाबाधितविषयतया प्रमात्वात् प्रमाव्यक्तित्वात्। तथाचानधिगताबाधितविषयकं यज्ज्ञानं तदेवाज्ञाननाशकं, तच्च तत्त्वमस्यादिवाक्यजन्यमेव शुद्धचित एवानधिगताबाधितरूपत्वात्। अतो बाधितविषयाद्घटादिज्ञानात्तदनिवृत्तावपि न हानिरिति भावः। ननु यदि तत्वमस्यादिवाक्यजन्यं ज्ञानमेव प्रमा तदा कथं

---

१ काप्यनु०।

शुक्तिज्ञानं प्रमा रजतज्ञानं भ्रम इति व्यवहारस्तत्राह—प्रत्यक्षेति । शुक्त्यादिप्रत्यक्षप्रतीतीनां बाधितविषयतया दृष्टनष्टस्वभावत्वेन वर्तमानकालेऽपि, वस्तुतो बाधितवस्तुग्राहित्वेन भ्रमत्वेऽपि शुक्तिरजतादिज्ञानवद्भ्रमव्यक्तित्वेऽपि व्यवहारसामर्थ्येन व्यवहारकालाबाधितार्थविषयकत्वेन प्रामाण्याभीति प्रमात्वव्यवहारात् । एकजीववादे समाधानमाह—ज्ञानादिति । स्वानुभवेति । शास्त्रप्रमाणैकसमधिगम्यफलस्य भावितदनुभववेद्यत्वादित्यर्थः । यद्यन्यत्राददर्शनमेव तर्ह्यस्मदादीनां का प्रत्याशा तत्राह—अन्यथेति । मुक्त्यर्थं प्रवृत्तस्य मुक्तिं विना शास्त्रप्रामाण्याद्यनुपपत्तेरित्यर्थः । सर्वतः सर्वप्रमाणेभ्यः बलवत्त्वात् प्रमाणान्तरविरोधोपमर्देनेन स्वार्थसाधकत्वात् ॥*॥ अपसिद्धान्तशङ्कां निराकरोति—तदुक्तमिति । चेत् यदि अन्यथानुपपत्तिः 'तरति शोकमात्मविदित्यादिश्रुतेर्मुक्तिं विना प्रामाण्यानुपपत्तिः वस्तुप्रसाधिका ज्ञानाज्ञानयोर्नाश्यनाशकभावज्ञापिकाऽस्ति तदा सैव अन्यथानुपपत्तिरेव अदृष्टिवैमत्यं दृष्टान्तादर्शनेन विवादं पिनष्टि निवारयति, तत्र हेतुगर्भं विशेषणं सर्वेति सर्वप्रमाणाधिकेत्यर्थः । प्रमाणान्तरविरोधोपमर्देनेन स्वार्थसाधिकेति यावत् । मुक्तिप्रतिपादकशास्त्रान्यथानुपपत्त्यैव ज्ञानाज्ञानयोर्नाश्यनाशकभावसिद्धिरिति संक्षेपः ॥*॥ सर्वेषामेकमेवाज्ञानमिति पक्षे, जीवभेदेनाज्ञानभेदपक्षेऽपि बाह्यविषयज्ञानमज्ञानस्याभिभावकमात्रं नतु नाशकं, सकलविषयकाज्ञानस्यैकत्वादेकज्ञानेन तन्नाशे सर्वाज्ञाननाशापत्तेरित्युक्तं तन्न सम्यक्, मूलाज्ञानस्यैकत्वेऽपि तूलाज्ञानानां भेदेन तत्रापि नाश्यनाशकभावोपपत्तेः, नच गौरवं प्रागभावस्थानीयत्वेन गौरवाभावादित्यभिप्रेत्याह—अथवेति । अवस्थाज्ञानानि शक्तिरूपाज्ञानानि विषयावरणानि विषयावच्छिन्नचिदावरणानि । गौरवं निराकरोति—अज्ञानस्येति । स्थानीयत्वेन घटं न जानामीत्यादिप्रतीतेरुक्तरीत्या प्रागभावेनानिर्वाहादज्ञानमेवावश्यकमिति प्रागभावाङ्गीकार एव गौरवादनुचित इति ज्ञापितम् । एकाज्ञानस्येति । यज्ज्ञानाव्यवहितपूर्वं यज्ज्ञानविषयावरकं यदज्ञानं तस्यैव तज्ज्ञानमुच्छेदकम् । सर्वं चाज्ञानं न सर्वदाऽऽवृणोतीति भावः ।

## ( संदीपनम् )

शङ्कते—नन्विति । एवमभिभवाङ्गीकारे । अथ घटज्ञानाच्चेन्नाज्ञाननिवृत्तिस्तर्हि कथं वाक्यार्थज्ञानान्निवृत्तिस्तयोरपि (?) ज्ञानत्वाविशेषादत आह—स्वविषयेति । घटमात्रविशेष्यकघटत्वप्रकारकज्ञानस्यापि प्रमात्वमव्याहतं तत्राह—महावाक्यार्थेति । प्रातीतिकस्याधिष्ठानज्ञानबाध्यवद्व्यावहारिकस्यापि ब्रह्मज्ञानबाध्यत्वाद्घटादिज्ञानानां बाधितविषयकत्वेनाप्रामाण्यम्, ब्रह्मज्ञानं तु न तथा ब्रह्मणः कालत्रयाबाध्यत्वादित्याशयेनोक्तं—वाक्यार्थज्ञानस्याबाधितविषयत्वेन प्रामाण्यमिति । ब्रह्मज्ञानातिरिक्तस्याप्रमात्वे जगति प्रमाव्यवहारोच्छेदस्तत्राह—प्रत्यक्षादीनां त्विति । विशेष्यावृत्त्यप्रकारकत्वादिरूपप्रामाण्यमादाय वा प्रामाण्यव्यवहार इत्यपि बोध्यम् । ननु घटादिज्ञानानामप्रामाण्येनाज्ञानानाशकत्वे ज्ञानाज्ञानयोर्नाश्यनाशकभावः कुत्र क्लृप्तो यद्बलाद्वाक्यार्थज्ञानस्याज्ञाननाशकत्वं कल्प्यते तत्राह—ज्ञानादज्ञाननिवृत्तेरिति । स्वानुभवसिद्धत्वात् जीवन्मुक्त्यनुभवसिद्धत्वादित्यर्थः । ज्ञानादज्ञानानिवृत्तौ अज्ञानमूलकसंसारानुच्छेद इत्याह—अन्यथानुपपत्तेश्चेति ॥*॥ स्वोक्तसंवादाय खण्डनकारिकामवतारयति—अन्यथेति । पिनष्टि नाशयति । पिष्ल-

संचूर्णन इतिधातोर्निष्पन्नत्वेन नाशार्थत्वात् ॥*॥ संप्रदायमनुरुध्याह—अथवेति। तर्ह्येकेन ज्ञानेन एकाज्ञाननाशे सद्यो मोक्षप्रसङ्गस्तत्राह—मूलाज्ञानस्येति। एवं च मूलाज्ञानस्यानाशादेकस्यावस्थाज्ञानस्य नाशेऽप्यपरावस्थाज्ञानसत्त्वाच्च न सद्यो मोक्षप्रसङ्गः। न वा सर्वदा घटस्य भानमिति भावः। प्रघट्टकार्यमुपसंहरति—घटादिज्ञानेनेति। न काचिदनुपपत्तिरिति। न सद्यो मोक्षप्रसङ्ग इत्यर्थः। अथवा एकेन घटादिज्ञानेनैकावस्थाज्ञाननाशे सर्वदा घटादेर्भानं स्यादावरकान्तराभावात्तत्राह—घटादिज्ञानेनेति। एकाज्ञाननाशेऽपि अज्ञानान्तरसत्त्वान्न घटादेः सर्वदा भानप्रसङ्ग इति भावः। एवमप्यस्मिन् पक्षे घटाकारादिवृत्तिसत्त्वेऽवस्थाज्ञानरूपावरकान्तरसत्त्वेन एकस्य मणेर्नाशेऽप्यपरमणिसत्त्वे दाहाद्युत्पत्तिवद्घटादिव्यवहाराद्युदयप्रसङ्गाद्वृत्त्यभावसहकृतावस्थाज्ञानस्यावरकत्वावश्यकत्वं वक्तव्यम्। तथाच पूर्वोक्तरीत्यैवोपपत्तावलमनन्तावस्थाज्ञानकल्पनेनेति नव्याः। यदि च ज्ञानप्रागभावस्थानीयत्वेनावस्थाज्ञानमङ्गीकुर्वन्ति तन्न निवारयामः, यदि वा वाक्यार्थज्ञानादपि मूलाज्ञाननाशस्य दुरुपपादत्वापत्तेः प्रमाज्ञानयोर्नाश्यनाशकभावबलादवस्थाऽज्ञानमिच्छन्ति तदपि न निराकुर्मः, किंतु घटादिज्ञानेनाज्ञाननाशे सद्यो मुक्तिप्रसङ्ग इत्यनभिमतभिया यदवस्थाज्ञानाङ्गीकरणं तत्किमर्थमिति न जानीम इति दिक्।

नन्वनुमानादिभिरावरणं निवर्तते, न वा। आद्ये साक्षात्कारिभ्रमस्यापि शङ्खपीतत्वादेः [दिङ्मोहादेश्च] श्वेतत्वाद्यनुमानादिना निवृत्तिप्रसङ्गः। अधिष्ठानाज्ञानोपादानकत्वेन भ्रमस्य तन्निवृत्तौ निवृत्तेः। यौक्तिकज्ञानेन च ब्रह्मण्यविद्यानिवृत्तेः साक्षात्कारार्थं श्रवणमननाद्यपेक्षा न स्यात्। द्वितीये वह्न्यादिव्यवहारो न स्यात्, प्रतिबन्धकस्य विद्यमानत्वात्। उच्यते—द्विविधमावरणम्। एकमसत्त्वापादकमन्तःकरणावच्छिन्नसाक्षिनिष्ठमन्यदभानापादकं विषयावच्छिन्नब्रह्मचैतन्यनिष्ठं, घटमहं न जानामीत्युभयावच्छेदानुभवात्। तत्राद्यं परोक्षापरोक्षसाधारणप्रमामात्रेण निवर्तते, अनुमितेऽपि वह्न्यादौ नास्तीतिप्रतीत्यनुदयात्। द्वितीयं तु साक्षात्कारेणैव निवर्तते, यदाश्रयं यदाकारं ज्ञानं तदाश्रयं तदाकारमज्ञानं नाशयतीति नियमात्। परोक्षज्ञानस्य च विषयेन्द्रियसंनिकर्षाभावेनान्तःकरणमात्राश्रयत्वात्। अपरोक्षज्ञानस्यैव विषयेन्द्रियसंनिकर्षव्यापारजन्यत्वेन विषयान्तःकरणोभयनिष्ठत्वात्। तदुक्तम्—

परोक्षज्ञानतो नश्येदसत्त्वावृतिहेतुता।
अपरोक्षधिया नश्येदभानावृतिहेतुता॥ इति।

तेनानुमानादावसत्त्वावरणनाशात्तद्व्यवहारः, अभानावरणानिवृत्त्या च सोपाधिकसाक्षात्कारिभ्रमानिवृत्तिरिति।

(लघुव्याख्या.)

अनुमानादीति। अनुमित्यादिभिः। साक्षात्कारीति। अपरोक्षेत्यर्थः। पीतत्वादेरित्यादिना दिङ्मोहादिपरिग्रहः। श्वेतेत्यादि। अयं श्वेतः, शंखत्वात् शङ्खान्तरवदित्यनुमानादिना। आदिपदादाप्तवाक्यजशाब्दबोधपरिग्रहः। नन्वपरोक्षप्रमां विना कथमपरोक्षभ्रमनिवृत्तिः

---

१ वृत्ति०।

स्यात्तत्राह–अधिष्ठानेति। तन्निवृत्तौ अधिष्ठानाज्ञाननिवृत्तौ, कारणनाशे कार्यनाशावश्यंभावादिति भावः। यौक्तिकेति द्वैतनिरासपूर्वकाद्वैतसाधकहेतुजन्यज्ञानेन। साक्षात्कारार्थं ऋतंभरा प्रज्ञेत्युक्तापरोक्षप्रमार्थम्। श्रवणेति। आचार्यवक्तृकश्रुतिकरणकश्रवणतत्पूर्वकमनननिदिध्यासनानामपेक्षा न स्यात्। तर्कमात्रेणैव फलसद्भावसम्भवादिति भावः। वह्न्यादीति वह्निरस्तीति-व्यवहारः। प्रतिबन्धकस्य व्यवहारकारणीभूताभावप्रतियोगिनोऽज्ञानस्य विद्यमानत्वात् अज्ञानस्य यौक्तिकज्ञानादनिवृत्तेरिति भावः। द्विविधं परस्परासङ्कीर्णधर्मद्वयविशिष्टम्। असत्त्वापादकं 'नास्तीतिधीप्रयोजकतावच्छेदकाखण्डधर्मवत्। अन्तरिति। मनोवच्छिन्नसाक्षिणि निष्ठा वृत्तिर्यस्य तादृशम्। अभानापादकं 'नभातीतिव्यवहारप्रयोजकतावच्छेदकाखण्डधर्मवत्। विषयेति। विषयानुस्यूतब्रह्मचैतन्ये निष्ठा वृत्तिर्यस्य तादृशम्। उभयेति मनोघटाद्यवच्छेदेन चैतन्येऽज्ञानस्यानुभवात्। प्रकृतभेदकल्पनाफलमाह–तत्रेति। यदाश्रयं यदाश्रितं यदाकारं यद्विषयकं, तदाश्रयं तदाश्रितं तदाकारं तद्विषयकम्। नियमात् प्रकाशतमसोस्तथा दर्शनादिति भावः। प्रकृतनियमोक्तेः फलमाह–परोक्षेति ज्ञानकरणकज्ञानस्येत्यर्थः। अन्तरिति। अन्तःकरणमात्राश्रितत्वात्। तथाच विषयावच्छिन्नचैतन्यनिष्ठत्वाभावान्न विषयावच्छिन्नाज्ञाननाशे समर्थमिति भावः। अपरोक्षज्ञानस्य ज्ञानाकरणकज्ञानस्य। तथा चेदमेव समानाश्रयविषयकं विषयगताज्ञाननाशे समर्थमिति भावः॥*॥ असत्त्वेति। नास्तीति व्यवहारप्रयोजिकाऽविद्या। स्वार्थे भावप्रत्ययः। अभानेति। न भातीति व्यवहारप्रयोजिकाऽविद्या॥*॥ तेन द्विविधहेतुहेतुमद्भावेन तद्व्यवहारः विषयव्यवहारः।

( संदीपनम् )

प्रकृतं समाप्य विचारान्तरमारभते–नन्विति। आद्य इति। अज्ञानं निवर्तत इति पक्षे इत्यर्थः। तत्र हेतुमाह–अधिष्ठानेति। दूषणान्तरमाह–यौक्तिकेति। अज्ञानं न निवर्तत इति पक्षमाह–द्वितीय इति। वह्न्यादिव्यवहाराभावे हेतुमाह–प्रतिबन्धकस्येति। आवरकस्याज्ञानस्येत्यर्थः। असत्त्वापादकमिति। असत्त्वं सत्त्वाभावः। एवं च इदमत्र नास्तीति प्रत्ययापादकमावरणमित्यर्थः। अभानापादकमिति। भानमपरोक्षज्ञानं तदभावोऽभानम्। तथाचाप्रत्यक्षत्वापादकमावरणमित्यर्थः। ननु कीदृशं ज्ञानं कीदृशमज्ञानं नाशयति तत्राह–यदाश्रयमिति। परोक्षज्ञानं किमित्यन्तःकरणमात्रनिष्ठमपरोक्षं वा कथं विषयान्तःकरणोभयनिष्ठं तत्राह–परोक्षज्ञानस्य चेत्यादि। इन्द्रियसन्निकर्षाभावेनेति। इन्द्रियमिन्द्रियप्रयोज्या वृत्तिः प्रमाणम्। एवं च प्रमाणसन्निकर्षाजन्यत्वेनेत्यर्थः। अन्यथा वृत्तिकरणत्ववादिनामपसिद्धान्तात्। अपरोक्षज्ञानस्यैवेति। एवकारो भिन्नक्रमः। एवं च विषयसंनिकर्षजन्यत्वेनैवेत्यर्थः। तदुक्तमिति। वार्तिककारपादैरिति शेषः। साक्षात्कारिशङ्खपीतत्वादिभ्रमोऽपि निवर्ततां तत्राह–अभानावरणेति।

**तस्मान्निर्धर्मकस्याप्यात्मनोऽविद्ययान्तःकरणतादात्म्याध्यासात्तद्धर्मकर्तृत्वभोक्तृत्वाद्यध्यास उपपद्यते।**

( लघुव्याख्या. )

तस्मादध्यासे दोषाभावात्। उपपद्यते धर्मितादात्म्याध्यासस्य धर्मसंसर्गाध्यासे कारणत्वादिति भावः।

( संदीपनम् )

अविद्यया कर्तृत्वादिभाक्, परमार्थतो निर्धर्मक इत्यौपनिषदमते यदुक्तं प्राक् तदिदानीमुपपादयति–तस्मादिति। तादात्म्येति। तादात्म्येनान्तःकरणाध्यासादित्यर्थः।

**ननु त्वन्मतेऽनिर्वचनीयख्यात्यभ्युपगमाद्ये कर्तृत्वादयोऽन्तःकरणधर्मा आत्मन्यध्यस्यन्ते तेऽनिर्वचनीयास्तत्रोत्पद्यन्त इति वाच्यम्। तथाच व्यावहारिकप्रातीतिकभेदेन कर्तृत्वभोक्तृत्वादीनां द्विधावभासः स्यात्, न स्यात्, तादात्म्याभिमानेनाविवेकात्, सकलधर्मविशिष्टस्यैवान्तःकरणस्यात्मन्यध्यस्तत्वेन द्वयाभावाद्वा।**

( लघुव्याख्या. )

नन्वन्यगतानामेव कर्तृत्वादीनामात्मवृत्तितया भानं किंवात्मन्युत्पद्यमानानामपि। आद्येऽन्यथाख्यातिप्रसङ्गः। द्वितीयेऽन्तःकरणधर्माणामवभास इति सिद्धान्तो भज्यते। अन्तःकरण इव स्वस्मिन्नपि उत्पत्तिस्वीकारात्। नच सम्बन्धकृतो विशेषः। समवायनिरासेन सर्वत्राविद्यकतादात्म्यस्यैव सम्बन्धत्वाङ्गीकारात्। व्यावहारिकप्रातीतिकभेदेन तयोर्विशेषोपपादने तु द्विविधयोस्तयोर्भानेऽपि भेदः स्यादित्याशयेनाशङ्कते–नन्विति। अनिर्वचनीय इति। अन्यथाऽन्यथाख्यात्यापत्तेरिति भावः। व्यावहारिकेति। स्वाभाविकत्वेन मनोनिष्ठं तद्व्यावहारिकम्। अस्वाभाविकत्वेनात्मनिष्ठं तद्गगननैल्यादिवत्प्रातीतिकमिति। तयोर्जपाकुसुमारुण्यस्फटिकारुण्ययोरिव पृथगवभासः स्यादित्यर्थः। सोपाधिकाध्यासे तथा, नचायं सोपाधिकाध्यासोऽधिष्ठानाध्यस्तोपाधिकत्वादित्यभिप्रेत्य समाधत्ते–न स्यादिति। तादात्म्येति। आत्ममनसोरभेदाध्यासेन अविवेकात् आत्ममनोवृत्तितया पृथक्कृतया धर्मयोरग्रहात्। एकमेव कर्तृत्वादिकं न पृथगिति मते समाधत्ते सकलेति। द्वयेति। व्यावहारिकप्रातिभासिकभेदेन रूपद्वयाभावात्।

( संदीपनम् )

ननु यथा व्यावहारिकं रजतमेकमपरं च प्रातीतिकं तथा कर्तृत्वादिकमप्युभयं वक्तव्यमित्याशङ्कते–ननु त्वन्मत इति। ये कर्तृत्वादय इति। येषां धर्मा अध्यस्यन्ते ते तद्व्यावहारिका इति भावः। परिहरति न स्यादिति। यदुक्तं द्विधावभासः स्यादिति तदपनुदति—तादात्म्येति। द्वितीयमेव नास्तीत्याह–सकलधर्मेति।

**तस्मादेकस्याप्यात्मन उपाधिभेदेन प्रमात्रादिभेदव्यवस्थोपपत्तेर्न सौगतमतापत्तिर्न वा विरोधः। अन्या अपि व्यवस्थाः स्फुटतरमुपरिष्टादुपपादयिष्यन्ते। तस्माज्ज्ञानस्वरूपस्याप्यात्मनः सुषुप्तावव्यभिचारित्वाद्देहेन्द्रियादीनां व्यभिचारित्वाद्दृश्यत्वाच्च तत्र तत्रात्मबुद्धिस्तेषां तेषां वादिनां भ्रान्तिरित्यौपनिषदमेव मतं प्रामाणिकमिति सिद्धम्॥ १॥**

(लघुव्याख्या.)

श्लोकव्याख्यामुपसंहरति–तस्मादिति। अनाद्यविद्याध्यासकृततत्कार्यप्रतिबिम्बादेः समर्थनादित्यर्थः। एकस्य अद्वितीयस्य। उपाधीत्यादि अन्तःकरणाद्युपाधिभेदेन प्रमात्रादीत्यादिना

सुखित्वादिपरिग्रहः। न सौगतेति। तेनानिर्वचनीयानाद्यविद्याद्यनङ्गीकारात्। न वा विरोध इति। केवलस्यैकस्य प्रमातृत्वाद्यनङ्गीकारादिति भावः। स्पष्टमन्यत्॥ १॥

(संदीपनम्)

यदुक्तमेकस्यैवात्मनः प्रमाणप्रमेयप्रमितिरूपता च विरुद्धा, विरोधाभ्युपगमे वा सौगतमतापत्तिरिति तदपनुदति—तस्मादेकस्येति। प्रथमोक्तस्य विरोधस्य व्यवस्थोपपत्तेरित्यन्तेन प्रथमतो दूषितत्वान्न विरोध इत्यनुवादमात्रमेतेन प्रथमोक्तविरोधः प्रथमतः किमिति न दूषित इत्यपास्तम्। परमप्रकृतमुपसंहरति—तस्माज्ज्ञानरूपस्येति ॥१॥ इति प्रथमश्लोकविवरणम्।

**स्यादेतत्। आत्मनो निर्धर्मकत्वे प्रमात्रादिव्यवहारस्याध्यासमूलत्वे च 'ब्राह्मणो यजेते'त्येवमादीनां शास्त्राणामप्रामाण्यप्रसंगोऽकर्तुरभोक्तुश्चात्मनः प्रवृत्त्यनुपपत्तेः, वेदाप्रामाण्ये च कुतो ब्रह्मसिद्धिरपि तस्य तन्मात्रगम्यत्वात् 'शास्त्रयोनित्वादि'तिन्यायात्। तथाच वेदप्रामाण्याय प्रमात्रादिव्यवहारस्य सत्यत्वमभ्युपेयमित्याशङ्क्य, किं तत्त्वज्ञानात्प्रागप्रामाण्यमापाद्यते, ऊर्ध्वं वा? तत्राद्ये [यावदविद्यानिवृत्ति व्यवस्थाया उपपादितत्वात्] सर्वेषां प्रमाणानामविद्यावद्विषयत्वेन तद्दशायां बाधाभावान्निष्प्रत्यूहं प्रामाण्यं, द्वितीये त्विष्टापत्तिरेवेत्याह—**

(लघुव्याख्या.)

द्वितीयपद्यमवतारयति–स्यादित्यादि। एतद्वक्ष्यमाणं स्यात् अनिष्टमिति शेषः। प्रमात्रादीत्यादिना ब्राह्मणादिपरिग्रहः। तस्य ब्रह्मणः तन्मात्रेति वेदमात्रेत्यर्थः। कर्तृजन्यत्वव्याप्येन कार्यत्वादिहेतुनापीश्वरसिद्धिः सम्भवतीत्यत आह–शास्त्रेति। शास्त्रमेव योनिः प्रमाणं यत्र तस्य भावः शास्त्रैकसमधिगम्यत्वं तस्मादित्यर्थः। न्यायात् वेदान्ताधिकरणसूत्रात्। तत्र 'तं त्वौपनिषदं पुरुषं पृच्छामी'त्यादिश्रुतिबलेनोपनिषन्मात्रगम्यत्वसाधनादिति भावः। अविद्येति। अविद्यावान् अध्यस्तो व्यवहारकालाबाध्यो विषयः प्रतिपाद्यो येषां तेऽविद्यावद्विषयास्तेषां भावो व्यवहारकालाबाध्यविषयकधीजनकत्वं तेन तद्दशायामविद्यादशायां व्यवहारकाले अबाध्यत्वग्रहकाले बाधाभावात् आत्मतत्त्वधीरूपबाधकस्यासत्त्वात्। अध्यस्तस्य सत्त्वेन विषयविसंवादाभावाद्वा। अविद्यावानात्मानभिज्ञो विषयोऽधिकारी यत्र तेऽविद्यावद्विषयास्तेषांभावोऽविद्वदधिकारिकत्वं तेन, प्रामाण्यं फलकामनावत्तादृशपुरुषकर्तव्यताहशकार्यप्रतिपादकत्वादिरूपम्।

(संदीपनम्)

द्वितीयश्लोकावतरणिकामाह—स्यादेतदित्यादिना। उभयमभिप्रेत्याह—ब्राह्मण इति। निर्धर्मकस्यात्मनः ब्राह्मणत्वयागानुकूलकृत्यादीनां वैशिष्ट्यावबोधनेन कृत्याक्षिप्तज्ञानेच्छादीनां बोधनेन च शास्त्राणामप्रामाण्यमध्यस्तबोधनेन च शुक्तिरजतबोधकवाक्यवदाहत्यैवाप्रामाण्यमित्यर्थः। निर्धर्मकत्वमभिप्रेत्याह—अकर्तुरिति। कर्ता हि स्वेष्टसाधनतामनुसंधाय प्रवर्तते नाकर्ता, तथा च श्रवणादावपि प्रवृत्तिर्न स्यादित्याशयः। ननु भवतु कर्मकाण्डाप्रामाण्यं किं तेन तत्राह—वेदाप्रामाण्ये चेति। कर्मकाण्डाप्रामाण्ये उपनिषदामप्यप्रामाण्यं वक्तव्यम्। अन्यथार्धजरतीयन्याय

आपतेत्। किंचोपनिषद्भागमध्येऽपि बहून्युपासनाप्रतिपादकानि वाक्यानि, तेषां प्रामाण्यस्वीकारे किमपराद्धं कर्मकाण्डेन। तथाच सर्वस्य वेदस्याप्रामाण्यं वक्तव्यम्। तथाच न ब्रह्मसिद्धिरपीत्यर्थः। तन्मात्रगम्यत्वे बादरायणप्रणीतं सूत्रं प्रमाणत्वेनाह–शास्त्रयोनित्वादिति। अस्यार्थः–यथोक्तऋग्वेदादिशास्त्रं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे, शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्मावगम्यत इत्यनेन प्रकटितो भगवता भाष्यकारेणेति बोध्यम्।

**न वर्णा न वर्णाश्रमाचारधर्मा**
**न मे धारणाध्यानयोगादयोऽपि।**
**अनात्माश्रयाहंममाध्यासहानात्**
**तदेकोऽवशिष्टः शिवः केवलोऽहम्॥ २॥**

वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्राः, आश्रमाः ब्रह्मचारिगृहस्थवानप्रस्थभिक्षवः, आचाराः स्नानशौचादयः, धर्मा ब्रह्मचर्यगुरुसेवादयः, अत्र द्वन्द्वगर्भषष्ठीतत्पुरुषेण वर्णानामाचारा धर्माश्च, आश्रमाणामप्याचारा धर्माश्च लभ्यन्ते। धारणा बाह्यविषयत्यागेन मनसः स्थैर्यं, ध्यानं परमात्मचिन्तनं, योगश्चित्तवृत्तिनिरोधः। आदिशब्देन च श्रवणमननादयो गृह्यन्ते। सर्वेषां ज्ञानोत्तरकालमसत्त्वे हेतुमाह–'अनात्माश्रयाहम्ममाध्यासहानात्। अनात्मा आत्मविरोधिनी अविद्या तदाश्रयस्तदुपादानो योऽहंकारममकाराद्यध्यासः तस्य समूलस्यापि तत्त्वज्ञानेन हानात् तत्प्रयुक्तवर्णाश्रमादिव्यवहारो नास्तीत्यर्थः॥ २॥

(लघुव्याख्या.)

इष्टापत्तिरेवेत्यत्र पद्येनैव हेतुमाह–न वर्णा इत्यादि। योगादयोऽपीत्यपिशब्देन हेतुरुच्यते। यतो मयि वर्णाद्यभावोऽतोऽद्वितीये इष्टापत्तिरित्यर्थः। वर्णाद्यभावे हानादित्यन्तं हेतुः। ननु वर्णाश्रमेत्यादौ वर्णाश्रमयोराचारधर्मनिषेधे आश्रमनिषेधो न लभ्यते तत्राह–द्वन्द्वेति आश्रमाश्चाचाराश्च धर्माश्चेति द्वन्द्वोत्तरषष्ठीतत्पुरुषेणेत्यर्थः। वर्णसंबन्धिन आश्रमाचारादयो लभ्यन्ते तेषां मध्ये आश्रमपुरस्कारेण विहिता आचारधर्मा लभ्यन्ते वर्णसंबन्धित्वाविशेषादित्याशयेनाह–वर्णानामित्यादि। लभ्यन्ते निषेध्यत्वेन ज्ञायन्ते। द्वन्द्वद्वयेतिपाठे तु धर्मपदेनैवाश्रमा अपि बोध्या आश्रमस्यापि वर्णधर्मत्वसंभवात्। तथा च वर्णाश्च आश्रमाश्चेति वर्णाश्रमौ आचाराश्च धर्माश्चाचारधर्माः। वर्णाश्रमयोराचारधर्मा इति विग्रहः। शास्त्रस्यात्मपरत्वात्तत्रोक्तधारणादिपदार्थमात्मपरत्वेन योजयति–धारणेत्यादि। स्थैर्यं स्थिरीकरणम्। यत्नपूर्वकपरमात्माकारप्रत्ययप्रवाह इति यावत्। बाह्यविषयपरित्यागेनेत्यंशेन प्रत्याहारपूर्वकत्वं धारणाया उक्तम्। "बाह्यविषयासंप्रयोगस्य योगसूत्रेषु प्रत्याहारत्वोक्तेरिति संक्षेपः। धारणासाध्यं ध्यानं लक्षयति–परमात्मेति। यत्नमनपेक्ष्यैव परमात्माकारप्रत्ययप्रवाह इत्यर्थः। ध्यानसाध्यं योगं लक्षयति–योग इति। चित्तस्य सत्त्वप्राधान्येन सूक्ष्मपञ्चभूतारब्धस्यान्तःकरणस्य या वृत्तयः

१ द्वन्द्वद्वयगर्भषष्ठी०।

विषयोपभोगपरिणामरूपास्तासां निरोधः प्रतिलोमपरिणामेनोपशमः योगः समाधिः। तदुपादानः तत्कारणकः। अतिरोहितार्थमन्यत् ॥ २ ॥

( संदीपनम् )

अयमर्थः कुतो लब्ध इत्यत आह—अत्र द्वन्द्वेति। वर्णाश्चाश्रमाश्च वर्णाश्रमाः आचाराश्च धर्माश्चाचारधर्माः वर्णाश्रमाणामाचारधर्मा वर्णाश्रमाचारधर्मा इत्यर्थः। पातञ्जलसूत्रेण योगपदार्थं व्याख्याति—योग इति। आत्मविरोधिनी आत्मबोधविरोधिनीति ॥ २ ॥ द्वितीयश्लोकः।

वर्णाश्रमादिव्यवहारस्य मिथ्याज्ञानमात्रमूलत्वेन मिथ्यात्वं द्रढयितुं तद्व्यतिरेके सुषुप्तौ व्यतिरेकमाह—

न माता पिता वा न देवा न लोका
न वेदा न यज्ञा न तीर्थं ब्रुवन्ति।
सुषुप्तौ निरस्तातिशून्यात्मकत्वात्
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ३ ॥

माता जनकस्त्री, पिता जनकः पुमान्, देवा इन्द्रादय आराध्याः, लोकाः तदाराधनफलानि स्वर्गादीनि, वेदा अलौकिकहिताहितसाधनप्रतिपादकानि ब्रह्मप्रतिपादकानि च प्रमाणवाक्यानि, यज्ञाः स्वर्गादिसाधनभूता ज्योतिष्टोमादयः, तीर्थं यज्ञादिसाधनभूतः कुरुक्षेत्रादिदेशः, एवं पापकर्मसाधनान्युपलक्षणीयानि। सर्वेषां देहाभिमानमूलत्वात्तदभावे स्वतःसंबन्धाभावादविद्यमानसमतेत्यर्थः। तथा च सुषुप्तिं प्रकृत्य श्रुतिः—अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा यज्ञा अयज्ञा स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति, इत्याद्याभिमानाभावे सर्वानर्थनिवृत्तिं दर्शयति। ननु सर्वव्यवहाराभावे शून्यतैव स्यान्नेत्याह—'निरस्तातिशून्यात्मकत्वादिति। निरस्तमतिशून्यात्मकत्वं यस्मात्तत्तथा। भावप्रधानो निर्देशः। तस्य सुषुप्तिसाधकत्वात्पुनरुत्थानानुपपत्तेश्च, 'अविनाशी वा अरेयमात्मानुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवति 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति, नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्, नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्, इत्यादिश्रुतिभ्यश्चात्मचैतन्यस्य सुषुप्तौ न शून्यतेत्यर्थः। निराकृतमप्येतत्पुनरपि स्थूणानिखननन्यायेन निराक्रियते। यद्वा निरस्तमशनायाद्यतीतमद्वितीयमतिशून्यं यद्ब्रह्म तदात्मकत्वात्। तथाच श्रुतिः 'यदा वै पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति, तद्यथा प्रियया स्त्रिया संपरिष्वक्तो भवति न बाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमिति। तेन जगत्कारणीभूतसर्वज्ञसर्वशक्तिपरिपूर्णानन्दबोधरूपेण ब्रह्मणा सहैकत्वादसंसार्येव जीव इति सिद्धम् ॥ ३ ॥

( लघुव्याख्या. )

तृतीयपद्यमवतारयति—वर्णेत्यादि । मिथ्येति । अहं ब्राह्मण इत्यादिभ्रममात्रकारणत्वेन मिथ्यात्वं बाधितार्थत्वम् तद्व्यतिरेके मिथ्याज्ञानव्यतिरेके सति वर्णाश्रमादिव्यवहारव्यतिरेकम् । न मातेत्यादौ पूर्वपद्यान्मे इत्यनुषङ्गः । मे मातेत्यादि । सुषुप्तौ न ब्रुवन्ति तत्तस्मादेकोऽद्वितीयोऽहमित्यर्थः । सर्वेषामिति । मत्सेव्यत्वादिरूपममत्वाध्यासविशिष्टानां सर्वेषामित्यर्थः । स्वतः देहाभिमानं विना, संबन्धाभावात् ममत्वाध्यासवैशिष्ट्याभावात् । अविद्यमानसमता ममत्वविशिष्टरूपेणाव्यवहार्यत्वम् । तथाच ममत्वाध्यासं प्रति स्थूलदेहाद्यध्यासस्य हेतुत्वात्तदभावे ममत्वविशिष्टरूपेण व्यवहारसामान्याभावो युक्त इति भावः । अथवा वर्णाश्रमादिव्यवहारस्य मनोवच्छिन्नचिन्निष्ठत्वेनाहमितिमिथ्याज्ञानमूलकत्वेनेत्यर्थः । एवं च मे इत्यस्याननुषङ्गेऽपि न क्षतिः । सर्वेषामिति । सवव्यवहाराणामहङ्काराध्यासमूलकत्वादित्यर्थः । तदभावे अहङ्काराद्यध्यासाभावे स्वतः अहङ्कारानवच्छिन्नचिति संबन्धाभावात् । सर्वव्यवहारसंबन्धाभावात् । अत्र सुषुप्तौ अपिता ममत्वविशिष्टपितृत्वादिरूपेणाव्यवहार्यः । एवमग्रेऽपि । चाण्डालः ब्राह्मण्यां शूद्राज्जातः पौल्कसः क्षत्रियायां निषादाज्जातः । निषादस्तु शूद्रायां ब्राह्मणाज्जातः । श्रमणः परिव्राट् तापसः वानप्रस्थः । अनन्वागतमसंस्पृष्टं पुण्येन शास्त्रविहितकर्मजादृष्टेन पापेन विहिताकरणप्रतिषिद्धकरणजादृष्टेन । कुत इत्याकाङ्क्षायामाह तीर्णो हीति । हि यस्मात् तदा सुषुप्तिकाले हृदयस्य हृदयस्थाया बुद्धेः सम्बन्धिनः सर्वाञ्छोकान् पापपुण्यहेतुसंस्कारान् तीर्णः अतिक्रान्तो भवतीत्यर्थः। उद्बोधाभावादिति भावः । धर्मिणो हेतुत्वास्वीकारमत धर्मस्य हेतुतालाभायाह—भावेति । तथाच निरस्तातिशून्यात्मकत्वत्वादित्यर्थः । कथमस्मादतिशून्यात्मकत्वनिरासस्तत्राह - तस्येत्यादि । तस्य ब्रह्मणः । सुषुप्तीति । सुषुप्त्यवभासकत्वात् अन्यथोत्थितस्य स्मृत्यनुपपत्तेरित्युक्तत्वादिति भावः । पुनरुत्थानेति सुषुप्त्यनन्तरं जाग्रदाद्यभिमानित्वानुपपत्तेरित्यर्थः। उत्थातुरप्यनङ्गीकारादिति भावः। न केवलं युक्तिगम्यमेवात्मतत्त्वं तदानीमपि तु श्रुतिगम्यमपीत्यभिप्रेत्य श्रुतिमुदाहरति—अविनाशीति । अविनाशित्वे हेतुमाह—अनुच्छित्तिधर्मेति । न विद्यते उच्छित्तिर्विनाशो यस्यैतादृशो धर्मः सच्चिदानन्दत्वादिरूपो यस्येत्यर्थः । मात्रेति । मीयन्ते इति मात्रा विषयाः तैरसम्बन्धः । अस्य आत्मनः । श्रुत्यन्तरमाह—यद्वै इति । यत् यत्किञ्चित् वै प्रसिद्धम् । तत्तत्र सुषुप्तौ न पश्यति न साक्षात्करोति तत्स्वयंज्योतिष्ट्वाभावनिबन्धनं न, कुतः ? पश्यन्वै तन्न पश्यति तत्तत्र पश्यन् स्वयंज्योतिःस्वरूप एव सन्न पश्यतीति वै प्रसिद्धं प्रमाणसामान्यव्यापाराभावात् । किं विनिगमकं तत्राह—नहीति । द्रष्टुः कूटस्थचिन्मात्रस्य स्वरूपभूता या दृष्टिस्तस्या हि यस्माद्विपरिलोपो न विद्यते । तत्र हेतुमाह—अविनाशित्वादिति । विविधो नाशो यस्मात्तद्विनाशि परिणामि, न विनाशि अविनाशि तस्य भावस्तस्मादपरिणामित्वात् । न पश्यतीत्यत्र हेतुमाह—नत्विति । तत्तदा सुषुप्तौ तुशब्दो हेत्वर्थः । यस्मात्ततः कूटस्थचैतन्यात् द्वितीयं प्रमातृभावापन्नम्, अन्यत् प्रमाणादिकं विभक्तं स्वरूपाद्विलक्षणं प्रमेयं तमःप्रधानं नास्ति । यत्प्रमेयं प्रमाता जीवः करणेन पश्येदित्यर्थः । आशङ्कानिरासाभिप्रायेण हेतुव्याख्यानं शब्दस्वरससिद्धं न भवतीत्यभिप्रेत्य, न मातेत्यादिप्रतिज्ञातार्थोपपादनपरत्वेन हेतुं योजयति—

यद्वेति । धार्मिकोऽयं कलहान्निरस्त इत्यादाविव निरस्तशब्दस्य राहित्यार्थत्वमाह—निरस्तेति । एकाक्ययमतिशून्य इत्यादाविवातिशून्यशब्दस्य स्वद्वितीयाभावार्थत्वमाह—अद्वितीयमिति । अति अतिशयेन शून्यं रहितं स्वद्वितीयसर्वशून्यमित्यर्थः । तदात्मकत्वात् तदभिन्नत्वात् न ममत्वाध्यासपूर्वको मातृत्वादिबन्ध इति भावः । प्रमाणमाह—तथेति । यदा यस्मिन् समये स्वपिति नाम सुषुप्तः सता ब्रह्मणा तदा सुषुप्तौ संपन्नः एकीभूतः । एकीभावेनान्यदृष्टिरूपबन्धाभावे दृष्टान्तमाह—तद्यथेति । तत्तत्र व्यामिश्रीभावे यथा प्रियया मनोहरणसमर्थया स्त्रिया संपरिष्वक्तः सम्यक् परिष्वक्तो व्यामिश्रीभावापन्नः कामुकः संभोगसुखमनुभवन् स्वस्माद्बाह्यं बहिर्भूतं किंचन किंचिदपि वस्तु न वेद न जानाति, नान्तरं दुःखादिलक्षणं जानाति । यथायं दृष्टान्तः एवमेवायं जलचन्द्रादिवत् कार्यकारणादिषु प्रविष्टः क्षेत्रज्ञः पुरुषः उपाधिविलयात् प्राज्ञेन अविद्यासाक्षिणात्मना संपरिष्वक्तोऽत्यन्तमेकीभूतः सन् सर्वात्मा बाह्याद्यभिमानाभावात् बाह्यं मेयादि आन्तरं प्रमातृप्रमितिरूपं न जानातीत्यर्थः । तेन एकीभावदृष्टान्तादिना स्वतो निरभिमानत्वाद्युपपादनेन ॥ ३ ॥

(संदीपनम्)

तृतीयश्लोकस्यावतारिकामाह—वर्णाश्रमादीति । पितुरपेक्षया मातुरभ्यर्हितत्वादादावाह—न मातेति। तदर्थमाह—माता जनकस्त्रीति । प्रमाणवाक्यानीत्युपलक्षणं तदुपजीविनामर्थवादेहुंफडादीनां, तथाच चत्वारो वेदा इत्यर्थः। अथवा चतुर्ष्वेव वेदेषु यानि प्रमाणवाक्यानि तानि चेन्न सन्ति तर्हि का कथार्थवादादीनामित्याशयः। यज्ञा इति। एतेन तत्साध्यमपूर्वादिकमपि व्याख्यातम्। एवं पापकर्मेति। पापकर्माभावात्कुतः पापं तदभावाच्च कुतो नरकादिकमित्यनुसंधेयम्। एतेषामभावे हेतुमाह—सर्वेषामिति । आचार्योक्तमर्थमतिप्रामाणिकीकर्तुं बृहदारण्यकश्रुतिमुदाहरति—तथाचेत्यादिना । अनन्वागतमिति असम्बद्धमित्यर्थः । यस्मादिति चैतन्यादित्यर्थः । बृहदारण्यकश्रुतिमाह—अविनाशी वा इति । मात्रेति । मीयत इति मात्रा शब्दादिस्तेनासंबद्ध इत्यर्थः । यद्वै इति । वै अव्ययम् ॥ तत्तदा सुषुप्तौ यन्न पश्यतीत्यन्वयः । अतिशून्यात्मकत्वाभावे ग्रन्थकारः स्वातन्त्र्येण हेतुमाह—तस्येत्यादिना । तस्य चैतन्यस्य 'न खमित्यादिना प्रथमश्लोके शून्यवादस्य निराकृतत्वात् पौनरुक्त्यमित्याशङ्क्याह—निराकृतमपीति । उक्तपौनरुक्त्यभिया प्रकारान्तरेण व्याकरोति—यद्वेति। अतिशून्यमिति । कं ब्रह्म खं ब्रह्मेतिश्रुत्या खशब्दस्य ब्रह्मवाचकत्ववत् अतिशून्यपदस्यापि ब्रह्मवाचकत्वमित्यर्थः । अनेन यज्जीवस्य ब्रह्मभाव उक्तस्तत्र बृहदारण्यकश्रुतिं प्रमाणयति—तथाच श्रुतिरिति । सतेति । सच्छब्दवाच्येन ब्रह्मणेत्यर्थः । श्लोकश्रुत्योस्तात्पर्यमाह—तेन जगत्कारणीभूतेति ॥ ३ ॥ इति तृतीयश्लोकः ।

**एवं तावत्त्रिभिः श्लोकैर्वादिविप्रतिपत्तिनिराकरणपूर्वकं त्वम्पदार्थो निर्धारितः । संप्रति तत्पदार्थस्तथैव निर्धारणीयः । तत्र निराकरणीया विप्रतिपत्तयः प्रदर्श्यन्ते—**

(लघुव्याख्या.)

चतुर्थपद्यमवतारयति—एवमिति । तथैवेति । तत्त्वमसीत्य द्युक्ताभेदस्य सिद्धये चार्वाकादिमतनिराकरणेन त्वंपदार्थो यथाऽकर्त्रभोक्तात्मना निर्धारितस्तथा साङ्ख्यादिमतनिराकरणेन तत्पदार्थोऽपि विधेयभूतः केवलात्मना निर्धारणीय इत्यर्थः ।

( संदीपनम् )

ननूक्तक्रमेण सिद्धे जीवब्रह्मणोरैक्ये जीवस्यासंसारित्वे चालं नसाङ्ख्यमित्याद्युत्तरश्लोकेनेत्याशङ्कयाह—एवं तावदिति ।

ननु ब्रह्मणा सह जीवस्यैक्यं नोपपद्यते, ब्रह्मणः सद्भावस्यैवाभावात् । तथाहि—सच्छब्दवाच्यं जगत्कारणं न ब्रह्म 'सदेव सोम्येदमग्र आसीदित्यादिवाक्येन प्रतिपादितं, जगत्कारणं च प्रधानमचेतनमिति सांख्याः, पशुपतिरेव जगत्कारणं स च चेतनोऽपि जीवाद्भिन्नस्तदुपास्य एवेति पाशुपताः, भगवान्वासुदेव ईश्वरो जगत्कारणं तस्मादुत्पद्यते संकर्षणाख्यो जीवस्तस्मान्मनः प्रद्युम्नस्ततोऽहङ्कारोऽनिरुद्धस्तेन कार्यत्वाज्जीवस्य तेन सह न ब्रह्मणो वासुदेवस्यात्यन्ताभेद इति पाञ्चरात्रिकाः, परिणामिनित्यः सर्वज्ञो भिन्नाभिन्न इति जैनास्त्रिदण्डिनश्च, नास्ति सर्वज्ञत्वाद्युपेतं ब्रह्म 'आम्नायस्य क्रियार्थपरत्वेन तत्र तात्पर्याभावात् किंतु वाग्धेन्वादिवत्सर्वज्ञत्वादिदृष्ट्या जगत्कारणं परमाण्वादि वा जीवो वोपास्य इति मीमांसकाः, अस्ति नित्यज्ञानादिमान् सर्वज्ञ ईश्वरः क्षित्यादिकार्यलिङ्गानुमितः स च जीवाद्भिन्न एवेति तार्किकवैशेषिकाः, क्षणिकः सर्वज्ञ इति सौगताः, क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषो नित्यज्ञानस्वरूपः प्रधानांशसत्त्वगुणप्रतिफलिततया सर्वज्ञः संसारिपुरुषविलक्षण एवेति पातञ्जलाः, अद्वितीयपरमानन्द एव ब्रह्म तच्च जीवस्य वास्तवं स्वरूपं मायया च सर्वज्ञत्वादिविशिष्टं जगदुपादानं निमित्तं चेत्यौपनिषदाः ।

( लघुव्याख्या. )

वादिविप्रतिपत्तिमुत्थापयति—नन्विति । सद्भावस्यैव सत्त्वस्यैव । कर्तृजन्यत्वव्याप्यः कार्यत्वहेतुर्न ब्रह्मणोऽनुमापकः संभवति । तत्र सकर्तृकत्वमात्रसाधनेऽदृष्टद्वारककृतिमादाय जीवेन, सोपादानकत्वसाधने तु प्रधानेन सिद्धसाधनादर्थान्तराच्च । तस्माच्छ्रुतिरेव ब्रह्मणि मानमिति वाच्यम् । तदपि नेत्याह—तथाहीति । 'सदेव सोम्येदमग्र आसीदित्यादिवाक्येन प्रतिपादितं सच्छब्दवाच्यं जगत्कारणं न ब्रह्मेत्यन्वयः । आदिना सन्मूला सोम्येमाः सर्वाः प्रजा इत्यादि वाक्यपरिग्रहः । सच्छब्दवाच्यं सामान्यतः जगत्कारणं जगदुपादानं सदेवेति, अग्रे गुणत्रयसाम्यावस्थायां इदं नामरूपाभ्यां व्याकृतं सदेवासीत् परिणामिनित्यप्रधानात्मनासीदित्यर्थः । अत एवेदं नीलोत्पलमित्यादिवत्, इदं सदेवासीदिति सामानाधिकरण्यमप्युपपद्यते । जडयोरेव कार्यकारणयोरभेरसंभवादिति संक्षपः । प्रधानं साम्यावस्थोपलक्षितं गुणत्रयम् अचेतनं जडमिति साङ्ख्यमतनिष्कर्षः । एतच्च न सम्यक्, श्रुतियुक्तिविरोधात् । तथाहि—जडस्य स्वतः प्रवृत्त्ययोगात्प्रवर्तकचेतनोऽसर्वज्ञ जीवाद्भिन्न आवश्यकः । स च 'भूयः सृष्ट्वा पतयस्त्वथेशः सर्वाधिपत्यं कुरुते महात्मेति श्रुतेः पशुपतिरेवेति पाशुपतमतमवतारयति—पशुपतिरेवेति । 'यदा तमस्तत्र दिवा न रात्रिर्न सन्नचासञ्छिव एव केवलः । तत्सवितुर्वरेण्य, प्रज्ञा च तस्मा-

१ ननु न ब्र० । २ ०क्यमुप० ।

त्प्रसृता पुराणी, स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप इत्यादि श्रुतेरिति भावः । चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो । जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दन इत्यादिवाक्येन वैष्णवसाधितं जीवकोटिप्रवेशं वारयति-स चेति । पशूनां जीवानां पतिश्चेत्यर्थः । जीवाद्भिन्न इति । माण्डूक्यादौ 'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामीत्यादिना जीवकोटिप्रवेशनिरासादिति भावः । नच तदन्यपरमेवेति वाच्यम् । शिवमद्वैतं चतुर्थं मन्यन्त इत्युपसंहारविरोधात् । तत्र तत्र शिवपदस्य शोधितत्वंपदार्थपरत्वमतनिरासायाह—तदिति । जीवोपास्यः शिव एको ध्येय इत्यादिश्रुतौ ध्येयत्वमात्रोक्तिर्ध्यातृजीवाद्भिन्न एव शिवपदार्थ इति भावः । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति विश्वयोनिं समस्तसाक्षिं तमसः परस्तादित्यादिकैवल्यश्रुतेः, यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यतीति श्वेताश्वतरश्रुतेश्च । श्रुतिसमन्वयोऽपि तत्रैव 'शिव एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्य समाप्ताथर्वणं शिखेति श्रुतिसमाप्तौ शिवपरत्वेनोपसंहारात् । शिवपदप्रतिपाद्यस्तु हररुद्रेशानादिपदबोध्य एव । आनुशासिके शिव एव भगवानीशः इत्युपक्रम्य 'सोऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसंभवम् । वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरम् । युगान्ते चैव संप्राप्ते रुद्रं प्रभुमथासृजदित्यादिना मूर्तित्रयजनकत्वोक्तेः । तथाच वैष्णवोक्तवाक्यविषयो मूर्तित्रयगतो रुद्र एवेति न कोऽपि विरोधः । नचैतदन्यपरं वक्तुं शक्यम्, 'तस्य साधारणी मूर्तिः साम्बा चन्द्रार्धशेखरा । तमेव सततं विष्णुब्रह्माद्याश्च सुरेश्वराः । ध्यायन्ति बन्धनाशाय जनानां हितकाम्ययेत्यादिपुराणवाक्यैरुमापतेः पशुपतेरेव शिवादिपदैर्व्युत्पादनात् । अत एव सौरपुराणे 'ब्रह्माण्डमेतत्सकलं ब्रह्मणः क्षेत्रमुच्यते । सहस्रकोटयः सन्ति ब्रह्माण्डास्तिर्यगूर्ध्वगाः । ब्रह्माणो हरयो रुद्रास्तत्र तत्र व्यवस्थिताः । आज्ञया देवदेवस्य महादेवस्य शूलिनः । ब्रह्माण्डानामसंख्यानां ब्रह्मविष्णुहरात्मना । उद्भवे प्रलये हेतुर्महादेव इति श्रुतिः । इति शैवमतनिष्कर्षः । तदेतत्पाञ्चरात्रत्वेन प्रसिद्धा वैष्णवा न सहन्ते । तथाहि संहारकातिरिक्तशिवे मानाभावात् . संहारात्मकश्च नारायणात्मज एव । नारायण एवाग्र आसीदित्युपक्रम्य पुनरेव नारायणः सोऽन्यत्कामो मनसाध्यायत । तस्य ध्यानान्तरस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत । बिभ्रच्छ्रियं सत्यं ब्रह्मचर्यं तपो वैराग्यं ज्ञानमैश्वर्यमिति महोपनिषदि 'ब्राह्मे रात्रिक्षये प्राप्ते विष्णोरमिततेजसः । प्रसादात्प्रादुरासीत्तत्पद्मं पद्मनिभेक्षण । ततो ब्रह्मा समभवत्तस्यैव च प्रसादतः । अह्नः क्षये ललाटाच्च सुतो देवस्य वै तथा । क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारकः । एतौ च विबुधश्रेष्ठौ प्रसादक्रोधजावुभौ । तदादेशितपन्थानौ सृष्टिसंहारकारकौ । निमित्तमात्रं तावत्र सर्वप्राणिवरप्रदौ । इति महाभारते मोक्षधर्मेऽपि नारायणात्मजत्वोक्तेः । यश्च, यदा तम इत्यादिवाक्यबोधितः स च नारायण एव, सर्वे वेदा यत्पदमामनन्तीत्यादिश्रुत्या, वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च ( मध्ये च ? ) हरिः सर्वत्र गीयते । इत्यादिमहाभारतवाक्यादिना च सर्वत्रोत्कर्षवत्प्रतिपादकानां शब्दानां विष्णुपरत्वसमर्थनात् । तस्माच्छ्रुतिस्मृतिप्रतिपाद्यं जगत्कारणं विष्णुरेव । स च ब्रह्मनारायणहरिवासुदेवादिशब्दै

प्रतिपाद्य इति वैष्णवमतमवतारयति—भगवानिति। ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गनेत्युक्तषड्गुणपरिपूर्णः। यस्माद्यं सर्वे वा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेत्यादिश्रुतिप्रतिपादितः। वासुदेवः वसन्ति सर्वाणि भूतानि यस्मिन्निति वासुः स्वसंसृज्यपरिपाल्यसंहार्यसर्वाधिष्ठानं, दीव्यतीति देवः स्वप्रकाशरूपः, स चासौ देवश्चेति वासुदेवः। 'सर्वतः शृणोतीत्युपक्रम्य यमप्येति भुवनमित्यादि नृसिंहतापिन्याद्युक्तः। ईश्वरः सर्वभूतनियन्ता 'भीषास्माद्वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' इति श्रुतिप्रतिपादितः। जगत्कारणं जगदुपादानं निमित्तं च यस्मात्स्वमहिम्ना सर्वांल्लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि विरामयत्यजस्रं सृजति विसृजति वासयतीति श्रुतिभ्यः इति भावः। जीवः सर्वजीवाभिमानी, मनः सर्वमनोभिमानी अहङ्कारः सर्वाहङ्काराभिमानी, तेन ब्रह्मणो जगज्जीवादिकारणत्वेन, अत्यन्ताभेद इति भेदाभेदौ कालभेदेन स्त इति भावः। यदाहुः। आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च। मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावत इति वैष्णवमतनिष्कर्षः। एतदपि जैना न सहन्ते। तथाहि—शिवविष्ण्वादि-शब्दानां शुद्धबुद्धसच्चिदानन्दैकमात्रपरत्वात्। तत्र पदार्थौ द्विविधः। आत्माऽनात्मा च। तत्रानात्मा देहेन्द्रियादिः स्फुट एव। आत्मा तु त्रिविधः परमात्माऽन्तरात्मा बहिरात्माचेति। तत्र परमात्मा सच्चिदानन्दघनः शुद्धो बुद्धोऽवाह्यो ब्रह्मविष्णुशिवादिपदव्यपदेश्यो निर्गुणः। अन्तरात्मा तु परमानन्दानुभविता सर्वोऽप्याधिकारिकवर्गः। आस्तिकनास्तिकग्रन्थेषु प्रसिद्धो व्यासजिनादिः। बहिरात्मा तु देहाभिमानी कर्मवशगः शरीरपरिमाणः सावयव इति। सोऽयमात्मभेदो जगच्च प्रलये ब्रह्मानन्यत्वं प्राप्य सर्गकाले ब्रह्मण एव प्रादुर्भवतीति ब्रह्मैव सर्वस्य परिणामीति जैनमतमवतारयति—परिणामीति। एतावन्मात्रमादाय मूले जैन-त्रिदण्डिनोरैकमत्येन निर्देशः। समुद्रस्य तरङ्गादिवद्ब्रह्मण एव सर्वपरिणाम इति द्वाभ्यामपि प्रतिपादनादिति दिक्। परिणामिनित्यः जगज्जीवात्मना परिणममानोऽप्यनुच्छिन्नस्वरूपः। जगतो ब्रह्मपरिणामत्वादेव सत्यत्वं, सदुपादानकस्य सत्यत्वनियमात्कारणसत्ताकोऽन्यथाभावः परिणाम इति लक्षणाच्चेति भावः। भिन्नाभिन्न इति कार्यरूपेण भिन्नः कारणरूपेणाभिन्न इत्यर्थः। तदुक्तम्। कार्यरूपेण नानात्वमभेदः कारणात्मना। हेमात्मना यथाऽभेदः कुण्डला-द्यात्मना भिदेति। तथाच जीवेन जगता च सह भेदाभेदयोः सत्त्वाद्भेदाभेदवार्तापि तत्र तत्र परस्परमविरोधेनैव प्रमाणमिति तेषामभिप्रायः। परन्तु रामानुजेन मकारार्थस्य जीवकोटौ प्रवेशाङ्गीकाराज्जीवपरमात्मनोः पितापुत्रन्यायेनैवाभेदाङ्गीकाराच्च जैनादप्यपकर्षो ज्ञातव्यः। 'मकारेण परं ब्रह्मान्विच्छेदिति नृसिंहतापिन्यादिश्रुतिविरोधात्। अत एव मूले पश्चादुक्तिः। एतदपि जैमिनीया न सहन्ते। तथाहि। परमात्मनि मानाभावात्। अनुमानस्य सांख्यो-क्तरीत्या निरासात्। उपनिषदां चार्थवादत्वेन स्वार्थपरत्वाभावात्। अतो जगदुपादानं प्रधानं वा परमाणवो वा, निमित्तं च कर्मद्वारा जीव एवेत्यभिप्रायकं जैमिनिमतमवतारयति—नास्तीति। आदिपदाज्जगत्कारणत्वादिधर्मपरिग्रहः। आम्नायस्य वेदस्य क्रियापरत्वेन

फलवद्विधेयार्थतात्पर्यकत्वेन तत्र सिद्धार्थे ब्रह्मणि सर्वज्ञत्वादिनाभिमते तात्पर्याभावात् तत्प्रमाशकत्वाभावात् । वागधेन्वादिवत् धेन्वादिदृष्ट्या वागादिरिव । आदिपदात् 'मनो ब्रह्मेत्यादिपरिग्रहः । जगत्कारणं जगदुपादानं निमित्तं वा परमाण्वादीत्यादिपदात्प्रधानादृष्टादिपरिग्रहः । तत्र ज्ञानं सर्वविषयकत्वं चेत्यारोपद्वये गौरवादाह—जीवो वेति । जगत्कारणमित्यनुषज्यते । उपास्य इति । तथाच 'यतो वेत्यादिश्रुतेर्यतः प्रधानात्परमाणोरदृष्टाज्जीवाद्वा जगदुत्पत्तिस्तत् 'यः सर्वज्ञ इति श्रुत्युक्तसर्वज्ञत्वदृष्ट्योपासीतेति तन्मताभिमतश्रुत्यर्थ इति संक्षेपः । तदेतत्तार्किका न सहन्ते, चैत्र पुत्रस्ते जातो मृत इत्यादौ कार्यार्थबोधकपदं विनापि सिद्धार्थबोधदर्शनात्, वाक्यमात्रस्य कार्यान्वितार्थबोधकत्वानियमात्, उपक्रमादिषड्विधलिङ्गोपेतत्वादुपनिषदां ब्रह्मपरत्वसमर्थनाच, ब्रह्म च 'यः सर्वज्ञ इत्यादिश्रुतेर्नित्यज्ञानादिमान् 'ज्ञाज्ञौ द्वाविति श्रुतेर्जीवाद्भिन्न इति तार्किकमतमवतारयति—अस्तीति । नित्यज्ञानादिमान् नित्यज्ञानेच्छाकृत्याश्रयः 'स्वाभाविकी ज्ञानबलक्रिया चेतिश्रुत्या ज्ञानेच्छाकृतीनां नित्यत्वलाभादिति भाव. । ईश्वरः सृष्टिस्थित्यन्तकर्ता । तदुपपादकं विशेषणमाह—सर्वज्ञ इति । सर्वविषयकविशेषज्ञानवानित्यर्थः । ज्ञ इत्याश्रयप्रत्ययेन ज्ञानाश्रयत्वलाभान्न ज्ञानस्वरूप इति भावः । नच 'नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुतिविरोध इति वाच्यम्, तत्र 'विजानातीति विज्ञानमिति कर्तरि ल्युडङ्गीकारेण नित्यज्ञानवत्त्वलाभात् । नच तावतापि ज्ञाने कथं नित्यत्वलाभस्तत्र धर्मिण एव नित्यपदान्वयादिति वाच्यम्, विशिष्टान्वयिनोऽसति बाधके विशेषणेऽन्वयात् । उपनिषदां ब्रह्मपरत्वं व्यवस्थापयिष्यंस्तर्कतस्तत्सिद्धिमाह—क्षित्यादीति । क्षितिः आदिर्यस्य कर्मधृत्यादेस्तत् क्षित्यादि तदेव कार्यरूपं लिङ्गं तेनानुमितः तज्ज्ञानजन्यानुमितिविषयः । तथाहि—क्षितिः सकर्तृका कार्यत्वाद्धटवत् । द्व्यणुकजनकमाद्यं परमाणुकर्म प्रयत्नवज्जन्यं कर्मत्वात् संमतवत् । ब्रह्माण्डादिधृतिः प्रयत्नवजन्या धृतित्वात्, वियति विहङ्गमधृतिवदित्याद्यनुमानैर्नित्यत्वैकत्वलाघवानुगृहीतैर्नित्यैकप्रयत्नवदीश्वरसिद्धिः । जन्यता चात्र, यत्र समवायेन कार्यं तत्र विषयतया ज्ञानादिरित्येवंप्रत्यासत्तिनियता घटादौ दृष्टा ग्राह्या । तेन नोक्तरीत्या जीवेन सिद्धसाधनमर्थान्तरं वा, जीवज्ञानकृत्यादिजन्यताया उक्तप्रत्यासत्त्यनालिङ्गितत्वात् । समवायेन द्व्यणुकाधिकरणे विषयतया जीवज्ञानादेरभावादित्यन्यत्र विस्तरः । स च परमात्मा शिवहररुद्रेशानब्रह्महरिनारायणविष्णुशब्दादिबोध्यो हरिरुद्रादिमूर्त्यादिभिः क्रीडन्नपि वस्तुतोऽभिन्न एव 'त्रीनेव विभक्तांस्त्रीनेवाविभक्तानित्यादिश्रुतेः । तर्ह्येवं जीवादभेदः स्यात्तत्राह—स चेति । स च परमात्मा जीवात् असर्वज्ञचेतनात् भिन्न एव कालत्रयाबाधितभेदवानित्यर्थः । एवेत्यनेन तत्वज्ञानादूर्ध्वमप्यभेदो नास्तीति ज्ञापितम् । चातुर्मास्यमध्यपर्वणोः 'द्वयोः प्रणयन्तीति वाक्येन चोदकप्राप्तप्रणयनविलक्षणाग्निप्रणयनस्येव 'द्वा सुपर्णेत्युपक्रम्य मध्ये 'अनश्नन्नन्यः 'अन्यमीशमित्याद्यम्यस्य 'निरञ्जनः परमं साम्यमुपैत्युपसंहारवाक्येनैव प्रत्यक्षादिप्रमाणप्राप्तव्यावहारिकभेदविलक्षणत्रिकालाबाध्यापूर्वभेदस्य प्राप्तेरिति तार्किकमतनिष्कर्षः । तदेतद्बौद्धा न सहन्ते । तथाहि—वित्तिवेद्ययोः सहोपलम्भात् विज्ञानव्यतिरेकेण वस्तु-

नोऽभावात् न परमात्मा विज्ञानाश्रयो न वा जगत्कर्ता किंतु सत्त्वेन प्रतिक्षणविनाशिनिरुपप्लवालयविज्ञानप्रवाह एकसकलप्रवृत्तिविज्ञानविषयकः परमात्मेति योगाचारमतमवतारयति—क्षणिक इति। द्वितीयक्षणविनाशीत्यर्थः। अर्थक्रियाकारित्वात्, चरमशब्दवदिति भावः। सर्वज्ञः प्रवृत्तिविज्ञानरूपयावदर्थविषयकनिरुपप्लवविज्ञानप्रवाहरूप इत्यर्थः। सर्वज्ञ इत्याश्रयतया निर्देशस्तु 'इह वने तिलका इतिवत्सन्तानसन्तानिनोर्भेदविवक्षयेति बोध्यम्। तथाच जीवो जगत्सर्वं दुःखरूपमित्यजानन्त्सोपप्लवो भवति, सर्वज्ञस्तु तथा जानन् संगद्वेषादिना रहितो निरुपप्लव इति नित्यमुक्त इति तन्मतनिष्कर्षः। तदेतत्पातञ्जला न सहन्ते। तथाहि—विज्ञानानित्यत्वकल्पने गौरवान्मानाभावाच्च, अप्रयोजकत्वेन सत्त्वहेतोः क्षणिकत्वासाधकत्वात् सर्वस्यैव विज्ञानात्मत्वे चैत्रमैत्रावित्यादिसमूहालम्बने चैत्रमैत्रादीनामैक्यापत्तेः। विज्ञानव्यतिरेकेण बाह्यवस्तुनोऽप्यावश्यकत्वाच्च। तस्मात्साक्षित्वरूपोपष्टम्भकत्वमात्रेण जगतः कर्ता क्लेशादिभिरसंसृष्टो नित्यविज्ञानस्वरूप एव परमात्मा 'विज्ञानमानन्दं ब्रह्मेति श्रुतेरिति पातञ्जलमतमवतारयति—क्लेशेति। क्लेशाः अविद्यास्मितारागद्वेषाभिनिवेशाः कर्म धर्माधर्मौ विपाकः फलं सुखदुःखादि आशयो वासना एतैरपरामृष्टः कालत्रयेऽप्यसंसृष्टः पुरुषविशेषः नित्येश्वरः नित्यज्ञानस्वरूपः कालत्रयाबाधितज्ञानस्वरूपः। कथं तर्हि सर्वज्ञत्वं तत्राह—प्रधानेति। प्रधानं चांशश्च प्रधानांशौ तयोः सत्त्वगुणः प्रधानांशसत्त्वगुणः। सर्वस्य त्रिगुणात्मकत्वात् अवयवभूतः तत्र प्रतिफलिततया प्रतिबिम्बिततया। तथाच प्रतिबिम्बद्वारकसंबन्धमादाय तस्य सर्वज्ञत्वम्। जीवस्य तु प्रमाणवृत्तिसापेक्षप्रतिबिम्बद्वारकः संबन्ध इति न सार्वज्ञमिति भावः। अत एव तस्माद्भेदमाह संसारीति। जीवाद्भिन्न इत्यर्थः। येऽपि केचन व्यासादयः सर्वज्ञास्तेऽप्युपासनाबलादीश्वरा अतो जीवा एवेति नेश्वरेऽन्तर्भूता इति पातञ्जलमतनिष्कर्षः। तदेतदुपनिषत्प्रतिपाद्याद्वितीयात्मतत्वविरोधान्नातिरमणीयम्। तथाहि जीवपरमात्मनोर्भेदे मानाभावात्। नच नाहमीश्वर इत्यादिप्रत्यक्षं तत्र मानम्। अहं गौर इत्यादिवद्भ्रमत्वात्। नापि जीवो ब्रह्मणो भिन्नः, असर्वज्ञत्वादित्याद्यनुमानं, व्यावहारिकभेदेन सिद्धसाधनात्। उपमानं त्वप्रसक्तमेव। नापि द्वासुपर्णेतिश्रुतिः, अपूर्वार्थत्वाभावात्। नच निरुक्तरीत्या तथा, तत्वमस्यादिवाक्यविरोधेन विलक्षणभेदपरत्वायोगात्। नच किं विनिगमकमिति वाच्यम्। निरवकाशत्वस्यैव विनिगमकत्वात्। नाप्यर्थापत्तिः। वास्तवभेदं विनाऽनुपपत्तेरभावादित्यन्यत्र विस्तरः। तस्माच्छुद्धपरमात्मैव ब्रह्म तच्च स्वशक्तितारतम्याज्जीवेशादिव्यपदेशभाग्भवति, न तत्र भेदगन्धोऽपीति सकलमतमूर्धन्यमद्वैतमतमवतारयति—अद्वितीयेति। अद्वितीयः सजातीयविजातीयस्वगतभेदशून्यः 'एकमेवाद्वितीयमितिश्रुतेः। परमानन्द एव नित्यानन्द एव 'नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुतेः। नच विजानातीति व्युत्पत्त्या विज्ञानमस्येति व्युत्पत्त्या वा विज्ञानमिति कर्तरिल्युडङ्गीकारेण नित्यज्ञानवत्त्वलाभः; एवमानन्दोऽस्यास्तीति मत्वर्थीयाच्प्रत्ययेनानन्दवत्त्वलाभश्च; अन्यथा नपुंसकलिङ्गानापत्तेरिति वाच्यम्। लिङ्गव्यत्ययस्य छान्दसत्वेनाप्युपपत्तेः, गुणगुणिभावसम्पादकसमवायादिसम्बन्धस्य प्रथम-

श्लोकव्याख्याने विस्तरेण निराकृतत्वाच्च । 'आनन्दो ब्रह्मेति व्यजानात्' 'केवलो निर्गुणश्च चिद्रूप एवाविकारो ह्युपलब्धा नित्यः शुद्धो बुद्धः परः प्रत्यगेकरस इत्यादि श्रुतिविरोधापत्तेः। वास्तवमिति उपाधिपरित्यागेन प्राप्यं रूपं, ब्रह्मैव सन्ब्रह्माप्येतीत्यादिश्रुतेः । माययेति मायाकृतसर्वज्ञत्वादिविशिष्टं 'तदेतत्स्वप्नं मायामात्रमिति श्रुतेः । जगदुपादानं रजताद्यात्मना शुक्त्यादिवज्जगदात्मना विवर्तमानं 'यतो वा इमानि भूतानीतिश्रुतेः। निमित्तं च तदनुकूलेक्षणादिमत्त्वेन निमित्तकारणं च 'एतद्धीदं सर्वं साधयतीति श्रुतेः । औपनिषदाः उपनिषत्प्रमाणमात्रप्रधाना वेदान्तिनः ।

(संदीपनम्)

न सांख्यमित्यादिश्लोकमवतारयितुं तन्निरस्याशङ्कामाह—**ननु** नेति । अथ ममाभिमतमेव त्वयोदाहृतं, न तु मदनभिमतं जीवब्रह्मणोरनैक्यप्रतिपादकं तत्राह—**जगत्कारणं** च प्रधानमिति । एवं च न चेतनाचेतनयोरैक्यमिति सुचिरं विभाव्य सन्तोष्टव्यमायुष्मन् । त्वदनभिमतमुक्तमनुक्तं चेति भावः । एवमैक्याभावे पाशुपतमतमुदाहरति—**पशुपति**रेवेति । नहि क्वचिच्छ्रुतमुपपद्यते वा उपास्योपासकयोरैक्येन उपासनेति भावः । ऐक्याभावसाधकत्वेन मतान्तरमाह—**भगवा**नित्यादिना । ननु भवत्वेवं तथापि जीवब्रह्मणोरैक्याभावे किं साधकमत आह—**तेन कार्यत्वा**दिति । **नित्य**इति ईश्वर-इत्यादि । परिणामिनित्यस्य शुद्धजीवेन सहात्यन्ताभेदाभावादस्मिन्मतेऽपि जीवब्रह्मणोर्नात्यन्ताभेदसिद्धिरिति भावः । **नास्ती**ति एवं च केन सहाभेदः, नहि शशविषाणेन सह कस्यचिदभेद इतिकश्चिद्वदतीति भावः । आदिपदग्राह्यमाह—**अस्ती**ति । अत्यन्तभिन्नयोरभेदे गजगगनयोरप्यभेदः स्यादतो न जीवब्रह्मणोरैक्यमिति भावः । **क्षणि**केति । नहि क्षणिककूटस्थयोरभेदः स्यादतो न जीवब्रह्मणोरैक्यमिति भावः । **क्लेशकर्मे**ति । नहि वास्तवसर्वज्ञवास्तवाज्ञयोरभेद इति भावः । ननु भवन्मते जीवब्रह्मणोरैक्यं कथं? सर्वज्ञत्वकिञ्चिन्मात्रज्ञत्वादिरूपवैधर्म्यादत आह—**मायये**ति । एवं च सर्वज्ञत्वकिञ्चिज्ज्ञत्वादीनां मायिकत्वेनावास्तवत्वमित्यर्थः ।

एवं वादिविप्रतिपत्तिभिः संदिग्धे तत्पदार्थे औपनिषदपक्षपरिशेषेण तन्निर्णयायाह भगवान्—

**न सांख्यं न शैवं न तत्पाञ्चरात्रं**
**न जैनं न मीमांसकादेर्मतं वा ।**
**विशिष्टानुभूत्या विशुद्धात्मकत्वात्**
**तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ४ ॥**

आदिशब्देनानुक्तानां संग्रहः । न तावदचेतनं जगदुपादानं 'तदैक्षत बहु स्यां प्रजायेयेतीक्षणपूर्वकसृष्टिश्रवणात्, 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति च जीवात्मव्यपदेशात्, 'यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवतीति चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, प्रधानज्ञानेन च तदप्रकृतिकानां पुरुषाणां ज्ञातुमशक्यत्वात्, 'ऐतदात्म्यमिदꣳसर्वं तत्सत्यं स आत्मा तत्त्वमसीति च तदभेदस्य नवकृत्व उपदेशात्, 'तस्माद्वा एत-

स्मादात्मान आकाशः संभूत इति श्रुत्यन्तरात्, अचेतनस्य जगत्कारणत्वे विचित्ररचनानुपपत्तेः, प्रधानमहदादेरप्रामाणिकत्वाच्च न सांख्यमतं साधु। एवं पाशुपतं पाञ्चरात्रिकं जैनं त्रैदण्डं च मतं श्रुतियुक्तिबाधितत्वादयुक्तम्। न च विधिशेषत्वाच्छ्रुतिर्न ब्रह्म प्रतिपादयतीति मीमांसकमतं युक्तमसिद्ध-त्वाद्विधिशेषत्वस्य। न चार्थवादाधिकरणन्यायाद्विधिशेषत्वं, वैषम्यात्। स्वतः प्रयोजनवदर्थाप्रतिपादकानां 'वायुर्वै क्षेपिष्ठा देवतेत्यादीनां स्वाध्याय-विधिग्रहणान्यथानुपपत्त्या प्रयोजनवदर्थपरत्वे कल्पनीये शब्दभावनेति-कर्तव्यतांशसाकाङ्क्षस्य विधेः संप्रदानभूतदेवतादिस्तुतिद्वारेण तदंशपूर-कत्वान्नष्टाश्वदग्धरथन्यायेन तदुभयैकवाक्यतेत्यर्थवादाधिकरणे निर्णीयते। वेदान्तवाक्यजन्यज्ञानाच्च साक्षादेव परमानन्दप्राप्तिर्निःशेषदुःखनिवृत्तिश्च पुरुषार्थौ लभ्यत इति निराकाङ्क्षत्वान्नान्यशेषत्वसंभावना, प्रत्युत विधय एवान्तःकरणशुद्धिद्वारा तच्छेषतां भजन्त इति। तस्मात्प्रयोजनवदबाधि-ताज्ञातज्ञापकत्वेन वेदान्तानां स्वत एव प्रामाण्यादस्त्येव ब्रह्मेति न मीमां-सकमतसिद्धिः। तार्किकादीनां च मतं 'तत्त्वमस्यहं ब्रह्मास्मीति, अय-मात्मा ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिबाधितम्, एकमेवाद्वितीयं, नेह नानास्ति किंचनेत्यादिबाधितं च। 'एको देवः सर्वभूतेषु गूढः इति भिन्नाभिन्नत्वं, क्षणिकत्वं च 'आकाशवत्सर्वगतश्च नित्य इत्यादिश्रुतिबाधि-तम्। अत्र च सर्वेषां मतस्याऽसत्त्वे प्रतिज्ञाते, विशुद्धात्मकत्वादिति हेतुः। निर्विकल्पकाद्वितीयचैतन्यरूपत्वादित्यर्थः। अत्र हेतुर्विशिष्टानुभूत्येति, विशिष्टा सविकल्पकानुभूतिभ्यो व्यावृत्ता या 'तत्त्वमस्यादिवाक्यजन्याऽ-खण्डानुभूतिस्तयेत्यर्थः। तेन सर्वव्यापकमद्वितीयं परमानन्दबोधरूपं च ब्रह्मेति सिद्धम्॥ ४॥

(लघुव्याख्या.)

संदिग्धे जगत्कारणं प्रधानं ब्रह्म वा, ब्रह्म निर्गुणं सगुणं वा, निर्गुणमपि भिन्नमभिन्नं वेत्यादि विशेषतः सन्दिग्धे परिशेषेण इतरमतनिरासेनौपनिषदपक्षस्य निर्दुष्टत्वव्यव-स्थापनेन तन्निर्णयाय तत्पदार्थनिश्चयाय श्लोकतस्तन्निरासमाह—न तावदिति। अचेतनं जडं साङ्ख्यपातञ्जलाभ्यां परिकल्पितं स्वतन्त्रं साम्यावस्थोपलक्षितं गुणत्रयात्मकं जगदुपादानं जग-त्परिणामिकारणं, तत्र हेतुमाह—तदैक्षतेति। तद्ब्रह्म ऐक्षत ईक्षणं कृतवत् 'बहु स्यां प्रजायेय, प्रजार्थं नानाविधः स्यामितीक्षणपूर्वकसृष्टिश्रवणात् ईक्षणकर्तृकर्तृकसृष्टिश्रुतेः। ईक्षणं कूलं पिपतिषतीत्यादाविव प्रकृते 'तत्तेज ऐक्षत इत्यादाविव च गौणं भविष्यतीत्यतः अनेनेति। अहमितिधीगोचरेण जीवेनात्मना कर्तृभोक्तृस्वरूपात्मना प्रविश्य तत्राविर्भूय नामेति इदं नामेदं रूपमिति व्यक्तीकरोमि। जीवेनात्मनेति जीवाभेदकथनात् कारणस्येति शेषः। तथाच न गौणमीक्षणं तत्कर्तुश्चेतनस्य व्यक्तत्वादिति भावः। ननु जीवेनात्मनेति तृतीया सहार्थिका, अथवात्मशब्दो ममात्मा भद्रसेन इतिवच्चेतनाचेतनवाची भविष्यति, ज्योतिःशब्दस्य क्रतु-

ज्वलनवाचित्ववत्तत्राह—यस्मिन्निति। यस्मिन् पदार्थे विशेषेण ज्ञाते सर्वमिदं परिदृश्यमानं तन्मात्रसत्ताकमिति विशेषतो ज्ञातं भवति तत्कारणमिति। कारणविज्ञानेन सर्वविषयकज्ञानप्रतिज्ञानादित्यर्थः। स्यात्कारणविज्ञानेन कार्यस्य विज्ञानं प्रतिज्ञातम्। ब्रह्मसिद्धिस्तु कुतस्तत्राह—प्रधानेति। तदप्रकृतिकानां प्रधानाकारणकानां चेतनात्मकप्रतिबिम्बानामचेतनकार्यत्वायोगादिति भावः। अशक्यत्वादिति। तथाच प्रधानकारणतापक्षे 'सर्वमिदं विज्ञातं भवतीति श्रुतिविरोधप्रसङ्ग इति भावः। सर्वविज्ञानप्रतिज्ञाया ब्रह्मपरतां द्रढयिष्यन्नाह—ऐतदात्म्यमिति। एतदात्मस्वरूपं कारणात्मकमिदं सर्वं तत्कारणं सत्यं त्रिकालाबाध्यं स कारणपदार्थ एव आत्मा जगत्फलभोक्ता। स एव यदि भोक्ता तर्हि जीवस्य का गतिस्तत्राह—तत्त्वमसीति। त्वं जीवस्तद्ब्रह्म कारणात्मना प्रतिपादितमित्यर्थः। असिपदं त्वत्र सामानाधिकरण्यमर्यादया प्राप्तस्य दार्ढ्यायेति न व्यर्थमिति दिक्। न केवलं छान्दोग्यश्रुतावेव ब्रह्म जगत्कारणत्वेन प्रतिपाद्यते किंतु तैत्तिरीयेऽपीत्याह—तस्माद्वेति। वै निश्चयेन। तस्मात्परमात्मनः एतस्माज्जीवात् आत्मनः अनात्मनामधिष्ठानभूतात् जीवपरमात्मनोरभेदरूपाखण्डार्थात् सच्चिदानन्दादिति यावत्। आकाशः शब्दगुणः संभूतः उत्पन्नः। वायुः शब्दस्पर्शगुणः तेजः शब्दस्पर्शरूपगुणम्। आपः शब्दस्पर्शरूपरसवत्यः पृथिवी शब्दस्पर्शरूपरसगन्धवती। श्रुतिविरोधं प्रदर्श्य तर्कविरोधमाह—अचेतनस्येति। जडस्य प्रधानस्येत्यर्थः। विचित्रेति। गिरिनदीसमुद्रादिसन्निवेशकरणस्यानुपपत्तेः। अचेतनस्य चेतनाधिष्ठानं विना स्वतः प्रवृत्त्ययोगादिति भावः। मास्तु निरीश्वरसाङ्ख्यम्, सेश्वरसांख्यं तु स्यादेव प्रवर्तकचेतनाङ्गीकारादित्यत आह—प्रधानेति। उभयसाङ्ख्योक्तप्रधानमहदादेरित्यर्थः। अप्रामाणिकत्वात् श्रुतिस्मृतिप्रमाणागोचरत्वात् न साङ्ख्यमतं साधु। सर्वस्यापि कार्यस्य सुखदुःखाद्यात्मकतया प्रतीतेः सुखादीनां च सत्त्वाद्यात्मकत्वात्सत्त्वादिगुणत्रयकार्यमेव सर्वमिति मतं न साधीयः। पृथिव्यादीनामान्तरसुखाद्यात्मकत्वायोगात्कल्पनाबीजाभावादिति भावः। 'अजामेकामित्यादिश्रुतयस्तु परमात्माधिष्ठिताऽनिर्वचनीयमायापरा इति न क्वापि विरोध इति दिक्। एवमित्यादि पाशुपतं मतं तत्त्वमस्यादिश्रुत्या, औपाधिकभेदेनोपास्योपासकभावसिद्धेर्वास्तवभेदकल्पनं व्यर्थमिति युक्त्या च बाधितम्। पाञ्चरात्रमतेऽपि जीवजन्यत्वोक्तिरजो नित्य इत्यादिश्रुत्या कृतहान्यकृताभ्यागमप्रसङ्गयुक्त्या च बाधिता। जैनत्रिदण्डिनोर्मतमपि कूटस्थमचलं ध्रुवम् 'एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमित्यादिश्रुत्या परिणामित्वे कृत्स्नतदेकदेशविकल्पादिप्रसङ्गयुक्त्या च बाधितमतोऽसम्यगेवेत्यर्थः। साङ्ख्यादिमतेषु श्रुतियुक्तिबाधितत्वोक्त्या मीमांसकमतेऽपि तदुक्तमेव तथापि तत्रान्यदाशङ्क्य निषेधति—नचेति। विधिशेषत्वात् विहितक्रियाकर्तृस्तुतिपरत्वात् श्रुतिः तत्त्वमस्यादिश्रुतिः न ब्रह्मगोचरप्रमां जनयति तत्र तात्पर्याभावादिति भावः। असिद्धत्वात् तत्त्वमस्यादिश्रुत्यवृत्तित्वात् विधिशेषत्वस्य विहितक्रियाकर्तृस्तुतिपरत्वस्य। नन्वनुष्ठानोपयोग्यर्थावबोधभाव्यक'स्वाध्यायो ध्येतव्य' इतिस्वाध्यायविधिविषयत्वान्यथानुपपत्त्या तत्त्वमसीत्यादिवाक्यानां 'वायुर्वै क्षेपिष्ठेत्याद्यर्थवादानामिव विध्यपेक्षित-

प्राशस्त्यपरत्वेनैव प्रामाण्यमित्यभिप्रायकार्थवादाधिकरणन्यायेन विधिशेषत्वमाशङ्क्य निषेधति—नचेति । अर्थवादाधिकरणन्यायात् 'यजेत स्वर्गकाम इत्यादिविधिर्विहितार्थे पुरुषं प्रवर्तयितुं प्राशस्त्यज्ञानमपेक्षते । प्राशस्त्यज्ञानं च सिद्धार्थबोधकार्थवादादिभ्य इति विधयोऽर्थवादसाकाङ्क्षा अर्थवादा अपि सिद्धमर्थं वदन्तः स्वाध्यायविध्यापादितप्रयोजनवत्त्वलाभाय विधिसाकाङ्क्षा इति विध्यर्थवादयोर्वाक्यैकवाक्यत्वमित्यर्थवादाधिकरणन्यायात् । वैषम्यमुपपादयति—स्वत इति । विध्येकवाक्यतां विना प्रयोजनेति पुरुषाभिलाषितस्वर्गादिसंसृष्टार्थप्रतिपादकानां स्वाध्याय इति 'स्वाधायोऽध्येतव्य' इति प्रयोजनवदर्थज्ञानमुद्दिश्य स्वाध्यायाध्ययनस्य विधायकं यद्वाक्यं तद्विषयत्वस्य प्रयोजनवदर्थपरत्वं विनानुपपत्तेरित्यर्थः । शब्देति । शब्दभावनाया इतिकर्तव्यतासाकाङ्क्षत्वात्तद्बोधकत्वेन तत्साकाङ्क्षस्य लिङ्लोडादिघटितयजेतेत्यादिवाक्यस्येत्यर्थः । पुरुषं प्रवर्तयन्ती प्रवृत्त्यनुकूलव्यापाररूपा शब्दनिष्ठा भावना विहितार्थे पुरुषस्य प्राशस्त्यज्ञानरूपां स्वस्येतिकर्तव्यतामाकाङ्क्षत इतिभावः । संप्रदानेति । त्यागकालोच्चार्यमाणचतुर्थ्यन्तपदार्थादेः प्राशस्त्यधीजननद्वारेणेत्यर्थः । तदंशेति । शब्दभावनायामुक्तधीरूपेतिकर्तव्यताया अन्वयबोधकत्वात् । नष्टाश्वेति । यथैकस्य दग्धरथस्य जीवद्भिरश्वैरन्यस्य विद्यमानरथस्याविद्यमानाश्वस्य संप्रयोग इति न्यायेन । तदुभयेति विध्यर्थवादयोः परस्पराकाङ्क्षितार्थबोधजनकता अर्थवादानां प्रयोजनवदर्थकत्वस्यावश्यकत्वाद्विधिवाक्यापेक्षितप्राशस्त्ये लक्षणाङ्गीकारात्प्रयोजनवद्देवताप्राशस्त्यद्वारा कर्मप्राशस्त्यबोधकत्वं प्रशस्तदेवताकत्वात्प्रशस्तं कर्मेति बोधोत्पत्त्या तादृशबोधस्य शब्दभावनायामन्वयबोधकत्वमिति समुदायार्थः । स्वतः प्रयोजनकत्वाभावमेव विध्यैकवाक्यत्वे बीजं वदतो मीमांसकस्य स्वतः प्रयोजनपराणामप्युपनिषदां विध्येकवाक्यत्वकल्पनमान्ध्यप्रयुक्तमिति ज्ञापयन्नतिवैषम्यमाह—वेदान्तेति । तत्त्वमस्यादिमहावाक्यजन्याखण्डार्थबोधाच्चेत्यर्थः । साक्षात् अदृष्टमद्वारीकृत्य । परमेति परिपूर्णानावृतेत्यर्थः । आवरणनाशे स्वप्रकाशानन्दात्मनावस्थितिरिति यावत् । निःशेषेति । समूलेत्यर्थः । दुःखनिदाननिवृत्तितयैवावरणनाशस्य साक्षात्कारफलत्वात् दुःखाभावोऽपि स्वतः पुरुषार्थ एवेति भावः । निराकाङ्क्षत्वात् विधिवाक्याकाङ्क्षारहितत्वात् । नान्येति । न विहितक्रियास्तुतिपरत्वसंभावनापि । अपिशब्दादसङ्गत्वादिप्रतिपादकवाक्यानां कर्मणि प्रवृत्तिप्रतिबन्धकानां विधिशेषत्वसमर्थनं स्वाज्ञानख्यापनायैवेति ध्वनितम् । नोत्तरकाण्डस्य पूर्वकाण्डैकवाक्यत्वेन प्रामाण्यं किंतु प्रथमभूमिप्रतिपादकस्य कर्मकाण्डस्यैवोत्तरभूमिप्रतिपादकोपनिषद्वाक्यैकवाक्यत्वेन प्रामाण्यमित्यभिप्रेत्याह—प्रत्युतेति । विधयः विधिवाक्यानि । अन्तःकरणशुद्धिद्वारा ज्ञानप्रतिबन्धकपापनिवृत्तिद्वारा तच्छेषतां वेदान्तवाक्यगौणार्थतां 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति श्रुतेरिति भावः । मींमांसकमतमुपसंहरति—तस्मादिति । अर्थवादाधिकरणन्यायविषयत्वनिरासात् विपरीताङ्गाङ्गिभावस्यैव लाभाच्चेत्यर्थः । प्रयोजनेति । निरुक्तप्रयोजनवत्कालत्रयाबाधितं प्रमाणान्तरानधिगतं यद्ब्रह्म तद्विषयकप्रमाजनकत्वेन स्वत एव विध्येकवाक्यतां विनैव प्रामाण्यात् निश्चितप्रामाण्यात् ।

तार्किकादीनामित्यादिपदाद्वैशेषिकबौद्धादिपरिग्रहः, तदुच्छिष्टभुङ्माध्वादिपरिग्रहश्च । 'सत्यं ज्ञानमनन्तं ब्रह्मेत्यादीत्यादिना तत्त्वमेव, त्वमेव तत्, त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः, इत्यादिवाक्यपरिग्रहः । अनेन जीवेश्वरभेदनिरासः । उपासीतेतिपदकल्पनाविरोध्यसिपदादिघटितत्वात् । किंच नेत्यादीत्यादिना अथातो नेति नेत्यादिश्रुतिपरिग्रहः । अनेन भूतभौतिकादेः सत्यत्वनिरासः । स्वाधिकरणवृत्त्यभावप्रतियोगित्वबोधनात् । दुग्धजलयोरिव भेदाभेदावेव जगज्जीवपरमात्मनाम्, अविभक्तं च भूतेषु विभक्तमिव च स्थितमित्यादिवाक्यैरिति त्रैदण्डमतं निराकरोति—एक इति । शेषभागः 'सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेति श्रुत्या बाधितं भिन्नाभिन्नत्वमित्यन्वयः । श्रुत्यर्थस्तु—दीव्यतीति देवः स्वप्रकाशः । एतेन देहादीनामात्मत्वं निराकृतम् । तेषामस्वप्रकाशत्वात् । स्वप्रकाशेऽपि प्रतिदेहं भिन्न इति साङ्ख्यमतनिरासायाह—एक इति सजातीयभेदरहित इत्यर्थः । नन्वेकस्मिन् देह एक एवास्ति तत्राह—सर्वेति । सर्वशरीरेष्वेक एवेत्यर्थः । ननु तर्हि पादे मे दुःखं शिरसि मे दुःखमितिवत् चैत्रे मे सुखं मैत्रे मे दुःखमिति कुतो न भासते तत्राह—गूढ इति । अविद्यावृत इत्यर्थः । नन्विहैवास्मि सदने जानान इति प्रतीत्या प्राप्तपरिच्छेदभावस्य कथं सर्वभूतेषु स्थितिस्तत्राह—सर्वव्यापीति । तादात्म्येन स्वविवर्तानुस्यूत इत्यर्थः । ननु सर्वव्यापित्वे भेद एव प्राप्तः । व्यापकताप्रयोजकोपादानोपादेयभावस्य भेदगर्भितत्वात्तत्राह—सर्वभूतेति । सर्वभूतानां सत्ताप्रदात्मेत्यर्थः । तथाच जगतः स्वतः सत्ताकत्वाभावेन व्यापित्वादेरपि प्रतीतिमात्रशरीरत्वान्न तन्निबन्धनो भेदो वास्तव इति भावः । कर्माध्यक्षः कर्मप्रवर्तक इत्यर्थः । सर्वभूताधिवासः सकलप्रपञ्चाधिष्ठानं साक्षी सर्वावभासकः चेता स्वप्रकाशचिद्रूपः केवलः निर्धर्मकः निर्गुणः स्वरूपातिरिक्तगुणशून्यः । तथाच शुक्तिव्यतिरेकेण रजतादेरिव सर्वाधिष्ठानव्यतिरेकेण जगतोऽसत्त्वान्न तदभिन्नाभिन्नत्वमात्मनो युक्तमिति भावः । क्षणिकत्वं क्षणमात्रस्थायिज्ञानस्वरूपत्वम् । ब्रह्मण इति शेषः । इत्यादिना ' नित्यो नित्यानामिति श्रुतिपरिग्रहः । अत्र च श्लोके सर्वेषां मतस्य साङ्ख्यादीनां मतस्य । असत्त्वे असमीचीनत्वे । अखण्डानुभूतिः संसर्गागोचरधीः । श्लोकार्थमुपसंहरति— तेनेति । उदाहृतश्रुतियुक्तिभिर्वादिविप्रतिपत्तिनिरासेनेत्यर्थः । सवव्यापकत्वोपलक्षितम् अद्वितीयं द्वितीयाभावोपलक्षितं परमानन्दबोधरूपं नित्यानन्दचिद्रूपं चकारात्सद्रूपम् । अखण्डार्थोपपत्तिरस्वस्मत्कृतमहद्व्याख्यानेऽनुसन्धेया ॥ ४ ॥

## ( संदीपनम् )

उक्तमतदूषणाय चतुर्थश्लोकमवतारयति—**एवं वादीति** । क्रमप्राप्तं सांख्यमतं प्रथमतो दूषयति—**न तावदचेतनमिति** । छान्दोग्यवाक्येन समाधत्ते—**तदैक्षतेति** । पुनः छान्दोग्यवाक्येन दूषणमाह—**अनेनेति** । जीवेनात्मनेति सामानाधिकरण्याज्जीवात्मलाभादचेतनप्रधानव्युदास इति भावः । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीत्यादिना यदेकविज्ञानेन सर्वविज्ञानमुक्तं मुण्डके तद्विरुद्धं भवति प्रधानोपादानकत्व इत्याह—**यस्मिन्नित्यादिना** । विरोधं प्रकटयति **प्रधा-**

नेति। छान्दोग्यवाक्यमाह—ऐतदात्म्यमिति। तैत्तिरीयकवाक्यमुदाहरति—तस्माद्वेति। युक्तिमाह—अचेतनस्येति। सांख्यमतदूषणमुपसंहरति—प्रधानेति। अप्रामाणिकत्वादिति। प्रमाणं वेदस्तदवोधितत्वादित्यर्थः। मतत्रयमेकदूषणेन दूषयितुमाह—एवमिति। श्रुतिरत्र 'तत्वमस्यहं ब्रह्मास्मि, तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते, नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीत्यादिका, युक्तिश्च लाघवादभिन्ननिमित्तोपादानकत्ववच्चैतन्यैक्ये सिद्धे तस्य चौपाधिकभेदेनैव व्यवस्थोपपत्तौ न वास्तवभेदकल्पनं, कूटस्थचैतन्यस्य मायां विना जगत्कारणत्वानुपपत्तिवज्जीवस्यापि कर्तृत्वादेः सत्यत्वेऽनिर्मोक्षप्रसङ्ग इत्यादिका, भिन्नाभिन्न इति पक्षे च विरुद्धयोर्भेदतदभावयोरेकत्रासत्त्वात्, एतदन्ययोर्भेदाभेदयोरङ्गीकारे परिभाषामात्रत्वाच्चेत्यनुसंधेयम्। मीमांसकमतमनूद्य दूषयति—न च विधीत्यादिना। तर्ह्यर्थवादाधिकरणविरोध इत्याशङ्क्य परिहरति। नचेत्यादिना। 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इत्यत्र कार्यपरवाक्यानां सप्रयोजनानामेव प्रामाण्यं तदितरेषां निष्प्रयोजनानामर्थवादादीनामप्रामाण्यमित्याशङ्क्य गुणवादस्त्वित्यादिना विधिस्तावकतया प्रयोजनसाकाङ्क्षाणामर्थवादादीनां प्रामाण्यमित्यर्थवादाधिकरणसिद्धमतस्तद्विरोध इत्यर्थः। तत्र प्रयोजनविरहिणामप्रामाण्यप्रतिपादनेऽपि नात्र तथा, परमपुरुषार्थप्राप्तिसाधनत्वादात्मज्ञानस्येत्याह—वैषम्यादित्यादिना। न केवलमनन्यशेषता किन्तु वैपरीत्यमपीत्याह—प्रत्युतेति। तार्किकानां चेति। आदिपदात्पूर्वमनुक्तमपि वैशेषिकमतमुक्तं च पातञ्जलमतं ग्राह्यं, पातञ्जलमतस्यापि एता उक्ताः श्रुतयो वाधिकाः। तन्मते जीवेश्वरजगतां सत्यत्वादिति, तत्त्वमसीति छान्दोग्यस्थमहं ब्रह्मास्मीति बृहदारण्यकस्थमयमात्मा ब्रह्मेति च, सत्यं ज्ञानमिति तैत्तिरीयकस्थम्। जैनत्रिदण्डिनोर्मतं दूषयति—एकमिति। इदं वाक्यं छान्दोग्यस्थं, नेहनानेतिबृहदारण्यकस्थं, मनसानुद्रष्टव्यमित्यादि। सौगतमतमपाकरोति—क्षणिकत्वं चेति। आदिपदान्नित्यं विज्ञानमानन्दं ब्रह्मेत्यादिकं ग्राह्यम्। ज्ञानस्य क्षणिकत्वकल्पनेऽनन्तकोटितद्ध्वंसादिकल्पनमपि वाधकम्। श्रुतिप्रामाण्यं च अपौरुषेयत्वेन दोषवत्पुरुषाप्रणीतत्वादास्तिकनास्तिकसाधारण्यतया साधितमित्यवधेयम्। विशिष्टशब्दस्य व्यावृत्त्यर्थकत्वाभिप्रायेणार्थमाह—विशिष्टेति ॥ ४ ॥ इति चतुर्थश्लोकः ॥

**ननु 'य एषोऽणिमा, 'अणोरणीयानिति च ब्रह्मणोऽणुत्वश्रुतेः, 'अङ्गुष्ठमात्रः पुरुषः, आराग्रमात्रो ह्यवरोऽपि दृष्टः, इत्यादिश्रुतिप्रतिपादिताणुजीवाभिन्नत्वाच्च न ब्रह्मणः सर्वव्यापकत्वमित्याशङ्क्य 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' तदेतद्ब्रह्मापूर्वमनपरमनन्तरमवाह्यमित्याद्याः श्रुतयो निर्विशेषमेव ब्रह्म प्रतिपादयन्तीति पूर्वोक्तमेव द्रढयन्नाह—**

( लघुव्याख्या. )

पञ्चमश्लोकमवतारयति—नन्वित्यादिना। अणिमा अत्यणुः, श्रुत्यन्तरं 'अणोः परमाणोः अणीयान् अणुतमः, अङ्गुष्ठ इति स्पष्टम्। आरा लोहशलाका। अवरोऽपि जीवोऽपि। अपिशब्देनान्तःकरणसमुच्चयः। ब्रह्मैवेदमिति। इदं नामरूपात्मकं पुरस्तात्पुरतः प्रसृतं भासमानं अमृतं सच्चिदानन्दात्मकं ब्रह्मैवेत्यर्थः। एवमग्रेऽपि। अपूर्वं कारणरहितं अनपरं कार्यरहितं अनन्तरं भेदकधर्मशून्यं अबाह्यं कालादिरूपोपाधिशून्यम्, अपरिच्छिन्नमिति यावत्।

(संदीपनम्)

पञ्चमश्लोकमवतारयति—नन्वित्यादिना। स एष इति बृहदारण्यकस्था, अणोरणीयानिति तु श्वेताश्वतरतृतीयाध्यायस्थं, कठवल्लीप्रथमाध्यायस्थं च। ब्रह्मणोऽणुत्वप्रतिपादिकां श्रुतिमुदाहृत्य जीवाणुत्वप्रतिपादिकां श्रुतिमाह—अङ्गुष्ठमात्र इति। इदं च वाक्यं श्वेताश्वतरस्थं कठवल्लीस्थं च।

न चोर्ध्वं न चाधो न चान्तर्न बाह्यं
न मध्यं न तिर्यङ् न पूर्वा परा दिक्।
वियद्व्यापकत्वादखण्डैकरूप-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ५ ॥

वियद्व्यापकत्वात् 'आकाशवत्सर्वगतश्च नित्य इति श्रुतेः, वियतो व्यापकत्वादिति वा 'ज्यायानाकाशात्, महतो महीयान्, इति श्रुतेः, जीवस्यापि सकलदेहव्यापिचैतन्योपलब्ध्या महत्त्वेऽपि, उपाधिधर्माध्यासेनाराग्रमात्रत्वाभिधानात्। 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः, इतिश्रुतेः। ब्रह्मणश्च दुर्लक्ष्यत्वाभिप्रायेणाणुत्वव्यपदेशात्। शेषमतिरोहितार्थम् ॥ ५ ॥

(लघुव्याख्या.)

नचोर्ध्वमित्यादिकस्य येन संबन्धनोर्ध्वादिकं प्रसक्तं तेन नास्तीत्यर्थः। वियद्व्यापकत्वात् यथा संयोगेन वियद्व्यापकं तथात्मापि तादात्म्येन व्यापक इत्यर्थः। सर्वगतश्चेत्यत्र चकारोऽनुक्तसमुच्चायकः। यस्मादाकाशवत्सर्वगतः सर्वदोषातीतश्च परमात्मा, अत एकोऽहमिति भावः। आकाशस्य सिद्धान्ते आपेक्षिकव्यापकत्वात् तद्वद्ब्रह्मणोऽप्यव्यापकत्वे वस्तुतोऽनित्यत्वमपि स्यादित्यतोऽर्थाऽन्तरमाह—वियत इति। अत्र हेतुमाह—ज्यायानिति। सकलेति। पादे मे सुखं शिरसि मे वेदनेति युगपन्नानावयवावच्छेदेन सुखदुःखावभासकचैतन्यानुभवेनेत्यर्थः। उपाधीति। मनोनिष्ठाराग्रमात्रत्वाध्यासेनेत्यर्थः। मनसः सङ्कोचविकासशीलत्वात् कदाचिन्मनसः आराग्रमात्रत्वसंपत्त्या तदुपाधिकस्यात्मनोऽपि तदा तदस्तीति भावः। बुद्धेरिति। आत्मनो गुणेनावरोऽपि बुद्धेर्गुणेनाराग्रमात्रो दृष्ट इत्यन्वयः। अवरः न विद्यते वरो महान् यस्मादित्यपरिच्छिन्नः दुर्लक्ष्यतेति। लौकिकप्रमाणागोचरेत्यर्थः ॥ ५ ॥

(संदीपनम्)

वियद्व्यापकत्वादिति व्याकरोति—वियद्व्यापकत्वादिति। आराग्रमात्र इति च श्वेताश्वतर पञ्चमाध्यायस्थम्। इदमेव साधयति—आकाशवदिति। नचाकाशदृष्टान्तेनात्मनः सर्वगतत्वादिसाधने आकाशस्यापि नित्यत्वमापतितं तथाच द्वैतापत्तिरिति वाच्यम्। यावत्कालस्थायित्वरूपनित्यत्वसत्त्वेऽपि कालनाशोत्तरं तस्य नाशेन द्वैतानापत्तेः। नचैवं ब्रह्मणोऽपि नाशः स्यादिति वाच्यम्। अविनाशी वा अरेऽयमात्मा इत्यादिश्रुतिविरोधादेकस्य वाक्यस्योभयपरत्वे च वाक्यभेदापत्तेः। वस्तुतस्तु नेदं वाक्यमाकाशनित्यत्वप्रतिपादकमपि तु तदर्थापत्तिः। सा चाद्वैतश्रु-

१ सूक्ष्मत्वा०।

त्याकाशोत्पत्तिबोधकश्रुत्या जन्यभावस्य जन्यस्य वा विनाशप्रतिपादकतर्केण च ज्यायानाकाशादित्यादिश्रुत्या च पराहतेति दिक् । यत्पदाध्याहारापरितोषमाशङ्कयाह—वियतो व्यापकत्वादिति नेति । बृहदारण्यकस्थं वाक्यमाह—ज्यायानिति । श्वेताश्वतरकठवल्लीस्थमाह—महत इति । मध्यमपरिमाणत्वे विनाशित्वापत्तिरतोऽङ्गुष्ठमात्रश्रुतिमुपेक्ष्याराग्रमात्रश्रुतिं तर्कविरोधेनोपचरिततया व्याकरोति—जीवस्यापीति । उपचारे बीजमाह—बुद्धेर्गुणेनेति । ब्रह्मणोऽणुत्वप्रतिपादिकाया एषोऽणिमा इत्यादिश्रुतेरविरोधमाह—ब्रह्मणश्चेति ॥ ५ ॥ इतिपञ्चमश्लोकः ।

स्यादेतत् । ब्रह्मणो जगदुपादानत्वादुपादानोपादेययोश्चाभेदाद्विचित्रजगदभिन्नत्वेन ब्रह्मणो दुःखरूपत्वान्न तदभिन्नत्वे जीवस्य परमपुरुषार्थप्राप्तिरित्याशङ्कय ब्रह्मणः स्वप्रकाशपरमानंदबोधरूपत्वान्निखिलजगद्भ्रमाधिष्ठानत्वेन च कारणत्वव्यपदेशात्, अध्यस्तेन च समं संबन्धाभावान्न तत्रानर्थलेशोऽप्यस्तीत्याह—

( लघुव्याख्या. )

षष्ठं पद्यमवतारयति—नन्वित्यादि । अभेदात् मृद्घटयोरिव तादात्म्याद्विचित्रेति सुखदुःखमोहमयप्रपञ्चाभेदेन । परमेति । निरतिशयसुखावाप्तिः । उपादानोपादेयभावेऽपि शुक्तिरजतादाविवाध्यासिकाभेदस्यैवाङ्गीकारेणाधिष्ठानस्य ब्रह्मणो गुणदोषाप्रसक्तेर्न ब्रह्माभिन्नजीवस्य पुरुषार्थहानिरित्यभिप्रेत्य समाधत्ते ब्रह्मण इत्यादि । कथं तर्हि कारणत्वोक्तिस्तत्राह—भ्रमेति भ्रमकारणीभूताज्ञानविषयत्वेन । तावता किं तत्राह—अध्यस्तेनेति । संबन्धाभावात् धर्मिसमसत्ताकसम्बन्धाभावात् अनर्थलेशोऽपि अध्यासकृतगुणदोषसंबन्धोऽपि ।

न शुक्लं न कृष्णं न रक्तं न पीतं
न कुब्जं न पीनं न ह्रस्वं न दीर्घम् ।
अरूपं तथा ज्योतिराकारकत्वात्
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ६ ॥

कुब्जमणु, पीनं महत् । तेनाणुमहद्ध्रस्वं दीर्घमिति चतुर्विधपरिमाणनिषेधाद्द्रव्यत्वप्रतिषेधः। रूप्यत इति रूपं प्रमेयम् । न प्रमेयमरूपम् । तेन सर्वेषामेव द्रव्यगुणकर्मादिपदार्थानां तत्तद्वाद्यभ्युपगतानां निषेधः । तथाच श्रुतिः-'अस्थूलमनण्वह्रस्वमदीर्घमलोहितमित्याद्या , 'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यदित्याद्या च सर्वानर्थशून्यं परमात्मस्वरूपं प्रतिपादयति । श्रौतस्याप्यर्थस्य न्यायेन निर्णयाय हेतुमाह—ज्योतिराकारकत्वादिति । स्वप्रकाशज्ञानरूपत्वेनाप्रमेयत्वात् । प्रमेयत्वे घटादिवज्जडत्वापत्तेः, 'एतदप्रमेयं ध्रुवमिति श्रुतेश्चेत्यर्थः ॥ ६ ॥

( लघुव्याख्या. )

महदादिवाचकशब्दपूर्ववर्तित्वेन कुब्जशब्दस्याणुवाचित्वमाह कुब्जमिति । रूपतादात्म्यस्य रूपाधारत्वस्य च, न शुक्लमित्यादिनैव निषेधसंभवादाकाङ्क्षिताद्वितीयत्वप्रतिपादनस्य युक्त-

---

१ ननु ब्र० ।

त्वाचाह रूप्यत इति। रूप्यते साक्षिणा भास्यते प्रमेयं चिद्भास्यं, द्रव्यादेरिव तद्विशिष्ट-स्यापि प्रमेयत्वात्तद्भेदोक्त्या द्रव्यादिवैशिष्ट्यात्यन्ताभावोऽपि लभ्यत इत्याशयेनाह—तेनेति। निषेधः भेदात्यन्ताभावयोर्लाभः। तत्र श्रुतिं प्रमाणयति—अस्थूलमिति। स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्तीति पूर्वभागः। 'अस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसम-गन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चनेत्युत्तरभागः। श्रुत्यर्थस्तु स याज्ञवल्क्य उवाच हे गार्गि एतद्वै तदक्षरं यत्त्वं पृष्टवत्यसि कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेत्यादिना। अव्याकृतस्वरूपाकाशाधिष्ठानं तत् अव्याकृताधिष्ठानम् एतदक्षरं न क्षरति न क्षीयते वाऽक्षरं शुद्धं ब्रह्म ब्राह्मणाः ब्रह्मविदः अभिवदन्ति कथयन्ति तद्ब्रूहीत्युक्त आह—अस्थूलमित्यादि। न स्थूलं न विद्यते स्थूलं यस्मि-न्निति स्थूलभिन्नं स्थूलात्यन्ताभाववद्वेत्यर्थः। एवमग्रेऽपि बोध्यम्। अदीर्घमित्यनेन परिणा-मवतां सामान्यतो निषेधमुक्त्वा विशेषत आह—अलोहितमिति लोहितवत्त्वं पृथिवीतेजसोरिति तयोर्निषेधः। अस्नेहमित्यनेन जलात्मत्वनिषेधः। अच्छायमतम इत्यनेन तमसः अवायुरिति वायोः अनाकाशमित्याकाशस्य निषेधः। असङ्गमिति वासनारहितम्। कुतः भोगहेतोरभा-वादित्याह—अरसमित्यादि। न केवलं भोग्याभावादेव भोगवासनाया अभावः किंतु भोग-करणाभावादपीत्यभिप्रेत्याह अचक्षुष्कमिति। सङ्ग्रहेण निषेधमाह—न तदिति। तद्ब्रह्म किंचन किमपि नाश्नाति न भुंक्ते स्वव्यतिरिक्तस्य भोग्यस्याभावात्। अत एव कश्चन कोऽपि जनः तदक्षरं नाश्नाति न भुंक्ते। अत्र कारणेऽक्षरे सर्वस्यापि जगत ओतप्रोतस्याभावोक्त्या स्वाश्र-यनिष्ठात्यन्ताभावप्रतियोगिस्वरूपमिथ्यात्वज्ञापनेन मिथ्याभूतानात्मगुणदोषादिकमधिष्ठानभूतस्य ब्रह्मणो नास्तीति समर्थितम्। श्रुत्यन्तरमाह—अशब्दमिति। न विद्यते शब्दो यस्येत्यशब्दं शब्दादिमानेव व्येति ब्रह्म च शब्दादिरहितत्वान्न तथेत्याह—अव्ययमिति न व्येति न क्षीयते इत्यर्थः। अत एव नित्यं, यद्व्येति तदेवानित्यम् नायं तथेति भावः। इतश्च नित्यं अनाद्य-नन्तं न विद्यते आदिः कारणं यस्य तदनादि, न विद्यते अन्तः कार्यं यस्य तदनन्तं कार्य-कारणभावरहितम्। तस्मान्नित्यमिति भावः। महतः बुद्धेः परं विलक्षणं नित्यविज्ञानस्वरूपं ध्रुवं कूटस्थनित्यं नाकाशादिवदापेक्षिकं नित्यं तमेवंभूतं ब्रह्मात्मानं निचाय्य दृष्ट्वा मृत्यु-मुखात् अविद्याकामकर्मलक्षणात् प्रमुच्यते वियुज्यते सर्वानर्थशून्यं सर्वप्रपञ्चतत्कृतगुणदो-षरहितम्। स्वप्रकाशेति। स्वं स्वरूपं प्रकाशो यस्येति स्वपरसाधारणव्यवहारसाधनज्ञानरूपत्वे-नेत्यर्थः। षष्ठ्यर्थ उपकारकत्वम्। उपकारश्च प्रमातृभावापन्नस्य स्वस्य सर्वव्यवहारः प्रमातृभावेनोपकार्यस्य साक्षिरूपेणोपकारकत्वं स्वप्रकाशकत्वमिति निष्कर्षः। तथापि स्वव्य-वहारसिद्धिः कथं? स्वस्य स्वविषयत्वाभावादिति चेत्, शृणु। यथा परेषामालोके आलोकान्त-रसंयोगाभावेऽपि प्रतियोगितानुयोगितान्यतरसंबन्धेनालोकसंयोगवत्त्वादेवालोकघटादेः प्रत्यक्षं तथा यावद्विदेहकैवल्यं प्रतियोगितानुयोगितान्यतरसंबन्धेन साक्षितादात्म्यरूपविषयता-संबन्धवत्त्वात् साक्षिद्दश्योभयव्यवहारोपपत्तिरिति। अधिकं त्वस्मत्कृतमहद्व्याख्याने द्रष्टव्यम्।

अप्रमेयत्वात् चिद्विषयतावत्त्वाभावात्। प्रमेयत्वे साक्षिविषयतावत्त्वे जडत्वापत्तेः भासकचिद्भेदापत्तेः। तथात्वे जगदान्ध्यं प्रसज्येतेति भावः। अप्रमेयत्वं श्रुतिसिद्धमप्याह—एतदिति। अप्रमेयं, चकारो विदिताविदितात्पर इतिहोचुरित्यादिश्रुतिसमुच्चायकः॥ ६॥

( संदीपनम् )

षष्ठं श्लोकमवतारयति—नन्वित्यादिना। द्रव्यत्वं निषिध्य प्रमेयत्वं निषेधति—रूप्यत इति रूपमिति। अस्थूलमिति बृहदारण्यकस्थम्। अशब्दमिति तु कठवल्लीस्थम्। श्रौतेऽर्थे हेतुर्निरर्थकस्तत्राह—श्रौतस्येति। तर्कमाह—प्रमेयत्वेति। न केवलमयमर्थस्तर्कसिद्धः, किन्तु श्रौतोऽपीत्याह—एतदप्रमेयमिति। इदं च वाक्यं बृहदारण्यकस्थम्॥ ६॥ इति षष्ठः श्लोकः।

ननु कस्य ब्रह्मभाव उपदिश्यते ब्रह्मणोऽब्रह्मणो वा। नान्त्यः, तस्य जडत्वादसत्त्वाच्च। न प्रथमः उपदेशानर्थक्यात्, ब्रह्मभावस्य स्वतएव सिद्धत्वात्। जीवस्य स्वतो ब्रह्मभावेऽप्यविद्याव्यवधानं ज्ञानेन निवर्त्यत इति चेन्न। अविद्यानिवृत्तेरात्मभिन्नत्वे द्वैतापत्तेर्ब्रह्मणोऽसिद्धिप्रसङ्गाच्च। तदुक्तं वार्तिके—

अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते।
ब्रह्मार्थो दुर्लभस्तस्माद्द्वितीये सति वस्तुनि॥ इति।

अभिन्नत्वे चोपदेशानर्थक्यमित्युक्तम्। अत्र किं परमार्थतः फलाभावमभिप्रैषि किंवा प्रतीतितोऽपि? अत्राद्यमिष्टापत्त्या परिहरति—

**न शास्ता न शास्त्रं न शिष्यो न शिक्षा**
**न च त्वं न चाहं न चायं प्रपञ्चः।**
**स्वरूपावबोधो विकल्पासहिष्णु-**
**स्तदेकोऽवशिष्टः शिवः केवलोऽहम्॥ ७॥**

शास्ता उपदेशकर्ता, शास्त्रमुपदेशकरणं, शिष्यं उपदेशकर्म, शिक्षोपदेशक्रिया, त्वं श्रोता, अहं वक्ता, अयं सर्वप्रमाणसंनिधापितः, प्रपञ्चः देहेन्द्रियादिरनर्थः, परमार्थतो नास्तीत्यर्थः। द्वितीयं निराकरोति—स्वरूपेति। अयमर्थः—यद्यप्यविद्यानिवृत्तिरात्मानात्मावेत्यादिविकल्पेन किमपि फलं निरूपयितुं न शक्यते तथापि स्वरूपावबोधो विज्ञानफलमनुभूयते। न चैतत्कथमिति विकल्पनीयं सर्वद्वैतोपमर्देन विकल्पासहिष्णुत्वात्। नहि दृष्टेऽनुपपन्नं नाम। तथाच श्रुतिः—न निरोधो नचोत्पत्तिर्न बद्धो नच साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता, ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदह ब्रह्मास्मीति तस्मात्तत्सर्वमभवदित्याद्या पूर्वमपि ब्रह्मस्वरूपस्यैव सतो जीवस्य ज्ञानाद्ब्रह्मभावं दर्शयति, सर्वं च द्वैतजातं वारयति॥ ७॥

( लघुव्याख्या. )

सप्तमं पद्यमवतारयति—नन्वित्यादिना। ब्रह्मभावः अभेदः उपदिश्यते तत्त्वमसीत्यादिना ज्ञाप्यते। ब्रह्मणः सच्चिदानन्दस्य साक्षिणः अब्रह्मणः कार्यकारणभावापन्नस्य

मायातत्कार्यस्य जडत्वात् सच्चिद्भिन्नत्वात्। तथाचातद्रूपस्य तद्रूपप्रतिपादनं बाधितार्थकत्वात् भ्रान्तप्रलाप एव स्यादिति भावः। असत्त्वाचेति मिथ्यात्वादित्यर्थः। उपदेशानर्थक्यात्। परमपुरुषार्थप्रयोजकापूर्वार्थकवाक्यप्रयोगवैयर्थ्यात्। तदेवोपपादयति—ब्रह्मभावस्येति। स्वत इति उपदेशं विनैव विद्यमानत्वात्। साधनीयांशाभावेन साधनप्रयासो निरर्थक इति भावः। नन्वज्ञाननिवृत्त्युपलक्षितात्मा पुमर्थः, अज्ञाननिवृत्तिश्च ज्ञानेनेति तदर्थमुपदेशः सार्थक एवेत्याशङ्कते—जीवस्येति। स्वतः उपदेशादिकं विना। अविद्येति अविद्यारूपं व्यवधायकम्। अविद्यानिवृत्तिरात्मनो भिन्नाऽभिन्ना वा। भिन्नापि सत्यसती वेत्यत्राद्यान्तपक्षस्य पुनः संसारोन्मज्जनप्रसञ्जकस्यातितुच्छत्वं मत्वा शेषपक्षौ दूषयति—अविद्यानिवृत्तेरिति। द्वैतापत्तेः सत्यस्यात्मभिन्नस्यापत्तेः। नन्विष्टापत्तिः, नच श्रुतिविरोधः श्रुतेर्भावाद्वैतपरत्वेन विरोधाभावादित्यत आह—ब्रह्मण इति। असिद्धीति। 'सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्युक्तस्वरूपहानिप्रसङ्गात्। वस्तुपरिच्छेदाङ्गीकारादिति भावः। अत्र वार्तिकवाक्यं प्रमाणयति—तदुक्तमव्यावृत्तेति। अननुगतमनुगतधर्मशून्यं द्वितीये ब्रह्मभिन्ने सति सत्ये। परमार्थतः वस्तुतः प्रतीतितः फलाभावमित्यस्य फलमलीकमित्यर्थः। तथाच किं वास्तवं फलमलीकं किंवा प्रातीतिकं फलमलीकमिति प्रश्ननिष्कृष्टार्थः। परमार्थतो नास्ति परमार्थत्वविशिष्टमलीकं, द्वितीयं प्रातीतिकत्वविशिष्टं फलमलीकमित्यभिप्रायम्। आत्मैवाविद्यानिवृत्तिः। नचोपदेशवैयर्थ्यम्। ब्रह्मानुभवप्रतिबन्धकाज्ञानविघटकत्वेन सार्थकत्वादिति वाचस्पतिमिश्राः। तन्न सम्यक्। तन्निवर्तकत्वादिरूपतद्विघटकत्वस्य दुर्वचत्वात्। अतो नात्मस्वरूपा किंतु पञ्चमप्रकारा निरुक्तप्रकारेण सत्त्वस्यासत्त्वस्य च विरोधेन सत्त्वासत्त्वयोश्चासमावेशात्। नाप्यनिर्वाच्या। जन्यस्याज्ञानोपादानकत्वेन मुक्तावन्वयित्वासंभवादिति केचित्। तदपि न सम्यक्। ज्ञानसाध्यायास्तस्या अज्ञानोपादानकत्वावश्यकत्वेनानिर्वाच्यत्वात्। पञ्चमप्रकारान्तर्भावे मानाभावाद्ब्रह्मणोऽसिद्धिप्रसङ्गाच्च। तस्मान्न पञ्चमप्रकाराऽविद्यानिवृत्तिः, किन्त्वनिर्वाच्यैव। तदुपलक्षितश्चात्मा पुमर्थ इत्यज्ञाननाशस्य मिथ्यात्वेन मुक्तावनन्वयित्वेऽपि न हानिः। उपलक्षितस्यानुवृत्तेरित्यपरे। तदपि न सम्यक्। अविद्यानाशस्य सुखदुःखाभावेतरत्वेन स्वतोऽपुरुषार्थत्त्वात्। अतोऽनवच्छिन्नानन्द एव पुरुषार्थः। स च यद्यपि नित्यसिद्धस्तथापि विस्मृतग्रैवेयकादिरिव ज्ञातत्वेन प्राप्यत्वात्फलमिति चित्सुखाचार्याः। एतदपि न सम्यक्। अनिर्वचनीयख्यातिवादिमते जाग्रद्बोधादिना प्रातीतिकस्वप्नपदार्थनाशस्येव ब्रह्मसाक्षात्कारेण 'ब्रह्म नास्ति न भासत इति भ्रमसिद्धानन्दावरणनिवृत्तेः मुख्यफलस्यैव संभवात्। ब्रह्मण औपचारिकफलत्वकल्पनं न युक्तमित्यन्ये। इदमपि न युक्तिसहम्। निवृत्तेरनिरूपणस्योक्तेः। अपिच निवृत्तिः प्रागभावो वा नाशो वा अत्यन्ताभावोऽन्योन्याभावो वा। नाद्यः। अनाद्यज्ञानस्य प्रागभावायोगात्। प्रागभावस्यानादित्वेन ज्ञानसाध्यत्वायोगाच्च। नापि द्वितीयः। तस्य पारमार्थिकत्वे ज्ञानसाध्यत्वानुपपत्तिः। व्यावहारिकत्वे प्रपञ्चवज्ज्ञानबाध्यत्वावश्यकतया प्रतियोग्युन्मज्जनापत्तिः। प्रातिभासिकत्वे तु प्रतियोगिनोऽज्ञानादेः

सत्यत्वापत्तिः । प्रातिभासिकाभावप्रतियोगिनः साक्षिणः सत्यत्वदर्शनात् । अतएव न तृतीयः । त्रिविधसत्ताकातिरिक्तस्याप्रसिद्धेः । नापि चतुर्थः । तस्य प्रतियोगिसमानाधिकरणत्वेनाकिञ्चित्करत्वादिति । तस्मान्न किञ्चिदेतत् किंतु निरतिशयसुखापरोक्ष्यमेव पुरुषार्थः । निरतिशयत्वं तु स्वं प्रत्यनावृतभासकचैतन्याभेदरूपापरोक्षत्वम्, अनावृतत्वं च स्वं प्रति ज्ञानेनेति केचित्, तदपि न सम्यगनावृतत्वस्यावरणाभावघटितार्थत्वेन तद्दोषतादवस्थ्यात् । अतः सर्वस्याप्यज्ञाननाशद्वारकफलत्वादनिर्वाच्यत्वमेवेत्याशयेनाह—यद्यपीति । स्वरूपेति । परिपूर्णानन्दरूपस्वरूपावाप्तिः विज्ञानफलं शास्त्राचार्यप्रसादजचरममनोवृत्तिफलम् । तस्य च तत्त्वज्ञानात्पूर्वं स्वरूपस्य बद्धत्वमिव, तत्त्वज्ञानादूर्ध्वं फलत्वमपि जीवन्मुक्तिदशायां प्रातीतिकमेवेति भावः । तत्त्वज्ञानादूर्ध्वमज्ञानदृष्टिशून्यो जीवन्मुक्तः स्वरूपेऽज्ञाननिवृत्तित्वं परिकल्प्य तद्विशिष्टस्य ज्ञानजन्यत्वरूपं फलत्वमपि कल्पयन् कृतकृत्यो भवति, स्वकल्पिताज्ञानतत्प्रयुक्तवत्कालपूर्वत्वशून्यक्षणवृत्तिर्भवतीति यावत् । फलत्वकल्पनेनैव कथमिति नाशङ्कनीयमित्याह—न चैतदिति । विकल्पेति विकल्पविषयत्वायोगात् । जीवन्मुक्तिकाले स्वानुभवसिद्धस्य सकलविकल्पातीतस्य फलस्य विकल्पवैशिष्ट्यबाधादिति भावः । विकल्पातीतत्वमेव कथं तत्राह—नहीति । दृष्टे प्रत्यक्षसिद्धे अनुपपन्नं नाम युक्तिविरुद्धं किंचित् । अनुभवविरुद्धस्तर्को नोपादेय इति भावः । प्रातीतिकफलत्वकल्पना श्रुतिसिद्धापीत्याह—तथेति । निरोधः नाशः उत्पत्तिः जन्म प्रपञ्चस्येति शेषः बद्धः अनाद्यज्ञानवान् साधकः तन्निवृत्त्यनुकूलश्रवणादिमान् मुमुक्षुः मुक्तः स्यामितीच्छावान् मुक्तः अज्ञाननिवृत्तिमान् परमार्थवेति भावार्थोऽविवक्षितः । निरोधादिशून्यं परमार्थ इत्युक्ते तच्छून्यत्वविकल्पासहत्वादिकं न लभ्यते ततस्तथाऽनुक्त्वा परमार्थतेत्युक्तम् । एतच्छब्देन सर्वनाम्ना सर्ववैशिष्ट्यासहं शुद्धचिद्रूपमुक्तम् । श्रुत्यन्तरमाह—ब्रह्म वेति अग्रे प्राग्बोधात् वा अपि । इदं शरीरस्थं प्रमात्रादिसाक्षिभूतं त्वंपदलक्ष्यं ब्रह्मैवासीन्न सांसारिकधर्मान्विततया तथाच शुद्धचिदानन्दैकरसमेव त्वमासीदिति गुरुणा बोधितमात्मानं तदेवास्थूलादिलक्षणलक्षितं ब्रह्मैव अवेत् ज्ञातवान् एवकारोऽत्राविनाभावरूपाभेदं वारयति । ब्रह्मभिन्नं नावेदित्यर्थः । ज्ञानाकारमाह—अहमिति । ज्ञानफलमाह तस्मादिति । तस्मात् विज्ञानात् सर्वं भोक्तृजातं तद् ब्रह्म अविद्यातत्कार्याभिमाननिवृत्त्याऽनुगतसच्चिदानन्दात्मकमभवत् भवति । अधिकं महद्व्याख्यानेऽनुसंधेयम् ॥ ७ ॥

## ( संदीपनम् )

सप्तमश्लोकावतरण्याशङ्कते—ननु कस्येति । ननु तत्वमस्यादिवाक्यानां न जीवस्य ब्रह्मभावोपदेशमात्रं फलमपि तु अज्ञाननिवृत्तिरित्याशङ्कते—जीवस्येत्यादिना । ब्रह्मणो कथमसिद्धिप्रसङ्गस्तत्राह—तदुक्तमिति । उक्ताक्षेपास्कन्दकत्वेन श्लोकमवतारयति—अत्र किमिति । न चायमिति पद्यस्येदंपदार्थमाह—सर्वप्रमाणेति । किं वा प्रतीतितोऽपीत्यनेन यः पक्ष उक्तस्तं दूषयति—द्वितीयं निराकरोतीति । यथाश्रुते निराकरणासंभवादाह—अयमर्थ इति ॥७॥ इतिसप्तमश्लोकः ।

नन्वात्मनः स्वप्रकाशचिद्रूपत्वेन सर्वदा भासमानत्वे जाग्रत्स्वप्नसुषुप्त्यादिव्यवस्था कथं ? न च भ्रान्त्यैव व्यवस्थेति वाच्यम्, तथा सति सर्वस्यैव

स्वप्नत्वापत्तिरिति चेन्न। लक्षणतस्त्रयाणामपि स्वप्नत्वेऽपि प्रतिभासत आविद्यकविशेषसंभवादसद्विलक्षणत्वेन सविशेषत्वाद्व्यवस्थोपपत्तेः, परमार्थतस्तु न क्वापि व्यवस्थेत्याह—

( लघुव्याख्या. )

अष्टमं पद्यमवतारयति—नन्विति। आत्मनः 'योऽयं विज्ञानमय इति श्रुतिबोधितस्य मनआद्यतिरिक्तस्य स्वप्रकाशेति संविदन्तरानपेक्षत्वे सत्यपरोक्षव्यवहारचिदात्मत्वेन सर्वदेति 'अहं न प्रकाश इत्यज्ञानभासकत्वेन व्यवहारविषयत्वे, सुषुप्त्यादीत्यादिना तत्तदवस्थाकृतभोगपरिग्रहः। व्यवस्था असाङ्कर्यम्। भ्रान्त्यैवेति। यथा स्वप्ने जाग्रदादिकमसाङ्कर्येणैव कल्पितं तथेत्यर्थः। सर्वस्यैव अवस्थात्रयस्यापि। लक्षणतः आविद्यकत्वादिरूपेण त्रयाणां जाग्रत्स्वप्नसुषुप्तीनां स्वप्नत्वेऽपि 'त्रयमप्येतत्स्वप्नं सुषुप्तं मायामात्रमिति श्रुतिसिद्धस्वप्नत्वेऽपि प्रतिभासतः व्यवहारतः। आविद्यकेति अविद्याकृतो यो विशेषोऽविद्यातिरिक्तदोषजन्यत्वाजन्यत्वरूपस्तस्मात्। सविशेषत्वात् आत्मज्ञानातिरिक्तज्ञाननाश्यत्वे सति सत्त्वात्, आत्मज्ञानातिरिक्तज्ञानाबाध्यत्वे सति सत्त्वाच्च व्यवस्थोपपत्तेः असाङ्कर्योपपत्तेः। तत्राद्यस्य स्वप्ने द्वितीयस्य जागरणे सत्त्वादिति भावः। ननु परमार्थसदन्यस्यापि यदि मिथ्याभूतस्य सत्ताविशेषरूपं सविशेषत्वं तदा शशशृङ्गस्य विकल्पोल्लेखिता सत्तापि स्यात्तत्राह-असद्विलक्षणत्वेनेति अपरोक्षतया प्रतीयमानत्वादिति भावः।

( संदीपनम् )

अष्टमश्लोकमवतारयितुं भूमिकामारचयति—नन्वात्मन इति। इष्टापत्त्या परिहरति—न लक्षणत इति। लक्षणमाविद्यकत्वं, प्रतिभासतः ज्ञानतः। स्वप्नवदसत्त्वे कथं विलक्षणत्वं तत्राह—असद्विलक्षणत्वेन त्विति। तर्हि किं सविशेषकत्वं पारमार्थिकं तत्राह—परमार्थतस्त्विति।

> न जाग्रन्न मे स्वप्नको वा सुषुप्ति-
> र्न विश्वो न वा तैजसः प्राज्ञको वा।
> अविद्यात्मकत्वात्त्रयाणां तुरीय-
> स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ८॥

अत्र लयक्रमेण पौर्वापर्यनिर्देशः। तथाहि—अस्मन्मते पदार्थौ द्विविधः, दृक् दृश्यश्च। अन्यवादिपरिकल्पितानामपि पदार्थानामत्रैवान्तर्भावात्। तत्र दृक्पदार्थ आत्मा पारमार्थिक एकः सर्वदैकरूपोऽपि औपाधिकभेदेन त्रिविधः, ईश्वरो जीवः साक्षी चेति। तत्र कारणीभूताज्ञानोपाधिरीश्वरः, अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानोपहितो जीव इति। प्रपञ्चितं चैतदधस्तात्। अविद्याप्रतिबिम्बेश्वरपक्षे बिम्बचैतन्यं, बिम्बेश्वरपक्षे च बिम्बप्रतिबिम्बमुखानुगतमुखस्वरूपवज्जीवेश्वरानुगतसर्वानुसंधातृ चैतन्यं साक्षीत्युच्यते। वाचस्पतिमते त्वीश्वर एव साक्षीति द्वैविध्यमेव जीवेश्वरभेदेन दृशः।

१ वार्तिककारेति. पा.

( लघुव्याख्या. )

लयक्रमेणेति । जाग्रद्विश्वयोः स्वप्नतैजसयोः सुषुप्तिप्राज्ञयोर्लय इति क्रमसदृशक्रमेणेत्यर्थः । पूर्वं चापरं चेति पूर्वापरे तयोर्भावः पौर्वापर्यं प्रथमपश्चाद्भावस्तेन निर्देशः, प्रथमतः कार्यस्य जाग्रदादेः पश्चात् कारणस्य सुषुप्त्यादेः कथनम् । अत्रोक्तिलाघवाय लयक्रम एव प्रागुक्तः । कार्यस्य कारणे लयप्रदर्शनेनैव कार्यकारणभावलाभात् । सृष्टिक्रमनिर्देशे तु लयक्रमस्य नैयायिकादिमतवारणाय पृथगुक्तिरवश्यं वाच्या । तथाच गौरवं स्यादिति भावः । शिष्यबुद्धिवैशद्याय सकलवेदान्तरहस्यं प्रदर्शयितुं टीकाकारो भूमिकामारचयति—तथाहीति । अस्मन्मते वेदान्तमते पदार्थः पदस्यार्थः पदाभिधेय इति यावत् । द्विविधः द्विप्रकारः । दृगिति निरुक्तस्वप्रकाशत्वेन । दृशः साक्षिभास्यत्वाभावात् पृथङ् निर्देशः । पदार्थत्वं दृग्दृश्योभयान्यतरत्वव्याप्यम् । दृक्त्वं दृश्यत्वं चोभयं पदार्थविभाजकमिति यावत् । ननु वैशेषिकादिभिर्द्रव्याद्यन्यतमत्वादिना पदार्थव्यापकत्वाङ्गीकारात् कथमेतदित्याशङ्कयाह—अन्येति । अत्रैव दृग्दृश्ययोरेवान्तर्भावं दर्शयिष्यन्नाह-तत्रेति तत्र दृग्दृश्ययोर्मध्ये आत्मा अनात्मनामधिष्ठानम् । पारमार्थिकः स्वान्यूनसत्ताकपरिच्छेदवद्भिन्नः एकः अद्वितीयः सर्वदैकरूपोऽपि कूटस्थनित्योऽपि त्रिविधः त्रिप्रकारकः । तदेवाह—ईश्वर इति । तत्रेशादिपदप्रवृत्तिनिमित्तं प्रसङ्गादाह—तत्रेत्यादि । तत्र ईश्वरादिषु । अधस्तात् प्रथमश्लोकव्याख्याने । तत्र यो विशेषस्तमाह—बिम्बेश्वरपक्ष इति । दर्पणस्थग्रीवास्थमुखयोरनुगतं यन्मुखस्वरूपं मुखाकृतिः, तद्वज्जीवेश्वरयोरन्तःकरणावच्छिन्नाज्ञानावच्छिन्नयोरनुगतं यत्सर्वानुसन्धातृचैतन्यमुभयोपाध्युपलक्षितं सर्वाधिष्ठानचिन्मात्रं साक्षीत्यर्थः । तत्र विशिष्टकेवलयोर्भेदाभेदाङ्गीकारात् बिम्बप्रतिबिम्बाभ्यां शुद्धस्य भिन्नत्वं तदनुस्यूतत्वं च द्वयमप्यविरुद्धमिति भावः । वाचस्पतिमते विशेषमाह वाचस्पतीति ।

( संदीपनम् )

प्रसङ्गाद्वैशेषिकादिवत् पदार्थं निरूपयति—तथाहीति । दृक् चेतनो ज्ञानात्मकः, दृश्यास्तदितरत्वाज्जडः । ननु वैशेषिका अभावसप्तमाः पदार्था इति सप्त वदन्ति । अक्षपादाचार्यास्तु षोडश । तथा च कथं पदार्थद्वैविध्याङ्गीकारे विस्तारस्तत्राह—अन्यवादीति । इदानीं दृक्पदार्थं विभजते—तत्र दृक्पदार्थ आत्मा पारमार्थिक एक इत्यादिना । पारमार्थिकत्वं कालत्रयाबाध्यत्वम् । एकः पारमार्थिकश्चेत्तर्हि कथं जीवेश्वरादिव्यवस्था तत्राह—सर्वदैकरूपोऽपीति । अत्रार्थे यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मेतिश्रुतिप्रामाण्यम् । याज्ञवल्क्यस्मृतिरपि 'आकाशमेकं हि यथा घटादिषु पृथक् भवेत् । तथात्मैकोऽप्यनेकश्च जलाधारेष्विवांशुमानिति । एवमत्रार्थे अन्या अपि श्रुतयः स्मृतयश्चोह्याः । क्रमप्राप्तमीश्वरं लक्षयति—कारणीभूताज्ञानोपाधिरिति । कारणीभूतं यदज्ञानं तदेवोपाधि यत्र स तथा । जीवेश्वरलक्षणं विधाय साक्षिलक्षणमाह—अविद्येति । संक्षेपशारीरकमत इत्यर्थः । बिम्बं चैतन्यमिति साक्षीत्यनेनान्वयः । विवरणकारैकजीववादिनोर्मतमनुगतीकृत्याह—बिम्बेश्वरपक्षे चेति ।

**तत्रेश्वरोऽपि त्रिविधः, स्वोपाधिभूताविद्यागुणत्रयभेदेन विष्णुब्रह्मरुद्रभेदात् । कारणीभूतसत्त्वगुणावच्छिन्नो विष्णुः पालयिता, कारणीभूतरजउप-**

हितो ब्रह्मा स्रष्टा, हिरण्यगर्भस्तु महाभूतकारणत्वाभावान्न ब्रह्मा, तथापि स्थूलभूतस्रष्टृत्वात्क्वचित् ब्रह्मेत्युपचर्यते, कारणीभूततमउपहितो रुद्रः संहर्ता। एवं चैकस्यैवेश्वरस्य चतुर्मुख–चतुर्भुज–पञ्चमुखाद्याः पुमाकाराः। श्रीभारतीभवान्याद्याश्च स्त्र्याकाराः। अन्येच मत्स्यकूर्माद्योऽनन्तावतारा लीलयैवाविर्भवन्ति भक्तानुग्रहार्थमित्यवधेयम्।

चिन्मात्रस्याद्वितीयस्य निष्कलस्याशरीरिणः।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना॥ इति।

( लघुव्याख्या. )

स्वोपाधीति। ईश्वरोपाधिभूतायाः मायायाः सत्त्वरजस्तमोगुणानां भेदेन जीवस्यापि कार्यीभूतमनोगतसत्त्वगुणावच्छिन्नत्वात्तत्रातिव्याप्तिवारणाय कारणीभूतेति। अकार्यीभूतेत्यर्थः। क्वचिदिति। स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत। तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत इत्यादिश्रुतौ। एवंचेति। चतुर्भुजादिशरीरकार्यपालनादेर्विष्ण्वादिकर्तृकत्वे चेत्यर्थः। एकस्यैवेति मुख्यस्यैव कारणोपाधिकस्येत्यर्थः। ननु चतुर्भुजाकारो विष्णोरवतारः, चतुर्मुखाकारो ब्रह्मणः, पञ्चमुखाकारो रुद्रस्य, लक्ष्म्याकारो विष्णोः, भारत्याकारो ब्रह्मणः, भवान्याकारो रुद्रस्येति, विशिष्य वक्तव्यं, कथमेकस्योक्तम्। उच्यते। चतुर्भुजशरीरिणः पालनकर्तृताप्रयोजकं विष्णुत्वमेवेति वक्तुमशक्यम्, दैत्यसंहारादिरूपरुद्रकार्यदर्शनात्। तस्य देवरक्षणफलकत्वेऽपि तमःकार्यत्वेन रुद्रकार्यत्वात्। एवं पञ्चमुखशरीरावच्छिन्नस्य त्रिपुरादिसंहर्तृत्वेऽपि न रुद्ररूपत्वनिर्णयः, प्रज्ञा च तस्मात्प्रसृता पुराणीति श्रुत्या विज्ञानमुक्तिदानादिरूपविष्णुकार्यप्रतीतेः, ज्ञानादीनां सत्त्वकार्यत्वेन विष्णुकार्यत्वात्। एवं भवान्यादेर्दैत्यादिसंहर्तृत्वेऽपि पालनरूपविष्णुकार्यप्रतीतेर्न रुद्ररूपत्वनिर्णयः। एवं सरस्वत्या अपि ज्ञानपालनादिरूपविष्णुकार्यप्रतीतेर्न ब्रह्मरूपतानिर्णयः। तस्मात्सर्वाणि शरीराणि सर्वेषामपि, पालनादिरूपस्य चतुर्भुजादिशरीरावच्छिन्ने क्लृप्तकार्यस्य रुद्रादावपि प्रतीतेः। एतदभिप्रायेणैव, ' हरिरूपी महादेवो लिङ्गरूपी जनार्दनः। ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेदित्यादि बृहन्नारदीयवाक्यानि। तस्मादेकस्यैवेश्वरस्य सत्त्वगुणावच्छिन्नत्वादिनेव चतुर्भुजादिशरीरावच्छिन्नत्वादिना हरित्वादिकमिति संक्षेपः। एतच्च स्पष्टं मैत्रायणीयशाखादौ ' अथ यो ह खलु वावास्य तामसोंऽशोऽसौ ब्रह्मचारिणो योऽयं रुद्रोऽथ यो ह खलु वावास्य राजसोंऽशोऽसौ ब्रह्मचारिणो योऽयं ब्रह्माऽथ यो ह खलु वावास्य सात्त्विकोंशोऽसौ ब्रह्मचारिणो योऽयं विष्णुः स वा एष एकस्त्रिधा भूत इत्यादि। अत्र च ब्रह्मचारिण इत्यादि संबोधनम्। अन्यत्स्पष्टम्। एवं भवान्यादीनामीश्वरत्वं केनोपनिषदि श्रूयते। विस्तरभयान्न लिख्यते। ' ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियमित्यादि लक्ष्म्याः। एवं 'तस्याः समुद्रा अधि विक्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः। ततः क्षरत्यक्षरं तद्विश्वमुपजीवति' इत्यादि सरस्वत्या ईश्वरत्वे

---

१ अयं श्लोको लिखितपुस्तकयोर्नास्ति।

मानम्। अयमर्थः—तस्या वाचः सकाशात् समुद्राः मेघा नद्यश्च, समु[द्र?द्र]वति जलमस्मादिति व्युत्पत्तेः। अधि अधिकमुदकं विक्षरन्ति वाग्देवतारूपेण प्रेरिता मेघादयो जलभरणादिकं कुर्वन्तीति दिक्। विस्तरतस्तु भवानीस्वरूपं मद्व्याख्यानेऽनुसंधेयम्। आधिकारिकावतारत्वाऽविद्यावद्विषयकर्मकर्तृत्वादिरूपजीवलिङ्गदर्शनान्महाभूतादिसर्जनाश्रवणाच्च जीवत्वमेवावताराणामिति मन्दमतीनां भ्रमं निराकुर्वन्नाह—अन्य इति। लीलयैव स्वेच्छयैव आविर्भवन्ति प्रकटीभवन्ति न तु जायन्ते। सच्चिदानन्दात्मकानामुत्पत्त्ययोगात्। सच्चिदानन्दरूपता च तेषां सच्चिदानन्दविग्रहं पञ्चपदं वृन्दावनभूरुहतलासीनमित्यादिश्रुतिसिद्धा। महाभारते द्रोणपर्वणि भगदत्तवधे 'चतुर्मूर्तिरहं शश्वल्लोकत्राणार्थमुद्यतः। आत्मानं प्रविभज्येह लोकानां हितमादधे। एका मूर्तिस्तपश्चर्यां कुरुते भुवि मे स्थिता। अपरा कुरुते कर्म मानुषं लोकमाश्रिता। अपरा पश्यति जगत्कुर्वाणं साध्वसाधुनी। शेते चतुर्थी त्वपरा वरार्हेभ्यो वरार्थदेत्यादि, वदता भगवता आधिकारिकावताराणामेव लोकानुग्रहार्थमविद्यावद्विषयकर्मकर्तृत्वोक्तेः अनावृतेत्यनेश्वरत्वमेव न जीवत्वमिति भावः। अत्रायं निष्कर्षः—गुणावताराणां ब्रह्मविष्वादीनामखिलशक्त्याविर्भावकत्वाद्गुणावतारव्यपदेशः। मत्स्याद्यवताराणां त्वल्पशक्त्याविर्भावकत्वादंशावतारत्वव्यपदेशः। गुणावतारांशावताराभ्यां भगवत एवानन्तशक्त्याविर्भावः सर्वदेति विवेकः। स च महाविष्णुरेवेति वैष्णवाः। परमशिव इति शैवाः। परदेवतेति शाक्ताः। परमेश्वर एवेति-शुद्धस्मार्ता इति संक्षेपः। ननु स्वेच्छामात्रेण जगद्रक्षणसमर्थोऽपि किमर्थमवतारादिभावेन क्लिश्यतीत्यत आह—भक्तेति। संकल्पमात्रेण कर्तुं समर्थोऽपि स्वस्याष्टविधैश्वर्यसामर्थ्यमात्यन्तिकं प्रकटयन् भक्तानामभिध्यानाय तानि तानि मनोहराणि चरितानि तत्तद्रूपेण विधत्त इत्यर्थः॥*॥ तत्र "स्मरन्तः स्मारयन्तश्च मिथोघौघहरं हरिम्। भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुमित्यादिना साध्य—साधनभेदेन भक्तिद्वैविध्यस्योक्तेर्भक्ता अपि द्विविधाः—सिद्धाः साधकाश्च। तत्र साध्यभक्तिभाजः सिद्धाः। साधनभक्ति भाजः साधकाः। तत्र भजनं भक्तिरितिव्युत्पत्त्या साध्यभक्तिः प्रेमभक्तिः। सा च "प्राप्तेऽपि विषये यस्तु नैव नश्येत कर्हिचित्। ममेतिवचनाक्रान्तो वर्धते च पुनः पुनरिति इच्छाविशेषः। यथा 'दृष्टेऽपि कृष्णे तृष्णेयं लोचने न विमुञ्चतीत्यादि। सैव च शुद्धा पुमर्थरूपा अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी 'अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे। सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः। स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः। नह्यतोऽन्यः शिवः पन्था विशतः संसृताविह। वासुदेवे भगवति भक्तियोगो यतो भवेत्। 'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते। वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इत्यादि स्मृतेः। सुख-दुःखाभावान्यत्वेऽपि पुमर्थरूपता च मायानाशस्यैवोपलक्षणविधयानन्दावच्छेदकत्वेन। अवच्छेदकत्वं च विजातीयप्रेमत्वेनेति न कोऽपि दोष इत्यन्यत्र विस्तरः। तच्च प्रेम द्वादशविधम्। तत्र गुणश्रवणादिना द्रवच्चितस्य दर्शनोत्सुकतादिरूपम् १ कपटप्रश्नाद्व्यक्तः स एवेच्छाविशेषो यत्तं २ मुहुरीक्षणे धाष्टर्य-

कण्डूत्याद्यारम्भो ललितम् ३ किञ्चिद्विरहादिना धाष्ट्यादीनां स्थूलावस्था दलितम् ४ विरहादिना द्रुतस्य चेतसो मिलने पुनस्तदाकारता मिलितम् ५ कर्मेन्द्रियादिहेतुकोपभोगजन्यः चित्तद्रावो ललितम् ६ प्रियविषयकरागनिन्दकविषयककोपाभिव्यङ्गयं छलितम् ७ पूर्वजन्मप्रेमैवानुवर्तमानं वलितम् ८ उद्योगं विना प्रारब्धाभिमानेनेच्छाविषयानुवर्तनं क्रान्तम् ९ तदेवानुक्षणपरितापसहकृतं सक्रान्तम् १० इदमेव भवान्तरे वासनापरिपक्वं विह्वृतम् ११ सर्वदा द्रवचित्तस्य मम स्यादितीच्छा गलितम् १२ इच्छाविषयाकारमखण्डानन्दाद्वयविषयं संतृप्तम् १३ इति । साधनभक्तिस्तु, भज्यते सेव्यते भगवदाकारमन्तःकरणं क्रियतेऽनयेति व्युत्पत्त्या—श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा । क्रियेत भगवत्यद्धा तन्मध्येऽधीतमुत्तममिति नवधा । तत्र श्रवणं भगवद्विषयकशब्दस्य श्रोत्रेण ग्रहणं तदर्थबोधश्च । कीर्तनं भगवद्बोधकशब्दोच्चारणम् । स्मरणं भगवत्स्वरूपगुणस्मृतिः । पादसेवनं पित्राचार्यगुर्वादेः । अर्चनं चलाचलप्रतिमापूजनम् । वन्दनं पूजाबहिर्भूतनमस्कारो भगवद्भक्तप्रतिमादेः । दास्यं दासस्येव स्वामिप्रीतिकरकर्मानुष्ठानम् । सख्यं विश्वासो मित्रवृत्तिश्च । विश्वासस्तदुक्तेऽवश्यंभावधीः । मित्रवृत्तिः बन्धुसमवयस्कादिव्यवहाराख्या सेवा । आत्मनिवेदनं आत्मनः शरीरस्य स्वीयत्वाभिमानत्यागपूर्वकं स्वामिसत्त्वफलकः सङ्कल्पः । तदभेदेनाखण्डैकरसानन्दात्मस्वरूपज्ञानं च । सेयं भक्तिस्त्रेधा—कर्ममिश्रा कर्मज्ञानमिश्रा ज्ञानमिश्रा च । तत्र कर्ममिश्रा तामसी राजसी सात्विकी च । तामस्यपि हिंसार्था दम्भार्था मात्सर्यार्था चेति त्रिधा । अभिसंधाय यद्धिंसां दम्भं मात्सर्यमेव च । संरम्भी भिन्नदृग्भावं मयि कुर्यात्स तामस इति स्मृतेः । एवं राजस्यपि विषयार्था यशोऽर्था ऐश्वर्यार्था चेति त्रिधा । विषयानभिसन्धाय यश ऐश्वर्यमेव वा । अर्चादावर्चयेद्यो मां पृथग्भावः स राजस इति स्मृतेः । एवं सात्विक्यपि पापनाशार्था भगवत्प्रीत्यर्था विधिसिद्ध्यर्था चेति त्रिधा । कर्मनिर्हारमुद्दिश्य परस्मै वा तदर्पणम् । यजेद्यष्टव्यमिति वा पृथग्भावः स सात्विक इति स्मृतेः । एवं कर्मज्ञानमिश्रापि त्रेधा । उत्तमा मध्यमाऽपकृष्टा च सत्त्वतारतम्यात् । तत्रोत्तमा—सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तम इति । मध्यमा—ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च । प्रेममैत्रीकृपोपेक्षां यः करोति स मध्यम इति । अपकृष्टा—अर्चायामेव हरये पूजां यः श्रद्धयेहते । न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृत इति । ज्ञानमिश्रा मद्गुणस्मृतिमात्रेण मयि सर्वगुहाशये । मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधाविति । अविहिता चतुर्धा । कामजा १ द्वेषजा २ भयजा ३ स्नेहजा ४ । कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः । गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । संबंधाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो । इत्यत्र संबन्धात्स्नेहाद्वृष्णयो यूयं चेत्येकम् । भक्त्या विहितया वयमिति विभागः । तत्र कर्ममिश्रा नवधा गृहस्थानाम् । कर्मज्ञानमिश्रास्तिस्रो वनस्थानां ज्ञानमिश्रैका भिक्षूणाम् । शुद्धैका सर्वेषाम् । निर्विण्णानां ज्ञानयोगो न्यासिनामिह

कर्मसु । तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् । यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् । न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥ इत्यादि स्मृतेः । अत्रानिर्विण्णानां न्यासिनां कर्मसु सत्सु ज्ञानयोगः कर्मज्ञानयोग इत्यर्थः । तत्राविहिताश्रतस्तो गोप्यादितुल्यानाम् । तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेदिति स्मृतेः । भक्तिभूमयस्तु—'प्रथमं महतां सेवा तद्दयापात्रता ततः । श्रद्धा च तेषां धर्मेषु ततो हरिगुणश्रुतिः । ततो रत्यङ्कुरोत्पत्तिः स्वरूपाधिगतिस्ततः । प्रेमवृद्धिः परानन्दे तस्याप्यस्फुरणं ततः । भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता । प्रेम्णोऽथ परमा काष्ठेत्युदिता भक्तिभूमयः ॥ इति संक्षेपः ।

## ( संदीपनम् )

ईश्वरपदार्थं विभजते—तत्रेश्वरोऽपीति । उक्तं विवृणोति—कारणीभूतेत्यादिना । ननु हिरण्यगर्भो ब्रह्मा तदतिरिक्तो वा तत्राह—हिरण्यगर्भस्त्विति । महाभूतेति । सूक्ष्ममहाभूतेत्यर्थः । एकस्यैवेति । ईश्वरस्येति शेषः । ईश्वरस्य पुमाकारमूर्तीरुक्त्वा स्त्र्याकारमूर्तीराह—श्रीवाणीभवान्यादयश्चेति । सर्वशक्तिमदवतारमुक्त्वावतारान्तरमाह—अन्ये चेति ।

**जीवोऽपि त्रिविधः—स्वोपाध्यवान्तरभेदेन विश्व—तैजस—प्राज्ञभेदात् । तत्राविद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदवस्थाभिमानी विश्वः । स एव स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नावस्थाभिमानी तैजसः । शरीरान्तःकरणोपाधिद्वयरहितोऽन्तःकरणसंस्कारावच्छिन्नाविद्यामात्रोपहितः सुषुप्त्यवस्थाभिमानी प्राज्ञः । एतेषां च स्वतन्त्रोपाधिभेदाभावेन स्वतन्त्रभेदाभावेप्यवान्तरोपाधिभेदादेकत्वेऽप्यवान्तरभेदो व्यवह्रियते ।**

## ( लघुव्याख्या. )

त्वंपदार्थं विविच्य दर्शयति—जीवोऽपीत्यादि । स्वोपाधीति । जीवोपाधेरविद्याया योऽवान्तरभेदः कार्यकारणतया भेदस्तेनेत्यर्थः । तत्राविद्येति । जागरितस्थानो विश्वो वैश्वानरः, स्वप्नस्थानस्तैजसः, सुषुप्तस्थानः प्राज्ञ इत्यादिमाण्डूक्यादिश्रुतिभिर्जाग्रदाद्यभिमानिनां विश्वादिसंज्ञा उक्ताः । अभिमानित्वं चोपाधित्रयद्वयैकावच्छिन्नानां क्रमेण योग्यत्वादिति भावः । स्थूलेति । व्यावहारिकस्थूलशरीराभिमानेत्यर्थः । स्वतन्त्रोपाधीति । परस्परं कार्यकारणभावरहितोपाधीत्यर्थः । स्वतन्त्रभेदेति अत्यन्तभेदेत्यर्थः । अवान्तरोपाधिभेदेन कार्यरूपोपाधिभेदेन । अवान्तरभेदः व्याप्यव्यापकभावनिबन्धनो भेदः, यथा मृद्घटाकाशयोर्भेद इति दिक् ।

## ( संदीपनम् )

ईश्वरत्रैविध्यमुपपाद्य जीवत्रैविध्यमुपपादयति—जीवोऽपीति । उक्तं त्रिविधं जीवं विभजते—अत्रेति एतेषां मध्य इत्यर्थः । विश्वलक्षणमाह—जाग्रदवस्थाभिमानी जीव इति । अविद्यान्तःकरणस्थूलशरीरावच्छिन्न इति स्वरूपकथनं नतु लक्षणप्रविष्टम् । एवं स्वप्नावस्थाभिमानी तैजसजीवलक्षणम् । शेषं तु स्वरूपकथनम् । उपाधिद्वयोपहितः अविद्यान्तःकरणोपहितः । प्राज्ञलक्षण-

माह—सुषुप्त्यभिमानीति । शेषं स्वरूपकथनार्थम् । तर्हि किमीश्वरवत् जीवोऽपि स्वतन्त्रो नेत्याह—एषां चेति ।

**साक्षी तु सर्वानुसंधाता सर्वानुगतस्तुरीयाख्य एकविध एव तत्रोपाधिभेदेनापि न कश्चिद्भेदस्तदुपाधेरेकरूपत्वात् ।**

( लघुव्याख्या. )

भेदवार्ता जीवेश्वरयोरेव न लक्ष्यस्य साक्षिण इत्याह—साक्षी त्विति । तुरीयाख्यः अकारोकारमकाराद्भिन्नश्चतुर्थः । उपाधिभेदेनापीति । बिम्बत्वोपहितस्य साक्षित्वपक्ष इति शेषः ।

( संदीपनम् )

ननु जीवेश्वरवत्साक्षी कियत्प्रकारस्तत्राह—साक्षी त्विति ।

**अविद्यातद्व्याप्यतत्कार्यात्मकः प्रपञ्चो दृश्यपदार्थः । तस्य चापारमार्थिकत्वेऽपि व्यावहारिकसत्त्वाभ्युपगमान्न स्वाप्निकपदार्थवन्निरूपणं व्यर्थमुपासनादावुपयोगादिति । सोऽपि त्रिविधोऽव्याकृतमूर्तामूर्तभेदात् ।**

( लघुव्याख्या. )

तद्व्याप्येति तत्समनियतेत्यर्थः । चिदचित्संबन्धादीति यावत् । ननु दृग्भिन्नः पदार्थो यद्यस्ति तर्हि द्वैतापत्तिः । नास्तीति चेत् कथं निरूप्यते । स्वप्नवदङ्गीकारेऽपि स्वप्नस्येव निरूपणवैयर्थ्यं तदवस्थमेवेत्यत आह—तस्येति दृश्यपदार्थस्य । अपारमार्थिकत्वेऽपि मिथ्यात्वेपि । व्यावहारिकसत्त्वेति अर्थक्रियाकारिताप्रयोजकसत्त्वेत्यर्थः । न स्वाप्निकेति । यथा प्रातिभासिकस्य स्वप्नादेरर्थक्रियाकारित्वायोग्यस्य करटदन्तान्वेषणवन्निरूपणं व्यर्थं तथा न व्यावहारिकपदार्थानां निरूपणं व्यर्थमित्यर्थः । तत्र हेतुमाह—उपासनादाविति । तथाच न दृग्भिन्नपदार्थाङ्गीकारमात्रेण द्वैतापत्तिः, न वा तस्य मिथ्यात्वाङ्गीकारमात्रेण निरूपणानर्हत्वम्, वस्तुतोऽसत्त्वेन द्वैताभावाद्व्यावहारिकत्वेन निरूपणार्हत्वादिति संक्षेपः ।

( संदीपनम् )

दृक्पदार्थं निरूप्य दृश्यं निरूपयति—अविद्यातद्व्याप्येति । ननु त्वन्मत आविद्यकपदार्थस्य स्वाप्निकपदार्थतुल्यत्वात् स्वाप्नपदार्थनिरूपणवदाविद्यकनिरूपणं विफलमत आह—तस्य चेति । निरूपणप्रयोजनमाह—उपासनादाविति । सोऽपि दृश्यपदार्थोऽपि ।

**तत्र साभासाऽविद्या मूर्तामूर्तप्रपञ्चबीजशक्तिरूपा, तदजन्यत्वेऽपि तन्निवृत्तौ निवर्तमानत्वेन तद्व्याप्यैश्चैतन्यतत्संबन्धजीवेशविभागचिदाभासैः सहानादित्वादव्याकृतमित्युच्यते । सा च स्वयं जडापि, अजडेन चिदाभासेनोज्ज्वलिता पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती शब्दस्पर्शरूपरसगन्धात्मकान्याकाशवायुतेजोजलपृथिव्यादीनि पञ्च महाभूतानि जनयति ।**

(लघुव्याख्या.)

साभासेत्यादि । साभासाविद्या तद्व्याप्तैश्चैतन्यतत्सम्बन्धादिभिः सहाव्याकृतमित्युच्यत इति योजना । बीजशक्तिरूपेति प्रयोजकशक्तितादात्म्यापन्नेत्यर्थः । शक्तिश्च त्रेधा—जीवादृष्टं, प्रपञ्चसंस्काररूपा सूक्ष्माऽवस्था, अज्ञाननिष्ठावरणविक्षेपशक्ती च । ननु चैतन्याविद्यासं-

बन्धादेरविद्याकार्यत्वाभावात् कथं तद्व्याप्यता तत्राह–तदजन्यत्वेऽपीति। यद्यपि तन्नाविद्याकार्यं तथापि यदा यदा चैतन्यतत्संबन्धादि तदा तदाऽविद्येति कालिकी व्याप्तिरस्त्येव। अविद्योच्छेदक्षण एवाविद्याचित्संबन्धादेरुच्छेदात्। शुक्त्याद्यवच्छिन्नचिदविद्यासंबन्धादौ तथा दर्शनात्। चैतन्यतत्संबन्धेति। चिदविद्यासंबन्धेत्यर्थः। जीवेशविभागेति। जीवेशयोर्भेदेत्यर्थः। जीवेशयोस्तु त्वम्पदार्थ एवान्तर्भावो नाव्याकृते इत्ये, चिदाभासैः वृत्तिप्रतिबिम्बादिरूपैरवान्तरैः कार्यक्रमवैचित्र्ये उपपादयिष्यन् सहकारिभेदसहकृताऽविद्यातः सृष्टिमाह–साचेति। चिदाभासेनोज्वलिता चिदाभासरूपेणेश्वरेणाधिष्ठिता चिदाभासाविवेकेनेश्वरेणाधिष्ठिता वा प्रयुक्ता सहकृता गन्धात्मकानीति गुणगुणिनोस्तादात्म्याङ्गीकारात्। युक्तं चैतत्। श्रुतौ गुणानां पृथगुत्पत्तेरश्रवणात्।

(संदीपनम्)

त्रयाणां मध्ये अव्याकृतपदार्थमाह–तत्रेति। साभासाविद्या अव्याकृतमुच्यत इत्यन्वयः। तद्व्याप्यमविद्याव्याप्यम्। तच्च ग्रन्थकार एव वक्ष्यति–तद्व्याप्यैश्चैतन्येत्यादिना। तद्व्याप्यत्वे हेतुमाह–तदजन्यत्वेऽपीत्यादिना। साचेति। अविद्येत्यर्थः। प्रपञ्चबीजशक्तिरूपत्वं यदव्याकृतस्योक्तं तदिदानीं प्रकटयति–शब्देत्यादिना। एवं चौपनिषदमते शब्दाद्यात्मक एव सूक्ष्माकाशादिर्न तु सांख्यमतवत् शब्दादिगुणादाकाशादेरुत्पत्तिरिति।

**तत्र पूर्वपूर्वभूतभावापन्नाया अविद्याया उत्तरोत्तरं प्रति कारणत्वात् पूर्वपूर्वभूतगुणानामुत्तरोत्तरभूतेष्वनुप्रवेशः। एवमविद्यात एवान्धकारो भावरूप एवावरणात्मा चाक्षुषज्ञानविरोध्यालोकनाश्यश्च झटिति महाविद्युदादिवदाविर्भवति तिरोभवतीति च सिद्धान्तः। संसारहेतुदेहोपादानत्वाभावाच्च न श्रुतिषु सृष्टिप्रक्रियायामाम्नायत इत्यविरोधः। दिक्कालौ त्वप्रामाणिकत्वान्नोक्तौ, आकाशस्यैव दिग्व्यवहारजनकत्वसंभवात्, दिशः श्रोत्रमिति श्रुतेः। कालस्त्वविद्यैव तस्या एव सर्वाधारत्वादिति। अयं चाव्याकृतपदार्थ ईश्वरोपाधिः।**

(लघुव्याख्या.)

अविद्यैव यदि सर्वेषां जनिका तदा भूतपरिमाणविशेषगुणादिव्यवस्था कथं तत्राह–तत्रेति। तेषु भूतेषु मध्ये। पूर्वपूर्वेति। पूर्वपूर्वभूतरूपेण परिणताया इत्यर्थः। आकाशरूपेण परिणताया वायुं प्रति वायुरूपेण परिणतायास्तेजः प्रतीत्येवं कारणत्वादिति यावत्। तथाच पूर्वपूर्वभूतानामप्युत्तरोत्तरभूतेषूपादानत्वम्। आकाशाद्वायुः वायोरग्निरिति श्रुतेः। अत एवाकाशादीनां वाय्वाद्यपेक्षया महत्त्वं पुराणादिषूक्तं युज्यते। नह्याकाशादीनां कार्त्स्न्येन वाय्वादिपरिणामः, तथा सत्युत्तरोत्पत्तिकाले पूर्वरूपोच्छेदप्रसङ्गात्किंत्वेकदेशेन। तथा च सुतरां पूर्वस्य महत्त्वमिति संक्षेपः। पूर्वपूर्वभूतगुणानामिति। आकाशादिगुणानां शब्दादीनां वाय्वादावुत्पत्तिरित्यर्थः। कारणगुणा हि कार्यगुणानारभन्त इति न्यायादिति भावः। आलोकनिरपेक्षचक्षुर्ग्राह्यत्वात्तमो न भावरूपं किन्त्वालोकाभाव एवेति तार्किकमतं निराकरिष्यन्

प्रसङ्गादन्धकारं निरूपयति—एवमिति । भावरूप एव अभावभिन्न एव । अबाधितनीलरूपवत्त्वादिप्रतीतेरिति भावः । लाघवतर्कं निरसिष्यन्नाह—आवरणात्मेति । आवरणात्मत्वं स्फुटयति—चाक्षुषेति । चाक्षुषधीप्रतिबन्धक इत्यर्थः । नन्वयव्यतिरेकाभ्यामालोकस्य चाक्षुषहेतुत्वात्तमसस्तत्प्रतिबन्धकत्वे मानाभावस्तत्राह—आलोकनाश्य इति । संयोगेनालोकस्य समवायेनालोकसंयोगस्य वा चाक्षुषहेतुत्वे स्वर्णभिन्नत्वमहत्त्वावच्छिन्नत्वादिकमवश्यं निवेश्यमन्यथा स्वर्णपरमाण्वादिसंयोगेनान्धकारादौ चाक्षुषापत्तेश्च । तथा च गौरवम् । अस्मन्मते तु विषयतासंबन्धेन चाक्षुषं प्रत्यवच्छेदकतासंबन्धेन तमः प्रतिबन्धकम् । आलोकासंबद्धद्रव्यावच्छिन्नचैतन्ये तमउत्पत्त्या चाक्षुषानुत्पत्तिः, आलोकावच्छिन्नचैतन्ये तमोऽनुत्पत्त्या चाक्षुषोत्पत्तिरित्यालोकस्य तमोविघटकत्वेन चाक्षुषोपयोगितयान्वयव्यतिरेकावुपक्षीणाविति भावः । तर्हि तदङ्गीकारे तदुत्पत्तिविनाशकल्पनातो महागौरवं तत्राह—झटितीति । स्पष्टम् । एतेन गृहादावारोपितमञ्जनादिमालिन्यादिकमेव तम इत्यपि मतं न समीचीनमिति ज्ञापितम् । आलोकजन्यचाक्षुषविषयत्वात् । नच गृहादावञ्जनादिमालिन्यस्यानुभूयमानारोपासंभवेऽपि स्मर्यमाणारोपे बाधकाभाव इति वाच्यम् । तथा सति गृहे तम इति तमोविशेष्यकचाक्षुषानुपपत्तेः । बहिरिन्द्रियजन्यज्ञाने उपनीतस्य विशेषणतया भाननियमात् । उपनीतं विशेषणतयैव भासते, मानसे त्वनियम इति सिद्धान्तात् । नचायं प्रत्ययो मानस एवेति वाच्यम् । चाक्षुषत्वानुभवविरोधात् । न च चाक्षुषत्वानुभवोऽपि भ्रम इति वाच्यम् । घटादेरप्यचाक्षुषत्वप्रसङ्गात् । ननु तर्हि तमसोऽपि श्रुतिषु सृष्टिः श्रूयेत तत्राह—संसारेति । देहमध्ये तमसः सत्त्वे मानाभावेन तमसो न देहोपादानत्वम् । आकाशं त्ववकाशदानाय देहमध्येऽस्त्येवेति भावः । दिक्कालाविति । क्लृप्तपदार्थान्याविति शेषः । नोक्तौ कालत्वदिक्त्वादिना पृथङ्नोक्तौ । श्रुतिषु सृष्टिप्रक्रियायामित्यनुषज्यते । यदि नातिरिक्तौ तर्हि इहेदानीमित्यादिप्रतीतेः का गतिस्तत्राह—आकाशस्यैवेति । पराभिमतदिश इवाकाशस्यापि सर्वगतत्वाद्दिक्कृतविशेषणतासंबन्धेनोदयाचलसन्निकृष्टमूर्तविशेषोपहितत्वादिरूपेण प्राचीत्वादिसंभवादिति भावः । नन्वाकाशोऽविद्यादिकं वा दिगित्यत्र विनिगमकाभावादतिरिक्ता दिगास्तां तत्राह—दिश इति । दिग्जन्यमित्यर्थः । तथा च श्रुतिरेवाकाशस्य दिक्त्वे मानम् । नाभसत्वेन प्रमितस्य श्रोत्रस्य दिग्जन्यताबोधकत्वादिति भावः । अविद्यैवेति । लाघवादिति भावः । ननु तथाप्यविद्यात्मक एवेत्यत्र किं बीजं तत्राह—तस्या एवेति । अविद्याया एव कालिकसंबन्धेन स्वेतरसर्वहृदयाधारत्वादित्यर्थः । अयं साभासाविद्यारूपः ।

( संदीपनम् )

नन्वेवमपि शब्दाकाशयोस्तादात्म्याद्भवतु शब्दगुण आकाशः । एवं स्पर्शगुणो वायुर्न तु शब्दगुणा पृथिवी तत्राह—तत्र पूर्वपूर्वेति । एवं च कारणगुणक्रमेण पृथिव्यां शब्दो गुणः सिद्धः । एवं वाय्वादावपीत्यवधेयम् । एवमौपनिषदमते प्रसङ्गादन्धकारोऽपि भावरूप एव नाभावरूप इति प्रतिपादयति **एवमविद्यात** इति । तर्हि गगनादिवदन्धकारः किमिति सृष्टिप्रकरणे नोक्तस्तत्राह—

**संसारेति** । दिक्कालौ किमिति नोक्तौ तत्राह—**दिक्कालाविति** । आकाश एव दिगिति भावः । **कालस्त्वविद्येति** । वस्तुतस्तु अविद्यावच्छिन्नं चैतन्यमीश्वरः स एव कालः पुराणादौ तथा दर्शनादिति ।

**तानि च सूक्ष्माण्यपञ्चीकृतानि पञ्च महाभूतान्यमूर्ताख्यानि, कारणैक्यात्सत्त्वरजस्तमोगुणात्मकानि, सत्त्वांशप्राधान्येन ज्ञानक्रियाशक्त्यात्मकमेकं स्वच्छद्रव्यं चित्ररूपमिव मिलित्वा जनयन्ति । तस्य च ज्ञानशक्तिप्रधानोंऽशोऽन्तःकरणं, तच्च बुद्धिर्मन इति चोच्यते । क्रियाशक्तिप्रधानोंऽशः प्राणः, स च पञ्चधा, प्राणोऽपानो व्यान उदानः समान इति । एवमेकैकभूतेभ्यो ज्ञानक्रियाशक्तिभेदात्प्रत्येकमिन्द्रियद्वयं द्वयं जायते । आकाशाच्छ्रोत्रवाचौ, वायोस्त्वक्पाणी, तेजसश्चक्षुःपादौ, अद्भ्यो रसनपायू, पृथिव्या घ्राणोपस्थे ।**

**( लघुव्याख्या. )**

अमूर्तमाह—**तानि चेति** । शब्दादितन्मात्रात्मकानीत्यर्थः । लिङ्गस्य स्वच्छत्वज्ञापनायाह—**सत्त्वांशप्राधान्येनेति** । सत्त्वांशाधिक्ययुक्तानीत्यर्थः । **ज्ञानेति** । ज्ञानक्रिययोर्जननानुकूले ये शक्ती वह्निविशिष्टं धर्मधर्मिणोस्तादात्म्यात्तदात्मकोक्तिः । **एकमिति** । प्रतिजीवं स्थूलशरीरवदेकं चित्प्रत्तिविम्बयोग्यं सकलवृत्त्याश्रयीभूतमित्यर्थः । एतेन वक्ष्यमाणसप्तदशराशिरूपमेव लिङ्गशरीरं नावयव्यन्तरं कल्पनागौरवादित्यर्वाचीनानामुक्तिर्निराकृता । 'तमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति श्रुतेः, 'पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमित्याचार्योक्तेश्च विरोधात् । 'कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः स युज्यते । स सप्तदशकेनापि राशिना युज्यते त्वसाविति मोक्षधर्मे राशिपदोक्तिस्तु तार्किकाभिमतावयवावयविभावनिरासाय न धर्मिप्रतिषेधायेति न कोऽपि विरोध इति संक्षेपः । ननु विजातीयभूतानां कथमेकवस्त्वारम्भकत्वं तत्राह—**चित्ररूपमिवेति** । यथा नीलपीतादिगुणाः परस्परमेलने सति चित्ररूपं जनयन्ति तथा विजातीयभूतान्यपि परस्परमेलने सति चित्रद्रव्यमुत्पादयन्तीत्यर्थः । एवं लिङ्गशरीरं व्युत्पाद्य तस्यावयवान् विभजते—**तस्य चेति** । लिङ्गस्य चेत्यर्थः । प्रधानः उपहितः विशिष्ट इति यावत् । **द्विधेति** । बुद्धेरप्यहमित्याकारनिश्चयतदन्यनिश्चयरूपवृत्तिभेदेनाहङ्कारोऽनहङ्कारश्चेति द्वैविध्यम् । मनोऽपि द्विविधम् । संशयवृत्त्या चित्तं, सङ्कल्पादिवृत्तिभिरचित्तं, 'कामः सङ्कल्पो विचिकित्सेति श्रुतेः । **प्राण इति** । 'हृदि प्राणो गुदेऽपानः समानो नाभिदेशगः । उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरग इत्युक्तेर्हृदयाद्यवच्छिन्नक्रियाजनकत्वादिकमेव प्राणत्वादिकमित्यर्थः । श्रोत्रत्वगक्षिरसनघ्राणमनांस्येवेन्द्रियाणि ज्ञानजनकत्वात्, 'मनःषष्ठानीन्द्रियाणीति भगवदुक्तेश्च न वागादीनीति तार्किकाः । स्तन्न साधीयः, 'दशेमे पुरुषे प्राणा इत्यादिश्रुतिविरोधात् । तत्र वाक् च वक्तव्यं च, हस्तौ चादातव्यं च, पादौ च गन्तव्यं च पायुश्च विसर्जयितव्यं च, उपस्थश्चानन्दयितव्यं चेत्यादिना वागादीनामपीन्द्रियत्वसूचनात् । तथा च प्राणेतरत्वे सत्यपञ्चीकृतभूतोपादानकत्वमेवेन्द्रियत्वं, न ज्ञानकरणत्वमात्रमित्यभिप्रेत्य ज्ञानकर्मप्रधानफलभेदतोऽतिभिन्नमिन्द्रियं विशिष्य सकारणं दर्शयति—

शक्तिभेदादिति द्वयं द्वयमित्यत्र योजना। तथाचैकैकभूतेभ्यो ज्ञानशक्तिमदेकं क्रियाशक्तिमदेकं चेत्यर्थः।

( संदीपनम् )

अव्याकृतपदार्थमुक्त्वा अमूर्तमाह–तानि चेति जनयन्तीति तानीति संबध्यते तस्य चेति ज्ञानक्रियाशक्त्यात्मकस्य द्रव्यस्येत्यर्थः। एवं च प्राणान्तःकरणयोरैक्यं धर्मभेदाद्भेद इति तत्वं द्वयंद्वयमित्यादिना ज्ञानशक्तिप्राधान्येनैकं ज्ञानेन्द्रियं क्रियाशक्तिप्राधान्येनापरं कर्मेन्द्रियमिति विभागः। तदेवाह–आकाशाच्छ्रोत्रवाचावित्यादिना।

अत्र 'तेजोमयी वागिति श्रुतेः, तैजसी वाक्, पादस्तु नाभस इति केचित्। शब्दव्यञ्जकेन्द्रियत्वेन श्रोत्रवद्वाचो नाभसत्वं, पादचिकित्सायां च चक्षुषः स्वास्थ्यदर्शनाच्चक्षुर्वत्पादस्यापि तैजसत्वमिति युक्तमुत्पश्यामः। तेजोमयत्वश्रुतिस्तु मनसः पञ्चभूतकार्यस्याप्यन्नमयत्वश्रुतिवदुपकार्यतया व्याख्येया। मनसश्च पञ्चभूतगुणग्राहकत्वेन तद्वत्त्वनिश्चयादित्यन्यदेतत्।

( लघुव्याख्या. )

शब्दव्यञ्जकेति। वागिन्द्रियस्य शब्दोत्पादनद्वारा शब्दव्यञ्जकत्वम्। पादचिकित्सेति। तथा च संस्कृतस्य चक्षुषः स्वास्थ्योत्पादनद्वारा रूपव्यञ्जकत्वात्तैजसत्वमित्यर्थः। एवं त्वचः स्पर्शव्यञ्जकत्वेन, पाणेः क्रियाशक्त्याधिक्येन वायवीयत्वम्। स्पर्शो हि वायावेव प्रथममभिव्यक्तत्वाद्वायोरेव गुणो वायूपादानत्वाद्भूतान्तरेऽनुगच्छति। एवं वायोरेव क्रियाशक्तिश्चलनत्वात्। तत्संबन्धादन्यत्रापि। रसनेन्द्रियस्य रसव्यञ्जकत्वेन जलीयत्वं पायोस्तु जलवन्मलशोधकत्वेन तत्। घ्राणस्य गन्धव्यञ्जकत्वेन पार्थिवत्वम् उपस्थस्य च शुक्राभिव्यञ्जकत्वेन। तदुपकार्यतयेति सुवर्णादिभक्षणोपकार्यतयेत्यर्थः। वायुसुजामपि मोददर्शनेन 'अन्नमयं हि सोम्य मन इत्यादिश्रुतेर्यथा(श्रुता)ऽर्थबाधेनोपष्टम्भकत्वरूपार्थमात्रपरत्वान्मनसो मौक्तिकत्वे मानत्वायोगादनुमानमेवोपन्यस्यति–मनस इत्यादि। पञ्चभूतासाधारणगुणवत्त्वनिश्चयात्पञ्चभूतात्मत्वमिति शेषः। तथाचायं प्रयोगः–मनः पञ्चभूतगुणवत् पञ्चभूतारब्धं च, पञ्चभूतासाधारणगुणग्राहकत्वात्। यद् यद्भूतासाधारणगुणग्राहकं भवति तत्तद्भूतासाधारणगुणवत्तद्भूतोपादानकं च, यथा घ्राणादिकं पृथिव्याद्यसाधारणगुणगन्धादिग्राहकं, गन्धादिमत्पार्थिवमिति दिक्। ननु श्रुतिविरोधात्तर्कोऽप्रमाणं तत्राह–अन्यदिति। अनुमानस्य 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामतीति बृहदारण्यकश्रुत्याद्यनुकूलत्वान्नाप्रामाणिकत्वम्। तथाच भौतिकत्वमेव युक्तमिति भावः। स प्रमाता तेजोमात्राः तेजःप्रधानभूतसूक्ष्मांशान् समभ्याददानः सम्यक् निःशेषमाभिमुख्येनोपसंहरमाणः हृदयमेव हृदयस्थां बुद्धिमेव अन्ववक्रामति अन्वागच्छतीत्यर्थः। अत्र भूतसूक्ष्मसंहारपूर्वकसंहारोक्तेरुपसंह्रियमाणस्यापञ्चीकृतभूतारब्धत्वं ज्ञापितम्। नच स्पर्शवत्त्वेन द्रव्यारम्भकत्वापत्तिः, चक्षुरादितुल्यत्वाभ्युपगमादित्यत्र विस्तरः।

  

( संदीपनम् )

प्राचो मतमाह—अत्रेति । एषु मध्य इत्यर्थः । एकदेशिमतेऽस्वरसं व्यञ्जयन् स्वमतमाह—शब्दव्यञ्जकत्वेनेति । एवं च प्रयोगः—वाक् नाभसी शब्दव्यञ्जकेन्द्रियत्वात् श्रोत्रवत् । अदृष्टादिसामान्यकारणे व्यभिचारादाह-इन्द्रियत्वादिति । तर्कस्तु लाघवाख्य एव धूमत्वावच्छेदेन वन्हिजन्यत्ववच्छब्दव्यञ्जकेन्द्रियत्वावच्छेदेन नाभसत्वमिति । तर्हि तेजोमयी वागिति श्रुतेः का गतिरिति चेत्तत्राह—तेजोमयत्वश्रुतिस्त्विति । तत्रान्नमयं हि सौम्य मन इति श्रुतेरन्नमयत्वश्रवणेऽपि मनसोऽन्नोपकार्यत्ववदत्रापि वाचः तेजस उपकार्यत्वमित्यर्थः । ननु मनसः पञ्चभूतकार्यत्वे किं प्रमाणं तत्राह—मनसश्चेति । तद्वत्त्वनिश्चयात् पञ्चभूतकार्यत्वनिश्चयात् ।

**एतेषामधिष्ठातारो देवा अपि ज्ञानक्रियाशक्तिप्रधाना दिगग्नी, वातेन्द्रौ, आदित्यविष्णू, मित्रावरुणौ, अश्विप्रजापती इति ।**

( लघुव्याख्या. )

एतेषां ज्ञानकर्मेन्द्रियाणामधिष्ठातारः प्रवर्तकाः । ज्ञानेति ज्ञानक्रिययोर्जननानुकूलशक्तिमन्त इन्द्रियगोचरापरोक्षज्ञानस्य जीवे बाधेन देवानामेव तादृशज्ञानवतामधिष्ठातृत्वमुचितमिति भावः ।

( संदीपनम् )

श्रुतिस्मृतिप्रसिद्धाधिष्ठातृदेवान् प्रसङ्गादाह—एतेषामिति । ज्ञानक्रियेति । ज्ञानशक्तिप्राधान्यं ज्ञानेन्द्रियाधिष्ठातृदेवानां क्रियाशक्तिप्राधान्यं कर्मेन्द्रियाधिष्ठातृदेवतानामिति विवेकः । दिगग्नी इति । श्रोत्रस्य दिगधिष्ठातृदेवता 'दिशः श्रोत्रमितिश्रुतेः । एवं वागिन्द्रियस्याप्यधिष्ठातृदेवता अग्निः । एवमुत्तरत्रापि यथासंख्येन बोध्यम् ।

**तत्र ज्ञानशक्तिसमष्टिरन्तःकरणं, क्रियाशक्तिसमष्टिः प्राणः, शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि, त्वक्चक्षुषी स्वग्राह्यगुणाश्रयं द्रव्यमपि गृह्णीतः, श्रोत्रमपि चक्षुर्वद्गत्वा ग्राहकं दूरेशब्द इति प्रत्ययात्, वचनादानगतिविसर्गानन्दजनकानि वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि । एतच्च सर्वं मिलित्वा सप्तदशकं, लिङ्गं, ज्ञानशक्तिप्राधान्येन हिरण्यगर्भ इति, क्रियाशक्तिप्राधान्येन सूत्रमिति चोच्यते । अयममूर्तः पदार्थः कार्यत्वाद्व्यष्टौ समष्टौ च जीवोपाधिरेव ।**

( लघुव्याख्या. )

ज्ञानशक्तिसमष्टिः ज्ञानजनकेन्द्रियाणां सहकारि, क्रियाशक्तिसमष्टिः कर्मेन्द्रियाणां सहकारी । शब्देत्यादि शब्दादीनामिव तद्वृत्तिजातीनामपि ग्राहकाणि बोध्यानि । गृह्णीत इति । द्रव्यविषयकयोश्चाक्षुषस्पर्शनयोरुपलम्भादिति शेषः । घ्राणज-रासन-श्रावणप्रत्यक्षं तु द्रव्याविषयकमेव । द्रव्यग्रहणे घ्राणादीनामसामर्थ्यात् । कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्, तच्च निरवयत्वान्न वहिर्गच्छति किंतु वीचीतरङ्गन्यायेन प्राप्तशब्दस्यैव ग्राहकमिति तार्किकास्तन्न सम्यक्, आत्मन आकाशः सम्भूत इति श्रुत्या जन्यत्वोक्तेराकाशस्य निरवयत्वायोगात्, वीचीतरङ्गन्यायेन शब्दानन्त्यकल्पने गौरवाच्च चक्षुरादिवच्छ्रोत्रमपि

बहिर्गत्वैव गृह्णातीत्याह—श्रोत्रमिति। गत्वा शब्दाद्यवच्छेदकदेशेन संयुज्य ग्राहकं शब्दप्रत्यक्षजनकम्। दूरेति। श्रुतः शब्दो दूरस्थो विलक्षणध्वनिविशिष्टत्वादित्यनुमितेः। तथाच विषयतासंबन्धेन शब्दप्रत्यक्षं प्रति स्वसंयुक्तत्वावच्छिन्नत्वसंबन्धेन श्रोत्रं कारणमिति दिक्। भूतसूक्ष्माणि मनोबुद्धी दशेन्द्रियाणि लिङ्गं ननु पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितमित्याचार्योक्तं, प्राणस्यान्तःकरणे प्रवेशात्, भूतसूक्ष्माणि विहाय गमनायोगात्तेषामवश्यकत्वादिति साङ्ख्यमताभिमानिनां मतनिरासायाह—एतच्चेति। एतदेव सर्वं, पञ्चप्राण—मनोबुद्धिदशेन्द्रियाणि तदाश्रयश्च मिलित्वा धर्मधर्मिभावापन्नीभूय सप्तदशकं सप्तदशावयवा विद्यन्ते यस्य तत्सप्तदशकम्। सप्तदशावयवकधर्मिरूपं लिङ्गं लिङ्गशरीरम्। अयं भावः—भूतसूक्ष्माणां न लिङ्गशरीरप्रवेश उचितः, भोक्तृकरणभिन्नत्वेन साक्षाद्भोगोपघायकत्वाभावात्। नापि प्राणस्यान्तःकरणे प्रवेश उचितः, सत्त्वप्रधानाऽपञ्चीकृतमहाभूतकार्यत्वे सति ज्ञानशक्तिसमष्टित्वमन्तःकरणत्वम्। रजःप्रधानापञ्चीकृतमहाभूतकार्यत्वे सति क्रियाशक्तिसमष्टित्वं प्राणत्वमिति लक्षणभेदात्। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणिचेति श्रुत्यापि भेदोक्तेश्च। अतएव नेन्द्रियसामान्यवृत्तिरूपोऽपि, तस्य चैकत्वेऽपि पूर्वोक्तावान्तरभेदमादाय भोगवैचित्र्याधायकत्वादवान्तरभेदेन भिन्नस्यैव लिङ्गप्रवेशोक्तिः। नागकूर्मकृकलदेवदत्तधनञ्जयादीनां तु लिङ्गवृत्तिभोगोपघायकत्वाभावान्न लिङ्गप्रवेशसंभावनापीति दिक्। एवं मनोबुद्ध्योः संशयत्वनिश्चयत्वरूपविरुद्धधर्माध्यासादत्यन्तभिन्नयोरेव पृथगुक्त्या प्रवेशो न चित्ताहङ्कारयोस्तयोरन्तःकरणविभाजकत्वाभावात्। लिङ्गत्वं यावत्संसारकालमनपायितयात्माभिव्यञ्जकम्। अभिव्यञ्जकत्वं त्वहमिति व्यवहारविषयताप्रयोजकत्वे सति बोधोपघायकत्वमित्यन्यत्र विस्तरः। ज्ञानशक्तीति। ज्ञानशक्तिसमष्टीत्यर्थः। हिरण्यगर्भेति। हिरण्यमिव प्रकाशजनको ज्ञानशक्तिरूपो गर्भो यस्येति। क्रियाशक्तीति। क्रियाशक्तिसमष्टीत्यर्थः। सूत्रं सर्वशरीरावच्छिन्नक्रियाजनकत्वेन सूत्रवदनुस्यूतम्। कार्यत्वादिति। सोपाधिकस्येश्वरस्य सर्वकार्यजनकत्वात् कार्यं नेश्वरोपाधिरिति भावः।

( संदीपनम् )

प्राणान्तःकरणयोर्विशेषमाह—तत्रेति। यथासंख्येन शब्दादीनां ग्राहकाणीन्द्रियाण्याह—शब्देत्यादिना। त्वक्चक्षुषोस्तु द्रव्यग्राहकत्वरूपविशेषमाह—त्वक्चक्षुषी इति। चक्षुर्वत् श्रोत्रस्यापि पञ्चभूतकार्यत्वेन क्रियाशक्तिमत्त्वाद्दूरदेशगमनसामर्थ्यमतो गत्वैव गृह्यत इत्याह—चक्षुर्वदिति। तर्कमाह—दूरे शब्दइति। सकार्याणि ज्ञानेन्द्रियाणि विविच्योक्त्वा कार्यसहितानि कर्मेन्द्रियाण्याह—वचनेति। एषु चेन्द्रियेषु प्रमाणस्मृतयः। तासु च याज्ञवल्क्यस्मृतिः—गन्धरूपरसस्पर्शशब्दाश्च विषयाः स्मृताः। नासिकालोचने जिह्वा त्वक्छ्रोत्रं चेन्द्रियाणि तु। हस्तौ पायुरुपस्थश्च वाक् च पादौ च पञ्च वै। कर्मेन्द्रियाणि जानीयान्मनश्चैवोभयात्मकमिति। एवं मनुस्मृत्यादावपि बोध्यम्। इदानीं प्रसङ्गादिहलोकपरलोकगामि लिङ्गशरीरं जीवोपाधिभूतमाह—एतच्चेति। तस्यापि द्वैविध्यमाह—ज्ञानशक्तिप्राधान्येनेत्यादिना। ननु किमयं पदार्थो मूर्तोऽमूर्तो वा। तत्रान्त्यमेव सिद्धान्त्यभिमतमित्यभिप्रेत्याह—अयममूर्तः पदार्थ इति।

**तानि च तथाभूतानि भूतानि, भोगायतनं शरीरं भोग्यं च विषयमन्तरेण भोगं जनयितुमशक्नुवन्ति, जीवकर्मप्रयुक्तत्वात्स्थौल्याय पञ्चीकृतानि**

भवन्ति। तत्र च प्रत्येकं पञ्च भूतानि द्विधा विभज्यन्ते, तत्रैकैको भागश्चतुर्धा विभज्यते, तद्भागचतुष्टयं च स्वभागं विहायेतरभूतचतुष्टार्धभागे प्रविशतीति स्वस्यार्धभागेनेतरेषामष्टमभागेन च पञ्चीकरणान्मेलनेऽप्याधिक्यादाकाशादिशब्दप्रयोगः।

( लघुव्याख्या. )

तानि अपञ्चीकृतानि तथाभूतानि सूक्ष्माणि शरीरं स्थूलम्। अशक्नुवन्तीतिशतृप्रत्ययान्तम्। स्थौल्याय शरीरनिष्ठस्थौल्यप्रयोजकस्थौल्यं लब्धुम्। पञ्चीकरणस्वरूपमाह—तत्र चेत्यादि। तत्र द्विधाकृतभागयोः। स्वभागं द्विधाकृतभागयोश्चतुर्धात्वानापन्नमवशिष्टमेकम्। इतरेषामिति। आकाशादीनामर्धभागप्रविष्टो य इतरेषामेकैको भागः सोऽष्टमस्तेनेत्यर्थः। पञ्चीकरणात् आकाशादीनामचतुष्टयात्मकोऽर्धभाग इतरेषां भागचतुष्टयं चेत्येकैकस्य पञ्चात्मकत्वसंपादनात्। आधिक्यात् आकाशादिभागचतुष्टयस्याकाशादिशब्दवाच्ये प्रविष्टवाय्वादिभागापेक्षयाऽधिकत्वात्। तथा च यत्राकाशादेरर्धं तत्राकाशत्वादीनामङ्गीकारात् तत्रैव तद्वाचकाकाशादीनां प्रयोग इति भावः।

( संदीपनम् )

तानि चेति। पञ्चीकृतानि भवन्तीत्यनेनान्वयः। किमर्थं पञ्चीकरणं तत्राह—स्थौल्यायेति। स्थौल्यस्यापि फलमाह—भोगायतनमित्यादिना। शरीरं स्थूलशरीरम्। भोगस्य कारणमाह—जीवेति। जीवकर्मप्रयुक्तत्वात् भोगस्येत्यर्थः। सूक्ष्मस्य भोगायतनत्वं न संभवतीत्यत इदमुक्तमिति बोध्यम्। पञ्चीकरणमेवाह—तत्र चेति। ननु भवतु नाम मेलनं तथाप्याकाशभागस्य सर्वत्राविशिष्टत्वात् क्वचिदाकाशादिपदप्रयोगः क्वचिन्नेतीति किमिति वैचित्र्यं. तत्राह—आधिक्यादिति। यत्राकाशभागाधिक्यं तत्राकाशपदप्रयोगः, यत्र वायुभागाधिक्यं तत्र वायुपदप्रयोग इत्यर्थः। एवं तेजःप्रभृतिष्वपि बोध्यम्। अत्रार्थे बादरायणसूत्रं 'वैशेष्यात्तु तद्वाद इत्यपि प्रमाणं वेदितव्यम्।

अत्र 'त्रिवृतं त्रिवृतमेकैकां करवाणीति श्रुतेः, 'त्रिवृत्कुर्वत उपदेशादिति सूत्राच्च त्रयाणामेव मेलनप्रतीतेस्त्रिवृत्करणमेव केचिन्मन्यन्ते ते वियदधिकरणन्यायेनैव निराकृताः। तथाहि—तैत्तिरीयके 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निरित्यादिश्रुतेः, छान्दोग्ये त्रयाणां तेजोवन्नानां सृष्टिश्रवणेऽपि द्वयोरुपसंहारस्तेजःप्राथम्य-पदार्थधर्मा-पेक्षयाकाशवायुपदार्थयोर्बलीयस्त्वात्। छान्दोग्ये चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादाकाशवाय्वोरचेतनयोर्ब्रह्मकार्यत्वस्यावश्यं वाच्यत्वात्। तत्र पञ्चानामेव मेलनेऽप्यवयुत्यानुवादेन[1] त्रिवृत्करणंत्वोपपत्तिः। त्रिवृतमेवेति तु कल्पनायां वाक्यभेदप्रसङ्गः। 'त्रिवृत्कुर्वत उपदेशादिति सूत्रं त्वनुवादत्वान्न पञ्चीकरणं न्यायसिद्धं बाधितुमुत्सहते। मेलनप्रतीतिस्तु शरीरादौ पञ्चानामविशिष्टैव, पञ्चीकृतपंचमहाभूतानीति च भाष्यकारवचनात्। तस्मादलमनेनानात्मचिन्तनेनेति दिक्।

१ अवयुत्यनुवादेनेति पाठः। २ णश्रुतेरु. पा.।

( लघुव्याख्या. )

अत्र भूतेषु त्रिवृतं त्रिभागं करवाणि करोमि 'संज्ञामूर्तिक्लृप्तिस्त्विति सूत्रप्रथमदलम्। अस्यार्थः—संज्ञा आदित्यादिनाम मूर्तिः रूपं सितासितादि तयोः क्लृप्तिः कल्पनं प्रकटीकरणं तु न जीवात् किंतु त्रिवृत्कुर्वतः तेजोबन्नानि त्रिभागं कुर्वतः परमेश्वरात्। कुतः ? उपदेशात् व्याकरवाणीत्युत्तमपुरुषनिर्देशादित्यर्थः। त्रयाणां तेजोबन्नानां मेलनप्रतीतेः परस्परवैशिष्ट्य-विषयकप्रत्यक्षात् त्रिवृत्करणं भूतत्रयं प्रत्येकं द्विधा विभज्यते, तत्रैकैको भागो द्विधा विभज्यते, तद्भागद्वयं स्वभागं विहायेतरभूतद्वयार्धभागे प्रविशतीति स्वस्याद्वयात्मकेऽर्धभागे इतरयोर्द्वयो-र्मेलनेन त्रिवृत्करणं केचित् वाचस्पतिमिश्राः। तदुक्तं कल्पतरुकारैः—संप्रदायाध्वना पञ्चीकरणं यद्यपि स्थितम्। तथापि युक्तिहष्टत्वाद्वाचस्पतिमतं शुभमिति॥ वियदिति। द्वितीयाध्याय-तृतीयपादे वियतोऽनित्यत्वसमर्थक'न वियदश्रुतेरित्यादिसूत्ररचिताधिकरणयुक्त्येत्यर्थः। निरा-करणमेव स्फुटयति—तथाहीति। इत्यादिश्रुतेरित्यादिपदाच्छान्दोग्यीयसप्तमप्रपाठकस्थस्यात्मन आकाश आकाशाद्वायुरित्यादिवाक्यसंग्रहः। छान्दोग्ये 'तत्तेजोऽसृजतेत्यातेषष्ठप्रपाठकस्थ-वाक्ये द्वयोः आकाशवाय्वोः। प्राथम्येति। प्राथम्यरूपो यः पदार्थधर्मः तदपेक्षया। यथा वेदं कृत्वा वेदिं करोतीति श्रौतक्रमस्य बाधेन वेदवेदिकरणयोर्मध्ये 'क्षुत आचामेदिति स्मार्तमाचमनं विधीयते पदार्थधर्मक्रमापेक्षया पदार्थस्य बलवत्त्वात्, तथा प्रथमोक्त्या लब्धस्य तेजसि प्राथम्यस्य बाधेनाकाशवाय्वोः सृष्टिबोधकवाक्ये उपसंहारः कल्प्यत इति भावः। उपसंहारे हेत्वन्तर-माह—छान्दोग्ये चेति। सर्वेति। 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति सर्वविज्ञान-निर्देशात्। ब्रह्मकार्यत्वस्येति। अचेतनत्वेन ब्रह्मस्वरूपत्वासंभवाद्ब्रह्मकार्यत्वेनाकाशवाय्वोर्ब्रह्म-तादात्म्यं स्वीकृत्यैव ब्रह्मज्ञानेनाकाशवाय्वोर्ज्ञानमुपपाद्यमिति भावः। अवयुत्यनुवादेन समुदाया-देकदेशस्य पृथगुक्त्या, पञ्चीकरणस्य न्यायसिद्धस्य त्रिवृत्करणरूपैकदेशोक्त्येति यावत् त्रिवृत्करणो-पपत्तेः।'त्रिवृतं त्रिवृतमेकैकां करवाणीति त्रिवृत्करणस्योक्तिसहत्वादित्यर्थः। नन्वब्भक्षो वायु-भक्ष इत्यादिवत्सावधारणेयमुक्तिः तथाच त्रिवृतमेव न पञ्चीकरणमित्यर्थस्तत्राह—त्रिवृतमेवेति। सावधारणत्वकल्पनायामित्यर्थः। वाक्यभेदप्रसङ्गः त्रिवृतं करवाणि पञ्चीकृतं न करवाणी-त्यर्थद्वयभेदेन तद्बोधकवाक्यभेदः स्यादित्यर्थः। अनुवादकत्वात् श्रुत्यनुदितार्थनिर्देशरूप-त्वात्। न्यायसिद्धं श्रुत्यनुकूलतर्कसिद्धम्। श्रुतिमानागोचरत्वशङ्कां परिहृत्य प्रत्यक्षागो-चरत्वशङ्कां परिहरति मेलनेति। मेलनविषयकप्रतीतिः साक्षिरूपा चाक्षुषादिरूपा वेत्यर्थः। अविशिष्टैव तुल्यैव। पृथिव्यां जलतेजसोरिव तयोः पृथिव्या इवान्वयधीवद्वाय्वाकाशयोरपि पृथिवीजलतेजोभिः सह परस्परमन्वयधीरस्त्येव। वायोर्गन्धवत्त्वेनाकाशस्य नीलरूपवत्त्वेन प्रतीतेरिति भावः। सिद्धान्तसिद्धत्वादपि पञ्चीकरणमावश्यकमित्याह—पञ्चीकृतेति। पञ्ची-करणनामकग्रन्थस्थमिति शेषः। श्रुतिमूलकोऽप्यनात्मविचारो न पूर्वपक्षसिद्धान्तैः समर्थयितु-माग्रहेण युक्तो व्यर्थत्वादित्यभिप्रेत्य झटिति प्रकृतविचारमुपसंहरति—तस्मादिति। लोकत एवा-वगतस्य श्रुतितर्काविषयत्वेन विफलत्वादित्यर्थः।

## ( संदीपनम् )

अत्र शङ्कते—अत्र त्रिवृतमिति। एकैकां पृथिव्यादिव्यक्तिं त्रिवृतं पृथिव्यप्तेजोभागसंयुक्तां करोमीत्यर्थः। श्रुतेः छान्दोग्यश्रुतेः। 'त्रिवृत्कुर्वत उपदेशादिति सूत्रादिति। 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशादितिसूत्रैकदेशादित्यर्थः। इद—मधिकरणं द्वितीयाध्यायस्य चतुर्थपादे सत्प्रक्रियायां तेजोबन्नानां सृष्टिं विधायोपदिश्यते—'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति। तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति। तत्र संशयः—किं जीवकर्तृकमिदं नामरूपव्याकरणमाहोस्वित् परमेश्वरकर्तृकमिति। तत्र प्राप्तं तावत् जीवकर्तृकमेवेदं नामरूपव्याकरणमिति, कुतः अनेन जीवेनात्मनेति विशेषणात्, यथा लोके चारेणाहं परसैन्यमनुप्रविश्य सङ्कलयानीत्येवं जातीयके प्रयोगे चारकर्तृकमेव तत्सैन्यसङ्कलनं हेतुकर्तृत्वादेव तावद्राजात्मन्यध्यारोपयति सङ्कलयामीत्युत्तमपुरुषप्रयोगेण, एवं जीवकर्तृकमेव सन्नामरूपव्याकरणं हेतुकर्तृत्वाद्देवतात्मन्यध्यारोपयति व्याकरवाणीत्युत्तमपुरुषप्रयोगेण। अथ च डित्थडवित्थादिषु नामसु घटशकटादिरूपेषु च जीवस्यैव व्याकृतत्वं दृष्टं तस्माज्जीवकर्तृकमेवेदं व्याकरणमित्येवंप्राप्तेऽभिधत्ते—संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत इति। तुशब्देन पक्षं व्यावर्तयति संज्ञामूर्तिरिति। नामरूपव्याक्रियेत्येतत्। त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति, त्रिवृत्करणे तस्य निरपवादात् कर्तृत्वनिर्देशात् येयं संज्ञामूर्तिक्लृप्तिश्चाग्निरादित्यश्चन्द्रमाविद्युदिति, तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु प्रत्याकृति प्रतिव्यक्ति चानेकप्रकारा, सा खलु परमेश्वरस्यैव तेजोबन्नानां निर्मातुः कृतिर्भवितुमर्हति, कुतः उपदेशात्। तथाहि सेयं देवतैक्षतेत्युपक्रम्य व्याकरवाणीत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याकर्तृत्वमिहोपदिश्यत इति। वियदधिकरणार्थमाह—तथाहीति। सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहुस्यां प्रजायेयेति तदपोऽसृजतेत्यनेन तदनन्तरं ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्तेत्यनेन च छान्दोग्ये त्रयाणां सृष्टिश्रवणेऽपि द्वयोरुपसंहारः। अस्यां प्रतिज्ञायां हेतुमाह—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुरित्यादिश्रुतेः त्रयाणां पृथिव्यप्तेजसां द्वयोर्वाय्वाकाशयोःयद्यप्युपसंहारेणापाततश्छान्दोग्यश्रुतिविरोधः परिहृतस्तथापि छान्दोग्यश्रुतेस्तेजसः प्राथम्यभङ्गस्तथाच कथमुपसंहारस्तत्राह—तेजसः प्राथम्येति। तेजोनिष्ठं यत्प्राप्तं पाठक्रमेण प्राथम्यं तस्य तेजोरूपस्य तेजःपदार्थस्य धर्मत्वात् तदपेक्षया वाय्वाकाशयोः प्राबल्यम्। वाय्वाकाशयोः पदार्थत्वादित्यर्थः। दृष्टं च पूर्वमीमांसायां पदार्थधर्मापेक्षया पदार्थस्य बलवत्त्वम्। वाय्वाकाशयोरुभयोरावश्यकोपसंहारे छान्दोग्यश्रुतिसंमतिमाह—छान्दोग्ये चेति। येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्यादिप्रतिज्ञा हीयेत वाय्वाकाशयोर्ब्रह्मकार्यत्वाभावेन ब्रह्मज्ञानेन तयोर्ज्ञानं न स्यात्। नह्यकारणस्य कलधौतस्य ज्ञाने तदकार्यस्य कनककुवलयस्य ज्ञानमिति कश्चित्प्रेक्षावानङ्गीकरोतीति दृष्टम्। कथं तर्हि त्रिवृतं करवाणीत्युक्तिस्तत्राह—तत्रेति। अवयुत्यानुवादेनेति। संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यत इतिन्यायमनुसृत्याह—त्रिवृतमिति। सृष्टिप्रतिपादकछान्दोग्यबृहदारण्यकादिश्रुतिजाते वाक्यभेदप्रसङ्गो दोष इत्यर्थः। इदं च स्पष्टमाकरे। एवमपि भगवद्बादरायणमेवास्तु त्रिवृत्करणे प्रमाणमत आह—त्रिवृत्कुर्वत इति। अत्र च त्रिवृत्कुर्वत इत्यनेन त्रिवृत्कुर्वतः सतः परमेश्वरात् नामरूपसृष्टिरुक्ता, नतु त्रिवृत्करणम्। तथाच त्रिवृत्करणांशे तस्य तात्पर्याभावान्न तत्र प्रमाणमित्यर्थः। मेलनेति। अत्र च प्रमाणं पञ्चभूतात्मको देहो पञ्चसु-

प्रलयं गत इत्याद्याः स्मृतयः । पञ्चीकरणे भगवत्पादवचनमपि प्रमाणमित्याह—पञ्चीकृतेति । पञ्चीकरणमुपसंहरति—तस्मादिति ।

**तानि च पञ्चीकृतानि पञ्च महाभूतानि मूर्ताख्यानि मिलित्वैकं कार्यमिन्द्रियाणामधिष्ठानं भोगायतनमुत्पादयन्ति तदेव शरीरमित्युच्यते । तत्र सत्त्वप्रधानं देवशरीरं, रजःप्रधानं मनुष्यशरीरं, तमःप्रधानं तिर्यगादिस्थावरान्तं शरीरम् । तस्य च शरीरस्य पाञ्चभौतिकत्वेऽपि चित्ररूपस्येव क्वचिन्न्यूनाधिकभावो भूतानां न विरुध्यते । एवं विषया अपि पञ्चीकृतैकैकभूतजन्याश्चतुर्दशभुवनाख्या ऊर्ध्वमध्याधोभावेन सत्त्वरजस्तमोंशप्रधाना घटादयश्च । एतच्च सर्वं ब्रह्माण्डाख्यं विराडिति मूर्तमिति चोच्यते ।**

( लघुव्याख्या. )

प्रक्रान्तं पुनराह—तानि चेति । पञ्चीकृतानीत्यर्थः । पञ्च भूतानि बहिरिन्द्रियैः शब्दस्पर्शरूपरसगन्धवत्तया ग्रहीतुं योग्यानि शान्तघोरमूढात्मकानि मिलित्वा यथायोग्यं गुणप्रधानभावेनैकत्रीभूय अधिष्ठानं संयोगसंबन्धेनाश्रयः तदेव इन्द्रियाणामाश्रय एव त्वगिन्द्रियस्य साक्षादाश्रयः शरीरमिति विवरणोक्तलक्षणात् । तिर्यगादि पश्वादि । चित्ररूपस्येवेति । यथा नीलपीतादिनानासमुदायस्य मध्ये कस्यचिद्रूपस्य रूपान्तरावच्छेदकावयवपरिमाणापेक्षयाऽधिकपरिमाणावयवावच्छिन्नत्वरूपाधिक्यं तथा मनुष्यादिशरीरे पार्थिवभागस्याधिक्यं, देवशरीरे तेजोभागस्य, वरुणलोकस्थशरीरे जलभागस्याधिक्यमित्यर्थः । पृथिव्यादेः सचराचरपृथिव्यादिहेतुत्वमाह—एकैकभूतेति । चतुर्दशभुवनेत्यादि । घनोदकाख्यमहाजलराशिमध्य ऊर्ध्वाधोभावापन्नं संयुक्तं कटाहद्वयमस्ति तन्मध्येऽपि जलराशिस्तदुपरि महानौरिव पञ्चाशत्कोटियोजनविस्तीर्णा महापृथिवी सप्ततिसहस्रयोजनोन्नता । तस्या दशदशसहस्रयोजनपरिमितभागेभ्योऽधस्तादेकैकं पातालमित्थमतल-वितल-सुतल-रसातल-तलातल-महातल-पातालभेदेन सप्त पातालानि स्वर्लोकादपि रम्याणि तस्या उपरि पादगम्यो देशो भूर्लोकः । तदुपरि भुवः स्वर्महर्जनस्तपः सत्यमिति षड्भुवनानि । तान्येतानि चतुर्दश भुवनानि संयुक्तकटाहद्वयमध्यस्थानि । कटाहद्वयस्योर्ध्वमपि घनोदकाख्यो महाजलराशिरस्ति स एव त्रिविक्रमाख्यविष्णुचरणसरोजाङ्गुष्ठदलनिर्भिन्नछिद्रद्वारा कटाहान्तःप्रविष्टः शिशुमारचक्रसुमेर्वादिपतनद्वारा हिमालयमवतीर्णो गङ्गारूपेण त्रिलोकीं पावयतीति भावः । ऊर्ध्वेत्यादि । 'ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसा इति भगवद्वाक्येनोर्ध्वादिलोकानां सात्त्विकादिपुरुषप्राप्यत्वोक्तेः सत्त्वादिप्रधाना इत्यर्थः ।

( संदीपनम् )

तानि च तथाभूतानि भूतानि भोगायतनं शरीरं भोग्यमन्तरेणेत्यादिना यच्छरीरमुक्तं तदिदानीं कथयति—तानि चेति । इन्द्रियं विना भोगो न संभवतीत्यत उक्तमिन्द्रियाणामधिष्ठानमित्यादि । तत्रापि देवादिशरीरविभागमाह—तत्रेति । पाञ्चभौतिकत्वे समाने कस्यचित् पृथिवीभागाधिक्यं, कस्यचिज्जलभागाधिक्यं, कस्यचित्तेजोभागाधिक्यमित्यादिभेदः कथं तत्राह—तस्य

चेति। शरीरमुक्त्वा विषयानाह—एवं विषया अपीति। चतुर्दशभुवनानि भूर्भुवःस्वर्महर्जन-स्तपःसत्याख्यानि सप्तोपरि, अतलवितलपातालसुतलरसातलतलातलमहातलाख्यानि सप्ताधोऽधः। सत्त्वरजस्तमोंऽशप्रधाना इत्यस्य पूर्वेणान्वयो नतु घटादय इत्यत्र।

**अयमौपनिषदः सृष्टिक्रमः, एतद्विपरीतो लयक्रमः। मूर्तं पञ्चीकृत-पञ्चमहाभूततत्कार्यात्मकं विराडाख्यं, पृथिव्याद्येकैकभूतलयेनामूर्तेऽप-ञ्चीकृतपञ्चमहाभूतात्मके हिरण्यगर्भाख्ये स्वकारणे लीयते। स एव च दैनंदिनप्रलयः। अमूर्तं चाव्याकृते परमेश्वरोपाधौ। अव्याकृतस्य त्वनादित्वेन कारणाभावान्न लयः। स्वकारणे सूक्ष्मरूपेणावस्थानं लय इति तल्लक्षणात्। अयमेव च प्राकृतप्रलयः।**

( लघुव्याख्या. )

तर्कबलेन नैयायिकसाधितसृष्टिक्रमस्याप्रामाणिकत्वं ज्ञापयिष्यन् स्वोक्तसृष्टिक्रमस्य प्रामा-णिकत्वमाह—अयमिति। प्रतिपादितः सृष्टिक्रम उपनिषत्प्रमाणक इत्यर्थः। तथाच तत्तद्वाद्य-भ्युपगतः सृष्टिक्रमोऽप्रामाणिकः, अश्रौतत्वादिति भावः। एतदिति। सृष्टिक्रमविपरीत इत्यर्थः। 'विपर्ययेण तु क्रमोऽत उपपद्यते चेति न्यायादिति भावः। पृथिव्यादीति पृथिव्या जले तस्य तेजसि तस्य वायौ तस्याकाशे तस्यापञ्चीकृतभूतेषु लयेनेत्यर्थः। दैनंदिनः ब्रह्मणो दिनावसानोत्थः सङ्कर्षणमुखानलेन भूर्भुवःस्वर्लोकानां दाहे सति तत्तापेन महर्लोकस्थेषु जनलोकं गतेषु हिरण्यगर्भस्य सत्यलोकस्थस्य रात्रिर्भवतीति दैनन्दिनप्रलय इत्युच्यते। तत्र महर्लोकस्य तप्तत्वेन निर्जनस्याप्यनाशात्। जनलोकादौ च तापस्याप्यभावाद्विराजः संपूर्णस्य न लयो दैनन्दिनप्रलये, किंतु चतुर्दशभुवनैकदेशावच्छिन्नस्येति ज्ञेयम्। उपाधावित्यत्र लीयत इत्य-नुषज्यते। लयव्यवस्था जन्येष्वेव नाव्याकृत इत्याह—अव्याकृतस्येति। सूक्ष्मरूपेण संस्कार-रूपेण तल्लक्षणात् लयलक्षणात्। प्राकृतः प्रकृतौ भवः प्राकृतः, मायायां संस्काररूपेणाव-स्थितिरूप इति यावत्।

( संदीपनम् )

ननु पुराणादौ महदादिक्रमेणापि सृष्टिः श्रूयते तत्राह—**अयमौपनिषदः सृष्टिक्रम** इति। भव-त्वेवं सृष्टिक्रमो लयक्रमस्तु कीदृश इत्यत आह—**एतद्वीपरीत** इति। स्वस्वकारणे तत्तत्कार्यस्य सूक्ष्मरूपेणावस्थानमिति वैपरीत्यं तदेवाह—**पञ्चीकृते**ति। तत्रापि क्रममाह—**पृथिव्यादी**ति। प्रलयो हि त्रिविधः श्रूयते, तत्रायं कतमस्तत्राह—**स एव** चेति। अयं यः क्रम उक्तः स एव चेत्यर्थः। भवत्वेवममूर्ते मूर्तस्य लयः। अमूर्तं तु कुत्र प्रलीयते तत्राह—**अमूर्तं** चेति। पूर्वोक्तपरमेश्वरस्यो-पाधावव्याकृत इत्यन्वयः। एवमप्यव्याकृतस्य क्व लय इत्यत आह—**अव्याकृतस्य** त्विति।

**ब्रह्मज्ञानादुच्छेदस्त्वात्यन्तिकः प्रलयः। स च कारणक्रमेणैव, कारणो-च्छेदादेव कार्योच्छेदात्।**

( लघुव्याख्या. )

ब्रह्मज्ञानान्निरुक्ताखण्डाकारवृत्तेः आत्यन्तिकः मूलाविद्यारहितः उच्छेदः नाशो वर्णितप्रकारः कारणक्रमेणेति। आदौ मूलाविद्यारूपकारणोच्छेदः पश्चात्तत्कल्पितकार्यस्येत्यर्थः।

( संदीपनम् )

तृतीयो यो लयः कतमः सः कुतो वा तत्राह—ब्रह्मज्ञानादिति । ब्रह्मज्ञानाद्यः अत्यन्तोच्छेदः सकार्याविद्यायाः स आत्यन्तिको लयः महाप्रलय इत्यर्थः । तत्रापि क्रममाह—स चेति । एवकारार्थस्तु कारणोच्छेदं विना न कार्यस्यात्यन्तोच्छेद इति द्योतयितुम् ।

**सर्वं च सृष्टिप्रलयादिकं स्वप्नसृष्टिप्रलयवदपारमार्थिकमपि वासनादार्ढ्याद्व्यवहारक्षममिति न मायिकत्वेऽपि तुच्छत्वप्रसंगः। यथा चैतत्तथा व्यक्तमाकरे ।**

( लघुव्याख्या. )

ननु भवन्मते दृश्यत्वेन मिथ्याभूतमिदं कथं निरूपणार्हमित्याशङ्क्य न खपुष्पादिवदलीकं किंतु सदसद्विलक्षणमतोऽर्थक्रियाकारित्वान्निरूपणार्हं भवत्येवेत्यभिप्रेत्याह—सर्वं चेति । वासनेति । सत्यत्ववासनेत्यर्थः । व्यवहारक्षममिति । अर्थक्रियाकारीत्यर्थः । मायिकत्वेऽपि तत्त्वदृष्टिकालीनाभावप्रतियोगिमायाविलासत्वेऽपि तुच्छत्वप्रसङ्गः खपुष्पादिवदलीकत्वप्रसङ्गः। सर्वदेशकालवृत्त्यभावप्रतियोगित्वरूपमिथ्यात्वाविशेषेऽपि सत्त्वेन प्रतीयमानत्वादेर्विशेषादिति भावः। व्यक्तमिति । उक्तं हि भाष्यादौ 'ननु भवन्मते जगतोऽसत्त्वेन तुच्छत्वमितिचेत् क एवमाह जगत्तुच्छमिति । आविद्यकत्वाच्छुक्तिरजतादिवत्सदसद्विलक्षणमित्याह ।

( संदीपनम् )

ननु सृष्ट्यादेर्मायिकत्वेनापारमार्थित्वं वदता भवता किं तुच्छत्वमङ्गीकृतं तत्र नेत्याह—सर्वं चेति । अत्र हेतुमाह—व्यवहारक्षममिति । एवं च नेदं तुच्छं व्यवहारसमर्थत्वात् । यत्तुच्छं तन्न व्यवहारसमर्थं यथा गगनकमलादीति व्यतिरेके दृष्टान्तः । किमिदं भवतैवोच्यते क्वचित्केनचित् प्रतिपादितं तत् तत्राह—यथाचेति । न केवलं यथाकथंचित्प्रतिपादितमपि तु भाष्यादौ प्रकटं प्रतिपादितमित्यर्थकं व्यक्तपदम् ।

**एवं स्थिते जागरणादिव्यवस्थोच्यते—**

**इन्द्रियवृत्तिकालिनार्थोपलम्भो जागरणं, तत्र च मूर्तं विराडाख्यं भोग्यं, प्रत्यक्षादिप्रमाणषट्केन व्यवह्रियमाणत्वाद्व्यावहारिकं विश्वाख्येन जीवेनोपभुज्यते। स च देहेन्द्रियादिषु प्रवेशाद्व्यापनाद्वा विश्व इत्युच्यते। विश् प्रवेशने, विष्लृ व्याप्ताविति च स्मरणात् । अत्र यद्यपि विश्वेनामूर्ताख्यमव्याकृतं चानुमानादिनानुभूयते तथापि व्यावहारिकं सर्वं विश्वेनैव ज्ञायत इति नियमात्, स्थूलशरीरोपाध्यभिमानित्वाच्च न तस्यावस्थान्तरव्यापकत्वम्। शुक्तिरजतादिज्ञानानामप्रामाणिकत्वात्तद्विषयस्याव्यावहारिकत्वेऽपीन्द्रियव्यापारकालीनत्वाज्जागरणत्वोक्तिः । ज्ञानोत्पत्तिप्रक्रिया चाधस्तादुक्तैव ।**

( लघुव्याख्या. )

'इन्द्रियैरर्थोपलब्धिर्जागरणमिति पञ्चीकरणग्रन्थे भाष्यकारवचनं, तत्र जन्यत्वस्य तृतीयार्थत्वे साक्षिमात्रभास्याकाशशुक्तिरजतादिज्ञानानां जागरणत्वानापत्तेः, अतस्तत्रेन्द्रियवृत्तिकालीनत्वमेवार्थ इत्यभिप्रेत्य तथैव लक्षणमाह—इन्द्रियेति । स्वसमानाधिकरणा या इन्द्रियाणां वृत्ति-

स्तत्कालीनोऽर्थोपलम्भ इत्यर्थः । स्वपदमुपलम्भपरम् । उपलम्भः साक्षिरूपः । तावन्मात्रं जागरणमित्युक्ते स्वप्नादेरपि जागरणत्वापत्तेः, अत उक्तं स्वसमानाधिकरणेति । प्रमाणषट्केनेति प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिरूपप्रमाणषट्केण । व्यतिरेकव्याप्तिजन्यज्ञानस्यानुमितित्वे मानाभावादर्थापत्तेः,प्रतियोग्यनुपलब्धिजन्याया अभावप्रमाया इन्द्रियसंनिकर्षजन्यत्वे मानाभावादनुपलब्धेश्च पृथगेव प्रमाणत्वमिति भावः । व्यावहारिकं आत्मज्ञानातिरिक्तज्ञानाबाध्यत्वे सत्यात्मज्ञानबाध्यम् । स च मूर्तभोक्ता जीवः प्रवेशात् सच्छिद्रान्तर्भावात् व्यापनात् सर्वमूर्तसंयोगित्वात् 'विष्लृव्याप्ताविति पृषोदरादित्वेन मूर्धन्यस्य षस्य शत्वादिति भावः । अमूर्तं स्वाप्नं वस्तु अव्याकृतं सौषुप्तं व्यावहारिकं व्यवहारक्षममर्थक्रियाकारितायोग्यम् । स्थूलेति । व्यावहारिकस्थूलशरीरेत्यर्थः । अवस्थेति अवस्थान्तरभोक्तृतैजसादिपदवाच्यत्वम् । तथाच जाग्रदवस्था येनैवानुभूयते स एव विश्वपदवाच्य इत्यर्थः । इन्द्रियजन्यं ज्ञानं जागरणमिति विहायेन्द्रियवृत्तिकालीनेत्युक्तेरभिप्रायं स्वयमेव प्रकटयति शुक्तीति । अप्रामाणिकत्वात् अज्ञाताविषयकत्वात् । अव्यावहारिकेति । स्वोचितार्थक्रियाकारित्वाक्षमत्वेऽपि इन्द्रियेति विषयेन्द्रियसंयोगकालीनत्वात् ।

( संदीपनम् )

**एवंस्थित** इति । एवमुक्तक्रमेण प्रपञ्चस्य तुच्छविलक्षणत्वे स्थित इत्यर्थः । अन्यथा प्रपञ्चस्य तुच्छत्वे जाग्रत्स्वप्नादिविभागो न स्यादिति हृदयम् । **इन्द्रियेति** इन्द्रियद्वारा निसृतान्तःकरणमेव वृत्तिः तत्कालीनार्थोपलम्भो जागरणमित्यर्थः । **सचेति** । विश्वाख्यजीव इत्यर्थः । उभयत्रैव हेतुमाह—**विशप्रवेशन** इति । ननु मूर्तवत्सूक्ष्मभूततत्कार्यात्मकममूर्तमव्याकृतमपि च विश्वेन ज्ञेयम् । तथाच कथमुक्तं स्थूलपञ्चभूततत्कार्यं मूर्तं विराडाख्यं विश्वज्ञेयमित्याशङ्कते—**अत्र यद्यपीत्यादिना** । परिहरति—**तथापीत्यादिना** । व्यावहारिकत्वावच्छेदेन विश्वज्ञेयत्वमित्यत्र तात्पर्यात् । व्यावहारिकमात्रं विश्वस्य ज्ञेयं न तैजसादि । इदं तु विश्वेनैवेत्येवकारलभ्यम् । प्रसङ्गादवस्थान्तरसम्बन्धित्वाभावं विश्वस्य साधयति—**स्थूलेति** । ननु इन्द्रियवृत्तिघटितं चेज्जागरणं लक्षणं तदा यस्मिन् पक्षे इदन्त्वमपि प्रातीतिकं तदा इदन्त्वांशे रजतांशे चेन्द्रियवृत्त्यभावात् प्रातीतिकभानकाले इन्द्रियवृत्तिकालीनार्थोपलम्भ इति जागरणमव्याप्तमित्याशङ्क्य परिहरति—**शुक्तिरजतादिज्ञानानामित्यादिना** । **तद्विषयस्येति** । रजतादिज्ञानविषयस्य रजतादेरित्यर्थः । **इन्द्रियेति** । एवं चेन्द्रियवृत्तिकालीनार्थोपलम्भ इति लक्षणं न कर्तव्यमपि तु इन्द्रियव्यापारकालीनार्थोपलम्भ इति, तथाच नाव्याप्तिरिति भावः ।

**एवं जाग्रद्भोगजनककर्मक्षये स्वप्नभोगजनककर्मोदये च तामस्या निद्राख्यया वृत्त्या स्थूलदेहाभिमाने दूरीकृते सर्वेन्द्रियेषु देवतानुग्रहाभावान्निर्व्यापारतया लीनेषु विश्वोऽपि लीन इत्युच्यते, तदा स्वप्नावस्था । तत्रान्तःकरणगतवासनानिमित्त इन्द्रियवृत्त्यभावकालीनोऽर्थोपलम्भः स्वप्नः । तत्र मन एव गजतुरगाद्यर्थाकारेण विवर्तते, अविद्यावृत्त्या च ज्ञायत इति केचित् । अविद्यैव शुक्तिरजतादिवत्स्वाप्नार्थाध्यासाकारेण परिणमते, ज्ञायते चाविद्यावृत्त्यैवेत्यन्ये । कः पक्षः श्रेयान् ? उत्तरः । अविद्याया एव सर्वत्रा-**

र्थाध्यासज्ञानाध्यासोपादानत्वेन कल्पितत्वात्, मनोगतवासनानिमित्तत्वेन च क्वचिन्मनःपरिणामत्वव्यपदेशात्। ननु तदा मनसो दृश्याकारपरिणामानभ्युपगमे द्रष्टृत्वसंभवेनात्मनः स्वयंज्योतिष्ट्वासिद्धिरितिचेत्, न, बहिरिन्द्रियवृत्त्यभावेन तदानीं मनसोऽग्राहकत्वात्तत्सहकारेणैव तस्य ग्राहकत्वनियमात्। सवृत्तिकान्तःकरणावच्छिन्नस्यैव चैतन्यस्य प्रमातृत्वनियमात्तदान्तःकरणसत्त्वेऽपि प्रमात्रभावः।

( लघुव्याख्या. )

स्वप्नावस्थां निरूपयितुमुपक्रमते—एवमिति। कर्मोदये कर्मणः सहकारिसमवधाने। निद्राख्यया 'अभावप्रत्ययालम्बना वृत्तिर्निद्रे'ति सूत्रलक्षितया तामस्या तमोगुणप्रधानया। स्थूलेति। तदुपलक्षितव्यावहारिकसामान्यविषयकाभिमाने दूरीकृते उपरमिते। सर्वेति। दशसु ज्ञानकर्मेन्द्रियेषु। देवतेति। तत्तदिन्द्रियाधिष्ठातृदेवताप्रेरणाभावात् जाग्रद्भोगजनककर्मतिरोधानप्रयुक्तादिति शेषः। निर्व्यापारेति। स्वोचितव्यवहारसामान्याभावविशिष्टतयोपरतेषु भोगोपघायकवृत्त्यात्मत्वोपरमेण कारणात्मतां प्राप्तेष्विति यावत्। विश्वेति। स्थूलभोगोपघायकाभावेन भोगाभावात्तद्भोगभोक्ता विश्वपदाभिधेयो न भवति। तर्ह्येतत्सकलकलत्रसामग्र्यभावे भोग एव तत्र न स्यादित्याशङ्क्य तदुचितां तत्रत्यविशेषसामग्रीमाह—तत्रेति स्वप्नावस्थायां मनोगतो यो जाग्रद्भोगजः संस्कारस्तद्धेतुकः। इन्द्रियेति। बाह्येन्द्रियव्यापाराभावकालीनेत्यर्थः। अर्थेति। वक्ष्यमाणरीत्या प्रातीतिकपदार्थोपलम्भः। तत्र स्वप्ने। गजेति। गजतुरगाद्याकृतिविशिष्टपरिणामवद्भवति। अविद्यावृत्त्या ज्ञानाख्याऽविद्यापरिणामेन ज्ञायते विषयीक्रियते। शुक्तीति। शुक्तिरजताद्याकारेणेव। स्वाप्नेति। अध्यस्यत इत्यध्यासः अर्थश्चासावध्यासश्चेत्यर्थाध्यासः। स्वाप्नश्चासावर्थाध्यासश्चेति स्वाप्नार्थाध्यासस्तदाकृत्या सर्वत्र प्रातीतिकाध्यासस्थले। अर्थेति। अर्थरूपभ्रम—ज्ञानरूपभ्रमपरिणामित्वेनाविद्याया एवोपादानत्वानङ्गीकारेऽत्यन्तोच्छेदानापत्तेः परिणामिनो मनसोऽविनाशात्। तथा विशेषदर्शनोत्तरमपि कदाचित्प्रतीयेत न च प्रतीयते। तस्मान्नाशान्यथानुपपत्त्याऽविद्यैव परिणामिनीति भावः। मनोगतेति। मनोगतवासनाहेतुकत्वेनैव क्वचित् 'स हि स्वप्नो भूत्वेमं लोकमतिक्रामतीति श्रुतौ। नन्वित्यादि। मनसः परिणामानभ्युपगमे मनसो द्रष्टृत्वसम्भवेनेति योजना। द्रष्टृत्वं ग्राहकत्वम्। आत्मनः साक्षिणः। स्वयमिति 'अत्रायं पुरुषः स्वयंज्योतिर्भवतीति श्रुत्युक्तस्वयप्रकाशत्वेत्यर्थः। अत्र स्वप्ने अयं पुरुषः जीवः स्वयं ज्योतिः स्वयमेव व्यवहारसाधनं ज्योतिः। बहिरिति। बहिरिन्द्रियसंप्रयोगाभावेन तदानीं स्वप्ने अग्राहकत्वात् ज्ञानजनकत्वाभावात्। तथाच प्रत्यक्षादिप्रमाणसहकारेणैवार्थग्राहकता नान्यथेति भावः। ननु नायं नियमः, बाह्यप्रमाणसंयोगं विनाप्यात्ममानसस्य तार्किकादिभिरङ्गीकारात्तत्राह—तदिति। बहिरिन्द्रियसहकारेणैवेत्यर्थः। प्रमाणान्तरसापेक्षस्य मनस आलोकादेरिव स्वतःप्रमाणत्वायोगात् नात्मनो मानसं किन्तु शाब्दमेव। अतो न तार्किकोक्तिः साध्वीति भावः। ननु तथापि मनसः सत्त्वे मनोनिष्ठस्य

चिद्रूपस्य प्रमातुः सत्त्वप्रसङ्गस्तत्राह—सवृत्तिकेत्यादि प्रमानुकूलव्यापारवत्त्वरूपं प्रमातृत्वं प्रथमश्लोके वर्णितं वृत्तिं विना न संभवतीति भावः। तदा स्वप्ने। जाग्रत्यपि साक्षिण एव द्रष्टृत्वेपि प्रमाणजवृत्त्यारोहेण विषयीकरणात् प्रमात्रादिभावोऽप्यस्ति। स्वप्ने तु न तथेति विशेषः।

(संदीपनम्)

आदिपदग्राह्यां स्वप्नावस्थां निरूपयितुमारभते—एवमिति जाग्रद्भोगजनके कर्मणि लीन इत्यर्थः। इन्द्रियेष्विति। लीनेष्वित्यनेनान्वयः। तत्रेति। लक्षणादिभिर्निरूपणीय इत्यर्थः। जाग्रत्यति व्याप्तिवारणायाह—इन्द्रियवृत्त्यभावकालीन इति॥ सुखाद्युपलम्भकालीनसुषुप्तावतिव्याप्तिवारणायाह—अन्तःकरणेत्यादि॥ ननु स्वप्नस्य किमुपादानमतस्तदेव मतभेदेनाह—तत्रैवेति। स्वप्न इत्यर्थः॥ प्रश्नोत्तरमाह—उत्तर इति॥ उत्तरः पक्षः श्रेयानित्यर्थः। हेतुमाह—अविद्याया इति॥ तर्हि शास्त्रे स्वप्नस्य मनःपरिणामत्वव्यपदेशः कथं तत्राह—मनोगतेति। स्वप्ने मनसः परिणामानभ्युपगमे बाधकमाशङ्कते—नन्विति। ननु परेषामिव नास्माकं मनः स्वतन्त्रमिन्द्रियमपि तु ज्ञानकर्मोभयेन्द्रियसहकारि, तथाच ज्ञानेन्द्रियव्यापाराभावे कथमापद्यते मनसो ग्राहकत्वमित्याह—न बहिरिति। तर्हि तदानीं मनसः कथं प्रमातृत्वं नेत्याह—सवृत्तिकेति। एवं च वृत्त्यभावात्तदानीं मनसो न प्रमातृत्वमित्यर्थः। एवं च स्वाप्नप्रपञ्चो न प्रमातृभास्यः, अपित्वविद्यावृत्तिसहकारेण साक्षिभास्य इत्यवधेयम्।

**किमधिष्ठानं स्वप्नाध्यासस्य? मनोऽवच्छिन्नं जीवचैतन्यमित्येके, मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमित्यपरे। किं श्रेयः? मतभेदेनोभयमपि।**

(लघुव्याख्या.)

मूलेति। मूलाज्ञानावृतत्वोपलक्षितं ब्रह्माधिष्ठानमित्यर्थः। यथाश्रुतेऽज्ञानावच्छिन्नब्रह्मणः सर्वद्वैताधिष्ठानत्वेनाग्रे तज्ज्ञानात्तन्निवृत्त्युक्त्यसङ्गतेः।

(संदीपनम्)

उपादानं निरूप्याधिष्ठानं निरूपयति—किमधिष्ठानमिति। मनोवच्छिन्नं जीवचैतन्यमिति अज्ञानावच्छिन्नं चैतन्यं [जीव] इति वा बोध्यम्। किं श्रेय इति प्रश्नस्योत्तरमाह—मतभेदेनेति अधिष्ठानज्ञानाद्भ्रमनिवृत्तिरित्येकं मतं, अधिष्ठानज्ञानाद्भ्रमतिरोधानमित्यपरम्। तत्र चाद्ये पक्षे मनोवच्छिन्नजीवचैतन्यमधिष्ठानमन्ते, च मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमिति।

**तथाहि—जाग्रद्बोधेन स्वप्नभ्रमनिवृत्त्यभ्युपगमादधिष्ठानज्ञानादेव च भ्रमनिवृत्तेर्ब्रह्मचैतन्यस्याधिष्ठानत्वे संसारदशायां तज्ज्ञानाभावाज्ज्ञाने वा सर्वद्वैतनिवृत्तेर्न जाग्रद्बोधात्स्वप्ननिवृत्तिः स्यात्, स हि कर्तेति च जीवकर्तृत्वश्रुतेः, आकाशादिप्रपञ्चवत्सर्वसाधारणतापत्तेश्च न मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमधिष्ठानम्। ननु जीवचैतन्यस्यानावृतत्वेन सर्वदा भासमानत्वात् कथमधिष्ठानत्वम्? सत्यम्। तत्रापि स्वप्नाध्यासानुकूलव्यावहारिकसंघातभानविरोध्यवस्थाज्ञानाभ्युपगमात्। स्वप्नदशायां चाहं मनुष्य इत्यादिप्रातीतिकसंघातान्तरभानाभ्युपगमात्, शय्यायां स्वपिमीति शय्यान्तरभानवत्। भानसामग्र्यभावश्च तुल्य एव। नन्वहं मनुष्य इत्यादिव्यावहारिकसं-**

ज्ञातज्ञानस्य प्रमाणाजन्यत्वात्कथमज्ञाननिवर्तकता, अवस्थान्तरान्यथानुपपत्त्या तत्कल्पने सुषुप्तावपि स्वप्नबाधकज्ञानमास्थीयेत, तच्चानिष्टं जाग्रत्वापत्तेरितिचेत्, साध्ववोचः। स्वप्नावस्थाऽज्ञानस्यैवान्तःकरणलयसहितस्य सुषुप्तिरूपत्वान्न तत्र तद्बाधः। जागरणे तु मिथ्यैव स्वप्नोऽभादित्यनुभवादहमितिज्ञानस्य प्रमाणाजन्यत्वेऽपि यथार्थत्वाच्छरीरादिज्ञानस्य च प्रमाणजन्यत्वादवस्थाज्ञानविरोधित्वमनुभवसिद्धम्, विशेषाज्ञानं तु न प्रमाणजन्यवृत्तिमन्तरेण निवर्तते, साक्षिणश्चाविद्यानिवर्तकत्वाभावोऽविद्यासाधकत्वेनैव धर्मिग्राहकमानसिद्ध इति न किंचिदवद्यम्। यावन्ति ज्ञानानि तावन्त्यज्ञानानीति चाभ्युपगमात् शुक्तिज्ञानेनेव व्यावहारिकसंघातज्ञानेनाज्ञाननिवृत्तावपि पुनरपि कदाचिद्रजतभ्रमवन्न स्वप्नाध्यासानुपपत्तिरिति जीवचैतन्यमेवाधिष्ठानमिति पक्षे न कोऽपि दोषः।

(लघुव्याख्या.)

जाग्रद्बोधेन प्रमाणवृत्तिकालीनापरोक्षज्ञानेन निवृत्त्यभ्युपगमात् बाधाभ्युपगमात्। अधिष्ठानज्ञानादेव भ्रमकारणीभूताज्ञानविषयापरोक्षज्ञानादेव। ब्रह्मेत्यादि ब्रह्मचैतन्यस्याधिष्ठानत्वे जाग्रद्बोधात्स्वप्ननिवृत्तिर्न स्यादिति योजना। संसारेति आध्यासिकप्रपञ्चावभासदशायां तज्ज्ञानेति मूलाज्ञानविषयत्वोपलक्षितब्रह्मज्ञानाभावात्। श्रवणादिनिदिध्यासनान्तव्यापारं विना तज्ज्ञानासंभवादिति भावः। ज्ञाने वेति। स्वप्रकाशमाहात्म्यादिनेति शेषः। तथाच जाग्रत्स्वप्नादिव्यवस्थाप्रसङ्ग एवोच्छिद्येतेति भावः। सहीति। 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ तत्र रथान् रथयोगान् पथः सृजत इति पूर्वभागः। अयमर्थः—तत्र स्वप्ने यद्यपि रथादयो व्यावहारिका न सन्ति अथ अथापि भोगोपधायकान् रथादीन् सृजते। स्रष्टारं स्पष्टयति स हि कर्तेति। स हि जीवः कर्ता स्रष्टव्यस्वप्नानुकूलालोचनादिमानित्यर्थः। तथाच श्रुतिबलादपि जीव एवाधिष्ठानमिति भावः। नन्वस्तु जीवः कर्ता उपादानत्वं तु प्रपञ्चोपादानत्वेन क्लृप्तस्य ब्रह्मण एवास्तु लाघवात्। तथा च नाधिष्ठानं जीव इत्यत आह—आकाशादीति। स्वप्नस्येति शेषः। सर्वेति। सर्वजीवान् प्रति भोगयोग्यत्वापत्तेः। अधिष्ठानावरणं विना नाध्यासः, आवरणं च न जीवे संभवति सर्वदाऽहमस्मीत्यपरोक्षात्। अतः स्वं प्रत्यावृतं ब्रह्मैवोपादानं युक्तमित्यभिप्रेत्य शङ्कते—नन्विति। जीवचैतन्यस्य मनोऽवच्छिन्नचैतन्यस्य प्रमातृरूपस्यानावृतत्वेन नास्ति न भातीत्याद्यावरणाविषयत्वेन। सर्वदेति। यावत्स्वसत्त्वमहमस्मीत्यपरोक्षधीविषयत्वात्। कथमिति। अध्यासाधिष्ठानताप्रयोजकावृतत्वाभावादिति भावः। स्वरसतो न संभवत्येवेत्यङ्गीकारपूर्वकमुत्तरमाह—सत्यमित्यादि। व्यावहारिकेति। ब्रह्मज्ञानमात्रबाध्यजगज्जीवादिसमुदायभानविरोधीत्यर्थः। अवस्थेति। मूलाज्ञानावस्थारूपजायमाननिद्रादिरूपावरकाभ्युपगमात् स्वतोऽनावृतत्वेऽपि जीवस्य ब्राह्मणशरीरादिपुरस्कारेणावृतत्वमस्त्येव। व्याघ्रोऽहं शूद्रोऽहमित्यादिभ्रमस्य स्वप्ने दर्शनादिति भावः। ननु तर्हि मनुष्योऽहमित्यादिप्रतीतिः स्वप्ने न स्यात् जीवस्य तद्भानविरोध्यज्ञानाभ्युपगमात्तत्राह—स्वप्नेति। 'अहं मनुष्य इत्यादिना

'ब्राह्मणोऽहं क्षत्रियोऽहमित्यादिपरिग्रहः । प्रातीतिकेति । व्यावहारिकान्यप्रातीतिकसमुदाय-भानेत्यर्थः । तथाच प्रातीतिकदेहपुरस्कारेण प्रातीतिकाहमर्थस्यैव व्यावहारिकाहमर्थज्ञानाद्वारो-प्याघारयोरपि निवृत्तिरिति न कोऽपि दोष इति संक्षेपः । ननु व्यावहारिकेणैव तदुपपत्तिसंभवे तस्याधिष्ठानत्वमङ्गीकृत्य भोक्तृभोग्यभेदकल्पनमन्याय्यं गौरवात्तत्राह—शय्यायामिति । इति प्रतीतौ व्यावहारिकान्यशय्याया इवेत्यर्थः । 'संशयस्वप्नौ च न प्रमेति वदतां मणिकारादीनां मत इति शेषः । ननु तत्र परमतानुसारेण तथोक्तिः, परेणोपनयस्य ज्ञानादेः सन्निकर्षत्वानङ्गी-कारादित्यत आह—भानेति । व्यावहारिकविषय—प्रमाकरणेन्द्रियरूपसामग्र्या अभावश्चेत्यर्थः । तुल्य इति । यथा व्यावहारिके शय्यादौ भासकसामग्र्यभावस्तथाहमर्थमनुष्यशरीरादावपीत्यर्थः । ननु तत्र ज्ञानलक्षणासन्निकर्षस्य संभवात् कथं सामग्र्यभावः ? अन्यथा सुरभि चन्दनं घटो नास्ति घटं पश्यामि वह्निमनुमिनोमीत्यादौ घटसौरभादेर्भानं न स्यात् लौकिकसंनिकर्षवाधाद-लौकिकस्य चानङ्गीकारादिति चेन्न । सौरभाद्यंशे स्मृतित्वादेरङ्गीकारात् । ज्ञानलक्षणायाः प्रत्यासत्तित्वे मानाभावात् । नच तर्हि कथमपूर्वार्थककाव्यरचना, अप्रसिद्धसंसर्गकस्य स्मृत्य-संभवादिति वाच्यम् । तत्रावश्यकतत्तत्पदार्थस्मृत्या विशिष्टप्रत्यक्षमप्रकल्प्यैव तत्तत्पदस्मृतेरेव कल्पनात् । शाब्दस्यायोग्यताज्ञानेनाप्रतिबध्यतायाः कलहस्थले क्लृप्तत्वात् । उक्तपदस्मृतिजन्य-शाब्दबोधादेव कवीनां काव्यरचनोपपत्तेः । अक्लृप्तसन्निकर्षकल्पनमपेक्ष्य पदतदर्थोभयस्य स्मरणावृत्तिकल्पनस्यैव युक्तत्वात् । तस्मादलौकिकप्रत्यक्षान्यथानुपपत्त्या ज्ञानलक्षणाप्रत्यासत्तेर-सिद्धेर्न तेन संनिकर्षेण देशान्तरस्थरजतादेरिदं रजतमिति भ्रमे भानं किंत्वधिष्ठाने जायमाना-निर्वचनीयरजतादेरेव, निर्विषयज्ञानानभ्युपगमात् । आध्यासिकतादात्म्यस्योत्पत्तेरावश्यकत्वे विनिगमकाभावेन रजतोत्पत्तेरपि युक्तत्वाच्चेत्यन्यत्र विस्तरः । अनिर्वाच्यत्वं च सद्विलक्षणत्वे सत्यसद्विलक्षणत्वम् । [विषां] एतच्चार्थापत्तिप्रमाणकम् । तथाहि—सचेन्न बाध्येत,असचेन्न प्रतीयेत, विरोधाच्च न सदसदात्मकम् । अतः सदसद्भिन्नमिति । तस्मात् सिद्धानिर्वचनीयख्यातिः । एतेन भ्रमेऽसदेव रजतं भाति वासनाविशेषादिति माध्यमिकस्य सदेवान्तःकरणपरिणामात्मकं भातीति साङ्ख्यादेः, क्षणिकविज्ञानात्मनो विशेषपरिणामो रजतादिरिदन्त्वादिना भाती-त्यात्मख्यातिवादिनो योगाचारादेः इदमिति पुरोवर्तिनो ग्रहणं, रजतमिति रजतस्मरणं तयोश्च स्वरूपतो विषयतश्च भेदाग्रहाद्विशिष्टव्यवहारोऽतःप्रवृत्तिश्चेत्यख्यातिवादिनो मीमांसकस्य च मतं परास्तम् । आद्यद्वितीययोः ख्यातिबाधानुपपत्तेरेव, तृतीये रजतत्वेनेदन्त्वस्य इदन्त्वेन रजतत्वस्य चारोप इत्यत्र विनिगमकाभावादुभयारोपे सदसदादिविकल्पेनोक्तदोषात्, चतुर्थे रजतप्रकारक-पुरोवर्तिविशेष्यकज्ञानत्वेन हेतुतायाः सत्यरजतादिस्थले क्लृप्ताया इह बाधेन हेत्वन्तरकल्पने गौरवात्परिशेषादनिर्वचनीयख्यातिसिद्धिरित्यन्यत्र विस्तरः । ज्ञानस्य जाग्रद्दशागतप्रथमज्ञा-नस्य । प्रमाणेति । अहमित्यंशस्थाविद्यावृत्त्यारूढसाक्षिमात्रवेद्यत्वात् प्रमातृवेद्यत्वानङ्गी-कारादिति भावः । अज्ञानेति । स्वप्रयोजकाज्ञाननिवर्तकता । अवस्थेति । पूर्वावस्थाया बाधं विनाऽवस्थान्तरस्यासंभवेन तत्कल्पने प्रमाणाजन्यज्ञानस्यापि बाधकत्वकल्पने सुषुप्ता-

विति सुषुप्तावविद्यावृत्तिरूपमहमित्याकारकं स्वप्नबाधकमङ्गीक्रियत इत्यर्थः । जाग्रत्त्वापत्तेः स्वप्नसुषुप्तिशून्यत्वापत्तेः । स्वप्नेति । स्वप्नावस्थाया जनकाज्ञानस्यैव तत्र सुषुप्तौ तद्बाधः स्वप्नावस्थाबाधः प्रमाणाजन्यत्वेऽपि अविद्यावृत्तिमात्रारूढसाक्षिरूपत्वेऽपि यथार्थत्वादज्ञाताबाधितमनोवच्छिन्नचिद्विषयकत्वात् बहिरिन्द्रियसंप्रयोगसंभवेन बहिरिन्द्रियजन्यमनोवृत्तिरूपत्वात् । ननु प्रमाणजन्यत्वं विनापि यथार्थत्वमात्रेण ज्ञानस्याज्ञाननिवर्तकत्वाङ्गीकारे सौषुप्तात्मबोधादप्यज्ञाननिवृत्तिप्रसङ्गस्तादृशबोधस्याबाधिताज्ञातात्मविषयकत्वादित्यत आह—विशेषेति । परिपूर्णचिदानन्दरूपाखण्डार्थगोचराज्ञानं त्वित्यर्थः । प्रमाणेति । तत्त्वमस्यादिवाक्यहेतुकाखण्डार्थबोधं विना । सौषुप्तबोधस्य चिन्मात्रगोचरत्वेप्यज्ञाताभेदाविषयकत्वान्न ततोऽज्ञाननिवृत्तिः संभवति किन्तु वाक्यजन्यवाक्यार्थबोधादेवेति दिक् । अथवा जाग्रद्बोधेनाहं मनुष्य इत्यादिना यदि स्वप्नावस्थाजनकस्य व्यावहारिकद्वैताज्ञानस्य निवृत्तिस्तदा जागरे घटमहं न जानामीत्यज्ञानप्रतीतिर्न स्यात्, घटाद्यज्ञानस्य नाशादित्यत आह—विशेषेति । घटत्वादिप्रकारकाज्ञानमित्यर्थः । प्रमाणेति । प्रमाणजन्यविशेषप्रकारकवृत्तिं विना यथा द्रव्यत्वेन घटज्ञानाद्द्रव्यत्वेन घटाज्ञाननिवृत्तावपि न घटत्वेन घटाज्ञानानिवृत्तिस्तथात्रापि सामान्यतोऽवस्थाज्ञाननिवृत्तावपि विशेषतः प्रमाणजन्यज्ञानादेव । तथाच ततः पूर्वं न विशेषाज्ञानानुभवानुपपत्तिरिति भावः । ननु प्रमाणजन्याऽजन्योभयज्ञानादज्ञाननिवृत्तेर्दर्शनात्तदुभयसाधारणाज्ञाताबाधितगोचरज्ञानत्वेनैव विशिष्य निवर्तकता वाच्या, तथाच साक्षिणोऽप्यविद्यानिवर्तकत्वापत्तिः साक्षिणोऽपि तथाविधविषयधीरूपत्वात्तत्राह—साक्षिणश्चेति । निवर्तकत्वेति । निवृत्तिजनकतावच्छेदकप्रमात्वाभावेत्यर्थः । धर्मिग्राहकेति । अविद्यासाधकः साक्षीति येन भावेन सिद्धस्तेनैव तदनिवर्तकत्वमपि, ज्ञानस्य स्वविषयानिवर्तकतायाः क्लृप्तत्वात् । तथाच नापरोक्षज्ञानत्वं तथा किन्त्वज्ञातत्वाभावप्रयोजकवृत्तित्वमेवेति भावः । ननु यदि सामान्यविशेषोभयज्ञानात् सामान्यतो विशेषतश्चाज्ञाननिवृत्तिः कथं पुनः स्वाप्नभ्रमः? कारणाभावात्तत्राह—यावन्तीति । व्यावहारिकसङ्घातज्ञानेनाज्ञाननिवृत्तावपि पुनरपि स्वप्नाध्यासस्याज्ञानान्तरेणोत्पत्तेर्नानुपपत्तिः । यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यभ्युपगमात् । यथा शुक्तिज्ञानेनाज्ञाननिवृत्तावपि पुनरप्यज्ञानान्तरेण रजतभ्रमोत्पत्तिस्तद्वदित्यर्थः ।

## ( संदीपनम् )

इदानीं जीवचैतन्यस्याधिष्ठानत्वं साधयितुं ब्रह्मचैतन्यस्याधिष्ठानत्वं दूषयति—**तथाहीति**। किं तेन तत्राह—**अधिष्ठानज्ञानादिति**। ततोऽपि किं तत्राह—**ब्रह्मचैतन्यस्येति**। **ज्ञाने वेति** ॥ तथाच ज्ञानाज्ञानाभ्यां नाधिष्ठानत्वमिति मन्तव्यम् । ब्रह्माधिष्ठानत्वसाधकं दूषयित्वा जीवाधिष्ठानत्वसाधकमाह—**स हीति** । योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरित्युक्त्वा तदनन्तरं न तत्र रथा न रथयोगा इति उक्तः स हीत्युक्तं जीवप्रकरणे बृहदारण्यकेऽतो जीवकर्तृकमित्यर्थः । पुनरपि ब्रह्मानधिष्ठानत्वसंपादकं दूषणमाह—**आकाशादिति**। आकाशादिप्रपञ्चस्य यथा सर्वजनव्यवहारविषयत्वं तथा स्वप्नप्रपञ्चस्यापि सर्वजनव्यवहारविषयत्वं स्यादित्यर्थः । एवं च पूर्वग्रन्थेन जीवचैतन्यस्याधिष्ठानत्वमुक्तं वेदितव्यम् । ब्रह्मचैतन्ये बाधकमिव जीवचैतन्येऽपि

बाधकमविकलमिति शङ्कते—नन्विति ॥ ननु तर्हि विरोधिन्यवस्थाज्ञाने जागरूके कथं व्यावहारिकमनुष्यादिसङ्घातभानं तत्राह—**स्वप्नदशायामिति** । व्यावहारिकसङ्घातभानसामग्र्यां विद्यमानायां कथं व्यावहारिकसङ्घातभानाभावोत आह—**शय्यायामिति** ॥ शय्यायां स्वपिमीत्यत्र बोधे यथा व्यावहारिकशय्या न भासते किन्तु प्रातीतिकशय्या तथाऽहं मनुष्य इत्यादिबोधेऽपि प्रातीतिको मनुष्यो भासते न व्यावहारिकः, तथाच न व्यावहारिकभानसामग्री, सामग्र्याः फलनियत्वादित्यर्थः । **शय्यान्तरवत्** शय्यान्तरभानवत् । अथ जीवचैतन्यस्याधिष्ठानत्वपक्षेऽहं मनुष्य इत्यादिस्वप्नाव्यवहितोत्तरज्ञानस्य न स्वप्नकारणीभूतावस्थाज्ञाननिवर्तकत्वं चक्षुरादीन्द्रियपञ्चकजन्यवृत्तिरूपकरणाभावादिति शङ्कते—नन्विति । अत्राशङ्क्यं परिहरति—**अवस्थान्तरेति** । तत्कल्पने प्रमाणाजन्यज्ञानस्यापि बाधकत्वकल्पने । **सुषुप्तावपीति** । यदा स्वप्नोत्तरं सुषुप्तिस्तस्यामित्यर्थः । ननु भवतु नाम बाधकज्ञानं तत्राह—**तच्चेति** । प्रमाणाजन्यज्ञानस्य नाज्ञाननिवर्तकत्वमिति यदुक्तं तत्समीचीनमित्याह—**साध्ववोचइति** । स्वप्नाज्ञानानिवृत्तौ कथं सुषुप्तिस्तत्राह—**स्वप्नावस्थेति** । **न तत्रेति** । तस्यां सुषुप्तौ न स्वाप्नाज्ञानबाध इत्यर्थः । **अहमितिज्ञानस्येति** । एवं च न प्रमाणजन्यज्ञानत्वेनाज्ञाननिवर्तकत्वमपि तु यथार्थज्ञानत्वेनेति भावः । यदि वदसि विशेषाज्ञानं शुक्त्याद्यज्ञानं न प्रमाणजन्यज्ञानमन्तरेण निवर्तते तथापि न नः क्षतिः, अहमितिसाक्षिज्ञानस्य प्रमाणाजन्यत्वेऽपि प्रमाणजन्यशरीरादिज्ञानस्य सत्वादित्याह—**शरीरादिज्ञानस्येति** ॥ अहमितिसाक्षिज्ञानस्य यथार्थत्वेऽपि नाज्ञाननिवर्तकत्वमित्याह—**साक्षिणश्चेति** । ननु व्यावहारिकपदार्थज्ञानेन स्वप्नाज्ञाननिवृत्तौ कथं पुनः स्वप्नस्तत्राह—**यावन्तीति** । **शुक्तिज्ञानेनेवेति** । यथैकेन शुक्तिज्ञानेनैकस्मिन्नज्ञाने नाशितेऽन्यावस्थाज्ञानाद्रजतादिभ्रमोत्पत्तिस्तथात्राप्येकस्मिन् स्वप्नाज्ञाने नाशितेऽन्यस्वप्नाज्ञानात्स्वप्नोत्पत्तिरित्यर्थः । जीवचैतन्यस्याधिष्ठानपक्षमुपसंहरति—**जीवचैतन्यमिति** ।

**यदा पुनर्ब्रह्मज्ञानादेवाज्ञाननिवृत्त्यभ्युपगमस्तदा रज्ज्वां दण्डभ्रमेण सर्पज्ञानतिरोधानवदधिष्ठानज्ञानाभावेऽपि जाग्रद्भ्रमेण स्वप्नभ्रमतिरोभावोपपत्तेर्ब्रह्मचैतन्यमेव स्वप्नाध्यासोपादानमिति पक्षेऽपि न कश्चिद्दोषः । प्रतिजीवं स्वप्नासाधारण्यं तु मनोगतवासनानामसाधारण्यादेव ।**

( लघुव्याख्या. )

एकाज्ञानपक्षे न ब्रह्मान्यज्ञानात् स्वप्नाबधः किंतु निवृत्तिमात्रमतो ब्रह्मैवाध्यासेऽधिष्ठानमित्याशयेनाह—**यदेति** **अज्ञानेति** । अज्ञानोच्छेदाभ्युपगमः **तिरोधानवत्** कार्यावस्थामात्रपरित्यागवदिति यावत् । **अधिष्ठानेति** अङ्गीकृतब्रह्मरूपाधिष्ठानज्ञानाभावेऽपि । **प्रतिजीवमिति** । एकजीवेनोपलभ्यमानस्वप्नो नान्येन जीवेनोपलभ्यत इति । **स्वप्नेति** । भ्रमहेतुभूतानां मनोगतसंस्काराणां प्रतिजीवं नियतत्वात् । उपपद्यत इति शेषः । संस्कारविशिष्टत्वेनैव मूलाज्ञानं भ्रमोपादानमिति मूलाज्ञानस्य साधारणत्वेऽपि कारणतावच्छेदकानां संस्काराणामसाधारण्यात् स्वप्नासाधारण्यमिति भावः ।

( संदीपनम् )

जीवचैतन्यस्याधिष्ठानपक्षमुपपाद्य मूलाज्ञानावच्छिन्नसाक्षिचैतन्यस्याधिष्ठानपक्षमुपपादयन् पूर्वोक्तदोषं परिहरति—**यदा पुनरिति** । ननु ब्रह्माधिष्ठानकजाग्रत्प्रपञ्चस्य सर्वपुरुषसाधारण्यमिव ब्रह्माधिष्ठानकस्वप्नस्यापि सकलपुरुषसाधारण्यं स्यात्, नच कल्पकजीवस्यैव तत्प्रत्यक्षं नाकल्पक-

स्येति वाच्यम् । मनोभेदेनैव जीवभेदादत्राह-प्रतिजीवमिति ॥ तथाच जीवस्यावच्छेदकस्य मनसो वासनानिमित्तको यः स्वप्नः स तस्य प्रत्यक्ष इति भावः ।

**मनोऽवच्छिन्नं ब्रह्मचैतन्यमेवाधिष्ठानमेतस्मिन्नपि पक्षेऽवस्थाज्ञानस्यावरकत्वाङ्गीकारान्न काप्यनुपपत्तिः । अत एव शास्त्रेषु क्वचित् क्वचित्तथा तथा व्यपदेशः ।**

( लघुव्याख्या. )

पक्षान्तरमाह—मन इति । अविद्याप्रतिबिम्बितचिद्रूपजीवादन्यद्ब्रह्मचैतन्यं मनोवच्छिन्नं नियन्तृरूपमधिष्ठानमित्यर्थः । ननु मनोऽवच्छिन्नचित्त्वेन रूपेण ब्रह्मणोऽपि जागरे भासमानत्वात् कथमधिष्ठानत्वं तत्राह—अवस्थाज्ञानस्य निद्रादिरूपस्योक्तस्य अनुपपत्तिर्न स्वप्नाध्याससामग्र्यनुपपत्तिर्नवाज्ञानाज्ञानविकल्पदोषापत्तिः, मनोऽवच्छिन्नचिद्विषयकज्ञानेनावस्थाऽज्ञाननाशाङ्गीकारादित्यन्यत्र विस्तरः । अत्र भाष्यकारसंमतिरप्यस्तीत्याह—अत एवेति । मनोवच्छिन्नचितोऽधिष्ठानत्वस्य सोपपत्तिकत्वादेवेत्यर्थः । शास्त्रेषु भाष्यादौ । क्वचित् तृतीयाध्यायद्वितीयपादादौ । तथेति । 'बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोध इत्यादिना बाधशब्देनोच्छेदोक्त्या स्वप्न (ज्ञाननाश) स्यावरकावस्थाऽज्ञाननाशपूर्वकत्वनिर्देशः । मूलाज्ञाननाशपूर्वकत्वस्य जागरे बाधात् । तथा च स्फुटमेव लब्धमवस्थाऽज्ञानस्यैव तदावरकत्वात् स्वप्नोपादानकत्वम् ।

( संदीपनम् )

यथाच मनोवच्छिन्नजीवचैतन्यमधिष्ठानमितिपक्षे न दोषस्तथा मनोवच्छिन्नब्रह्मचैतन्यमधिष्ठानमितिपक्षेऽपि न दोष इत्याह—मनोऽवच्छिन्नमिति । ब्रह्मचैतन्यस्य सर्वदाभासमानत्वेन कथमधिष्ठानत्वमज्ञातत्वाभावात् तत्राह—एतस्मिन्नपि पक्ष इति ॥ मनोऽवच्छिन्नजीवचैतन्यस्याधिष्ठानत्वपक्षे यथावस्थाज्ञानस्यावरकत्वेन न दोषस्तथा ब्रह्मचैतन्यस्याधिष्ठानत्वपक्षेऽप्यावरकत्वान्न दोष इत्यर्थः ॥ मनोऽवच्छिन्नजीवचैतन्याधिष्ठानत्वपक्षे साक्षिचैतन्याधिष्ठानत्वपक्षे मनोऽवच्छिन्नसाक्षिचैतन्याधिष्ठानत्वपक्षे च प्राचीनसंमतिमाह—अत एवेति ।

**ननु मनोऽवच्छिन्नस्य चैतन्यस्याधिष्ठानत्वेऽहं गज इत्याद्यहङ्कारसामानाधिकरण्येनैव प्रतीतिःस्यात्, इदं रजतमिति शुक्तिसामानाधिकरण्येन रजतप्रतीतिवन्न त्वयं गज इति,ब्रह्मचैतन्यस्याधिष्ठानत्वपक्षेऽपि गज इत्याकारैव प्रतीतिः स्यान्न त्वयं गज इति, तत्रापीदंकारास्पदीभूतबाह्यार्थाभावस्य समानत्वादिति चेत्, न, आद्ये पक्षेऽहङ्कारस्य शुक्तिवदधिष्ठानावच्छेदकत्वाच्छुक्तौ रजतमितिवदहं गज इति न भ्रमाकारप्रसङ्गः, अहमिति ज्ञानस्येयं शुक्तिरितिज्ञानस्येव भ्रमविरोधित्वादिदमंशस्य च भ्रमाविरोधिन एव तत्र भानाभ्युपगमात् । स्वप्ने तु गज इत्याकारवदयमित्याकारोऽपि कल्पित एव । उभयाकारबाधेऽप्यधिष्ठानभूतचैतन्यस्याबाधान्न शून्यवादप्रसङ्गः । जाग्रद्दशायामपि शुक्तीदंकारविलक्षणस्य प्रातीतिकस्यैव रजतेदंकारस्य भानाभ्युपगमाच्च । अध्यस्तमेव हि परिस्फुरति भ्रमेष्विति न्यायात् । शुक्तीदमंशभानपक्षेऽपि नेदमंशस्य सत्यत्वमध्यासे प्रयोजकं किं त्वधिष्ठानसत्यत्वम् ।**

**अधिष्ठानं च तत्राज्ञातशुक्तिचैतन्यमिवात्रापि साक्षिचैतन्यं विद्यत एवेत्युपपादितम् । तस्मान्न पक्षद्वयेऽपि काप्यनुपपत्तिः ।**

**( लघुव्याख्या. )**

अतोऽनयोः पक्षयोः परिणामिनि त्वविवादः किंतु विवर्ते । तत्र यस्मिन् पक्षे मनोवच्छिन्नचैतन्यमेवाधिष्ठानं तस्मिन् पक्षेऽन्तःकरणावच्छिन्न एव रजताद्युत्पत्तेरवश्यं वक्तव्यत्वान्नियमतोहमंशतादात्म्यविशिष्टतयैव प्रतीतिः स्यान्न त्विदमंशसामानाधिकरण्येनापि, शुक्तिरजतादाविव बाह्यांशाभावात् । यस्मिन् पक्षे ब्रह्मचैतन्यमेवाधिष्ठानं तस्मिन् पक्षेऽपि बाह्यांशाभावात्सामान्यत एव प्रतीतिः स्यादिति पक्षद्वयेऽप्याशङ्कते—नन्वित्यादि । मन इति । जीवरूपस्य तादृशब्रह्मणो वा अधिष्ठानत्वे स्वप्नाध्यासाधिष्ठानत्वे अहं गज इत्यादिना अहं गजवानित्यादिपरिग्रहः । अहङ्कारेति । अहमंशस्याधारत्वादहमंशवैशिष्ट्यावगाहित्वेनैव । तथाच तादात्म्येन रजतादेरिवोत्पत्तावहं गज इति, संसर्गतया सुखादेरिवोत्पत्तौ चाहं सुखीतिवदहं गजवानित्यादिप्रतीतिः स्यादित्यर्थः । सामानाधिकरण्येनैवेत्येवकारार्थं स्फुटयति-नत्वित्यादि । समाधत्ते इदमिति । द्वितीयपक्षे आह ब्रह्मेति । गज इत्येव इदमंशाहमंशवैशिष्ट्यानवगाहिनी । एवकारार्थं स्वयमेव स्फुटयति—नत्वित्यादि । समाधत्ते—आद्य इत्यादि । अधिष्ठानावच्छेदकत्वात् भ्रमप्रयोजकाज्ञानविषयतावच्छेदकत्वात् । अधिष्ठानावच्छेदकस्य च न भानं तत्प्रकारकधियो भ्रमविरोधित्वादित्याह—अहमिति । भ्रमेति । भ्रमबाधकज्ञानाविषयस्यैवाधारत्वादिति भावः । तत्र भ्रमे । ननु तथापि कथं रजतादिभ्रम इव स्वप्नभ्रमे इदमंशभानमधिष्ठानेऽसत्वादित्याशङ्क्य मास्त्वधिष्ठाने इदमंशस्तथापि संस्कारेण गजादिकल्पितेदमंशस्यापि भानान्न कोऽपि दोष इति पक्षद्वयेऽप्येकोक्त्या समाधानमाह—स्वप्ने त्विति । कल्पित एव नतु बाह्यः । ननु प्रतीयमानमात्रांशस्य कल्पितत्वेन बाधावश्यकत्वाच्छून्यताप्रसङ्ग इत्यत आह—उभयेति अध्यस्ताधारांशोभयबाधेपीत्यर्थः । न स्वप्नभ्रम एवेयं कल्पना किंतु जागरेऽपीत्याह—जाग्रदिति । जाग्रद्दशागतभ्रमेऽपीत्यर्थः । शुक्तीति । शुक्तीदमंशाद्व्यावहारिकाद्भिन्नस्य प्रातीतिकस्यैव प्रतीत्यभावव्यापकीभूताभावप्रतियोगिनः रजतेदंकारस्य रजतसंसृष्टेदमंशस्य । अस्मिन्नर्थे संक्षेपशारीरकाचार्योक्तिं प्रमाणयति—अध्यस्तमिति । अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथंचन परिस्फुरति भ्रमेषु । रज्जुत्वशुक्तिशकलत्वमुरुक्षितित्वचन्द्रैकताप्रभृतिकानुपलम्भनेनेति संक्षेपशारीरकाचार्योक्तयुक्त्येत्यर्थः। नन्विदं रजतमिति भ्रमे शुक्तीदंकारस्यैव भानपक्षे भ्रमविषयस्य प्रातीतिकत्वनियमाभावादयं गज इति भ्रमानुपपत्तिस्तदवस्थेत्यत आह—शुक्तीति । सत्यत्वं प्रातीतिकान्यत्वम्।प्रयोजकं व्यापकम् । भ्रमनिवर्तकधीविषयांशस्यैव भ्रमनाशकत्वान्यथानुपपत्त्यासत्यत्वावश्यकत्वात् । इदमंशस्य तादृशसत्यत्वावश्यकत्वे मानाभावादिति भावः । धर्मिण इदमंशस्य सत्यत्वाभावेऽपि भ्रमस्तदधिष्ठानक एवेति नियमोऽधिष्ठानस्य सत्यत्वादव्यभिचार्येवेत्यभिप्रेत्याह—किंत्विति । तत्सत्यत्वं विना तज्ज्ञानाद्भ्रमनिवृत्तेरसंभवादिति भावः । ननु विशेष्यतया भातस्येदमंशस्य चेन्नाधिष्ठानत्वं किमधिष्ठानं तर्हि स्वप्नभ्रमस्य तत्राह—अधिष्ठानमिति । परमते यद्धर्मप्रकारकज्ञानस्यैव

भ्रमविरोधित्वम् अज्ञानविषयतावच्छेदकताद्दशधर्मावच्छिन्नमेवाधिष्ठानं न ज्ञातसामान्यधर्मावच्छिन्नमित्यर्थः । विशेषणभेदेन विशिष्टभेदात् । ज्ञातेदन्त्वादिरूपधर्मविशिष्टमाधारमज्ञातशुक्तित्वादिरूपधर्मविशिष्टमधिष्ठानमिति । तत्र जाग्रदवस्थाकालीनशुक्तिरजतभ्रमे अत्रापि स्वप्नभ्रमेऽपि साक्षिचैतन्यं अहङ्कारोपहितं मूलाज्ञानावृतत्वोपहितं वा तस्यापि जीवचैतन्येनैक्यमादाय विषयेऽभिव्यक्तस्य विषयावभासकत्वाङ्गीकारात् साक्षितया निर्देशः । एतेन मनोवच्छिन्नचैतन्यस्य स्वप्नाध्यासाधिष्ठानत्वपक्षेऽहमर्थ आधारो वाधिष्ठानं वा ? नाद्यः 'अहं गज इत्येव स्यान्नत्वयं गज इति, आधारारोप्ययोरेवाभेदप्रतीतेरिदमंशाभेदप्रतीत्ययोगात्, न द्वितीयः कदाचिदहं व्याघ्र इति भ्रमानुपपत्तेरधिष्ठानारोप्ययोरभेदाप्रतीतिरिति निरस्तम्, व्यावहारिकाहङ्कारोपहितसाक्षिणि सकलाध्यासाङ्गीकारादधिष्ठानतावच्छेदकत्वेन व्यावहारिकाहङ्कारस्य भ्रमे मानाभावात् । निद्रादिदोषवशादधिष्ठानाधारोभयकोटिबहिर्भूतकाल्पनिकाहङ्कारेणैवेदंकारसामानाधिकरण्येनारोप्यस्य भ्रमे भानमिति न कोऽपि दोष इत्यन्यत्र विस्तरः । स्वयमेव स्वस्य द्वितीयपक्षेत्विति विशेषाकथनन्यूनतां परिहरन्नुपसंहरति तस्मादिति ।

## ( संदीपनम् )

अधुनोक्तपक्षयोराशङ्कते—**नन्विति** ॥ **मनोवच्छिन्नेति** ॥ मनोऽवच्छिन्नजीवचैतन्यस्येत्यर्थः । अधिष्ठानतावच्छेदकसामानाधिकरण्येनारोप्यभाने निदर्शनमाह—**इदमिति** । इदमंशावच्छिन्नचैतन्यस्याधिष्ठानत्वे यथेदं रजतमितिज्ञानं तथाहमंशावच्छिन्नचैतन्यस्याधिष्ठानत्वेऽहं गज इति ज्ञानं स्यादित्यर्थः । सामानाधिकरण्येनैवेत्येवकारव्यावर्त्यमाह—**नत्वयं गज इतीति** । **ब्रह्मचैतन्यस्येति** । मूलाज्ञानावच्छिन्नब्रह्मचैतन्यस्य मनोऽवच्छिन्नब्रह्मचैतन्यस्यचेत्यर्थः । **हेतुमाह—तत्रापीति** ॥ **न आद्य इति** । यथा रजताधिष्ठाने शुक्त्यवच्छिन्नचैतन्ये शुक्त्यज्ञानावच्छिन्नचैतन्ये वा शुक्तिरवच्छेदिका तथा स्वाप्नगजाधिष्ठाने अहंकारावच्छिन्नचैतन्येऽहङ्कारोऽवच्छेदकः, तथाच यथाशुक्तौ रजतमितिज्ञानं न भवति तथाहं गज इति ज्ञानं न भवतीत्यर्थः ॥ उक्तेऽर्थे हेतुमाह—**अहमिति** । **ज्ञानस्येति** । तर्हि कथं तत्रेदमंशज्ञानं तत्राह **इदमंशस्य चेति** । कल्पितेदमंशस्येत्यर्थः । एवं च कल्पितेदमंशभानं न भ्रमविरोधि किंतु शुक्तिनिष्ठेदमंशभानमित्यवधेयम् । अथवा तत्रेदंत्वेन रूपेणेदमंशभानं नतु शुक्तित्वादिरूपेणेति भावः । स्यादेतत् ॥ तथापि स्वाप्नगजभ्रमे विद्यमान इदमाकारः कथं भासते तत्राह—**स्वप्ने त्विति** । तदुभयाकारस्य कल्पितत्वेन बाधितत्वाच्छून्यवादिमतप्रवेशस्तत्राह—**उभयाकारेति** । तर्हि भ्रमस्य द्वैरूप्यं स्वाप्नजाग्रद्भ्रमयोः कल्पिताकल्पितेदमंशभानात्तत्राह—**जाग्रद्दशायामपीति** । अत्र संक्षेपशारीरकोक्तवाक्यं प्रमाणमाह—**अध्यस्तमेव हीति** । अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथंचन परिस्फुरति भ्रमेषु । रज्जुत्वशुक्तिकलत्वमरुक्षितित्वचन्द्रैकताप्रभृतिकानुपलम्भनेन इत्यन्तः श्लोको बोध्यः । ननूक्तक्रमेण शून्यवादपरिहारेऽपि स्वप्नाध्यासो न समर्थितः, अध्यासप्रयोजकसत्येदमंशाभानादत आह—**शुक्तीदमंशेति** । मतत्रयमुपसंहरति—**तस्मादिति** । मूलाज्ञानावच्छिन्नब्रह्मचैतन्यमनोवच्छिन्नब्रह्मचैतन्ययोरवच्छेदकभेदेऽप्यवच्छेद्यभेदाभावादुभयोः पक्षयोरैक्यमभिसन्धाय पक्षद्वयेऽपीत्युक्तमिति बोध्यम् ।

**अत्र च स्वाप्निकपदार्थभोक्ता तैजस इत्युच्यते । पित्ताख्यतेजःप्रधानत्वादादित्यादिज्योतिरन्तरेणापि भासकत्वादिति वा ।**

( लघुव्याख्या. )

स्वप्ननिरूपणस्य पर्यवसानमाह—अत्र चेति । स्वप्नावस्थायां तेजःप्रधानत्वमतिप्रसक्तमित्याशङ्क्याह—आदित्येति । अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरयं पुरुष इति प्रश्ने आत्मैवास्य ज्योरिति याज्ञवल्क्योत्तरश्रुतेरिति भावः । इति स्वप्नप्रकरणम् ।

( संदीपनम् )

स्वप्नाधिष्ठानं निरूप्य स्वप्नभोक्तारमाह—अत्रेति ॥ स्वप्नभोक्तुस्तैजसत्वमुपपादयति—पित्ताख्येत्यादिना । तेजःशब्दस्य पित्तपदप्रतिपाद्यत्वं याज्ञवल्क्यादौ सुप्रसिद्धं । इति स्वप्नावस्थानिरूपणम् ।

एवं जाग्रत्स्वप्नभोगद्वयेन श्रान्तस्य जीवस्य तदुभयकारणकर्मक्षये ज्ञानशक्त्यवच्छिन्नस्य सवासनस्यान्तःकरणस्य कारणात्मनावस्थाने सति विश्रामस्थानं सुषुप्त्यवस्था । कारणमात्रोपलम्भः सुषुप्तिः । तत्र जाग्रत्स्वप्नभोग्यपदार्थज्ञानाभावेऽपि साक्ष्याकारं सुखाकारमवस्थाऽज्ञानाकारं चाविद्यावृत्तित्रयमभ्युपेयते । अहङ्काराभावाच्च नैका विशिष्टवृत्तिः सुषुप्त्यभावप्रसंगात् अत एव वृत्तिरूपस्योपलम्भस्याभावान्न प्रलयेऽतिव्याप्तिः । तत्र तत्कल्पने बीजाभावात् । इह च सुखमहमस्वाप्सं न किंचिदवेदिषमिति सुप्तोत्थितस्य परामर्शादनुभवे परामर्शानुपपत्तेश्च । अन्तःकरणोपरागकालीनानुभवजन्यत्वाभावान्न तत्तोल्लेखाभावेऽपि स्मरणत्वानुपपत्तिः । स्मरणे तत्तोल्लेखनियमाभावाच्च । जाग्रद्दशायामस्वाप्समित्यनुभवानुपपत्तेर्लिङ्गाभावेनाश्रयासिद्ध्या चानुमानस्यासंभवात् । अहंकारस्तूत्थानसमय एवानुभूयते । सुषुप्तौ लीनत्वेन तस्याननुभूतत्वात्स्मरणानुपपत्तेः । मुखप्रतिविम्बाश्रये दर्पणे जपाकुसुमलौहित्याध्यासे रक्तं मुखमिति प्रतीतिवदहंकाराश्रयसाक्षिचैतन्यस्य स्मरणाश्रयत्वादहमस्वाप्समिति सामानाधिकरण्यप्रतीतिः, न पुनरहं सुखीति वदाश्रयतया, स्मृतिसंशयविपर्ययाणां साक्षिचैतन्याश्रयत्वनियमात् । अहंकारस्य च प्रमाणजन्यज्ञानाश्रयत्वात्, प्रमात्वेनैव तत्कार्यतावच्छेदादप्रमात्वावच्छेदेन चाविद्याया एव कारणत्वात् । अतएव चानाप्तवाक्यादिजन्यपरोक्षविभ्रमोऽप्यविद्यावृत्तिरेवेत्यभ्युपगमो वेदान्तविदाम् । तत्रान्तःकरणवृत्तिजनकसामग्रीसंभवेऽपि प्रमात्वाभावापराधेनान्तःकरणस्यासामर्थ्यात् । नामादिषु ब्रह्माध्यासस्त्विच्छाधीनतया भ्रमप्रमाविलक्षणा मनोवृत्तिरेव, कामादिवत् । तदुक्तम्—अतएव चोदनाजन्यत्वान्मानसी क्रियैव सा न ज्ञानमिति । एतेन तर्कस्यापि मनोवृत्तित्वं व्याख्यातम् । व्याप्यारोपे व्यापकप्रसञ्जकस्य तस्य भ्रमप्रमाविलक्षणत्वादिति । अतएव मननिदिध्यासनसहिते श्रवणाख्ये वेदान्तवाक्यविचारे 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिविधिरुपपद्यते, तस्य चतुर्विधान्वयव्यतिरेकादितर्करूपत्वात् । दृग्दृश्यान्वयव्यतिरेकः, साक्षिसाक्ष्यान्वयव्यतिरेकः, आगमापायितदवध्यन्वयव्यतिरेकः, दुःखिपरमप्रेमास्पदान्वयव्यतिरेकः, इति ।

अनुवृत्तव्यावृत्तान्वयव्यतिरेकोऽपि पञ्चमः । एतच्च सर्वेषां वेदान्तानुकूलतर्काणां चतुर्लक्षणमीमांसाप्रतिपादितानामुपलक्षणमित्यभियुक्ताः । विस्तरस्तु वेदान्तकल्पलतिकायामनुसंधेयः ।

( लघुव्याख्या. )

विश्वतैजसोपाधी जाग्रत्स्वप्नौ 'एतावुभावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं चे'ति श्रुत्युक्तौ निरूप्य 'तद्यथा श्येनो वा सुपर्णो वेति, श्रुतिबोधितं प्राज्ञोपाधिं निरूपयितुमुपक्रमते–एवमिति । तदुभयेति जाग्रत्स्वप्नोभयस्येत्यर्थः । क्रियाशक्तिविशिष्टस्य सुषुप्तौ लयाभावादाह–ज्ञानेति । ज्ञानशक्तिसमष्टिरूपस्यान्तःकरणस्य लयेऽपि वासनाभिर्भोगस्तत्र स्यात्तत्राह–सवासनस्येति । कारणात्मना कारणीभूताज्ञानगतसंस्कारेण । कारणेति स्थूलसूक्ष्मदेहानुपलम्भविशिष्टः कारणोपलम्भः । मूर्च्छाप्रलयादिवारणाय विशेष्यदलम् । सुषुप्तौ मनसः पुरीततिप्रवेशाद्धानसामान्यं प्रति त्वङ्मनोयोगरूपकारणस्य सुषुप्तिकाले बाधान्न कारणोपलम्भोऽपि युक्तिसह इति तार्किकादिशङ्कामपाकर्तुमाह–तत्रेति । तत्र सुषुप्तौ । जाग्रदिति जाग्रत्स्वप्नावस्थयोर्भोग्या ये पदार्थाः व्यावहारिकप्रातिभासिकरूपास्तद्विषयकज्ञानाभावेऽपि तत्तदर्थावभासकेन्द्रियवासनादिरूपविशेषसामग्र्या अभावादिति शेषः । साक्ष्याकारं निष्कृष्टाहङ्काररूपसाक्षिविषयकं सुखाकारं ब्रह्मरूपसुखविषयकम् । अवस्थाज्ञानाकारं च स्वप्नाधिष्ठानविषयकं यदवस्थाज्ञानं तद्विषयकं च अविद्यावृत्तीत्यनेन, न त्वङ्मनोयोगाभावेन सुषुप्तावनुभवाभावः साधयितुं शक्यस्त्वङ्मनोयोगस्य प्रमाणजन्यज्ञानं प्रत्येव हेतुत्वाङ्गीकारादिति सूचितम् । त्रयं निर्विकल्पवृत्तित्रयम् । ननु लाघवात् त्रितयसंसर्गावगाह्येक एव प्रत्ययोऽङ्गीक्रियतां तत्राह–अहङ्कारेति । स्थूलावस्थस्यान्तःकरणसंस्कारस्याभावाच्च नैकाहमर्थविशेष्यकसुखाभिन्नस्वापप्रकारकानुभव इत्यर्थः । लाघवात्सप्रकारकवृत्तिमात्रेऽहङ्कारस्य हेतुत्वकल्पनादिति भावः । अस्त्वज्ञानवदहङ्कारोऽपि तत्रेत्यत आह–सुषुप्त्यभावेति । बाह्यार्थविषयकवृत्त्यन्तरस्यापि तत्राहङ्कारसत्त्वेन सम्भवादिति भावः । कारणात्मनावस्थितिः सुषुप्तिरिति लक्षणस्य प्रलयेऽतिव्याप्तावपि कारणमात्रोपलम्भः सुषुप्तिरिति लक्षणस्य नातिव्याप्तिरित्याह–वृत्तिरूपस्येति । एतेन साक्षिरूपस्योपलम्भस्य तत्र सत्त्वेऽपि नातिव्याप्तितादवस्थ्यं, लक्षणे उपलम्भपदस्य वृत्तिपरत्वादिति ज्ञापितम् । अविद्यारूपकारणसत्त्वे वृत्तिः कथं नेत्यत आह–तत्कल्पने वृत्तिकल्पने बीजाभावात् अनुमापकहेत्वभावात् । फलानुसारेणादृष्टादिघटिता सामग्री कल्प्यते । आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इति न्यायात् । तत्र च फलानुपलब्ध्या नादृष्टादिकं न वा तज्जन्यानुभवः कल्प्यते । अतोऽविद्यायास्तत्र सत्त्वेऽपि न वृत्तिप्रसङ्ग इति संक्षेपः । ततः सुषुप्तौ वैलक्षण्यमाह–इहेति । इह सुषुप्तौ सुखमिति स्वापो नाम मनोलयसहितमज्ञानं धात्वर्थः क्रिया, सुखं नामार्थः । तयोश्च स्तोकः पाक इत्यादाविवाभेदेन, स्वापस्य चाख्यातार्थे, तस्य चाहमर्थे लिङर्थस्यातीतत्वस्य धात्वर्थे स्वापेऽन्वयात्, सुखाभिन्नातीतस्वापवानहमित्यर्थः । सुखस्वापयोरभेदस्तु व्यङ्ग्यव्यञ्जकभावनिबन्धनो

नोध्यः । न किञ्चिदिति न किमपि ज्ञातवान् सकलपदार्थाज्ञानवानित्यर्थः । अत्रोभयत्राप्यतीतत्वांशस्याधिकस्य भानं तु, सा गङ्गा मया दृष्टेत्यादाविवासंसर्गाग्रहादिदित्यन्यत्र विस्तरः । परामर्शात् स्मरणात् । अननुभवे अनुभवाभावे परामर्शानुपपत्तेः स्मरणासंभवात् । ज्ञानसूक्ष्मावस्थारूपसंस्काराभावादिति शेषः । स घट इत्याद्याकारस्यैव स्मरणस्योपलम्भात्प्रकृते विना तत्तोल्लेखं कथं स्मृतित्वं तत्राह—अन्तरिति । अन्तःकरणाश्रितत्वरूपो य उपरागः संबन्धस्तत्कालीनेत्यर्थः । जन्यत्वाभावात्तत्तोल्लेखाभावस्तस्मिन् सत्यपि न स्मरणत्वानुपपत्तिरित्यर्थः । सुषुप्तावहङ्कारस्याभावाद्देशकालविशिष्टरूपेणाज्ञानादेरननुभवान्न तेन रूपेण स्मृतिः, किंतु केवलाज्ञानत्वादिनैव । तथाच यस्य कालादिविशिष्टरूपेणानुभवस्तस्यैव तद्रूपेण स्मृतिरिति भावः । एतेन जाग्रति तत्तादेरस्मरणेऽपि परमते सुषुप्तौ न निर्विकल्पकाभावसिद्धिस्तन्मते सप्रकारकत्वेनैव स्मृत्यनुभवयोः कार्यकारणभावात् । तत्तादिप्रकारकस्मरणस्य स्मरणाहेतुनिर्विकल्पकाभावसाधकत्वादित्यपि सूचितम् । ननु प्रमाणजन्यसप्रकारकज्ञानं प्रत्येव मनसो हेतुत्वस्य व्यवस्थापयिष्यमाणत्वात् परिभाषितप्रमाणाजन्ययोराविद्यकयोः स्वापानुभवस्मृत्योस्तत्ताप्रकारकत्वे बाधकाभावात् कथमतथाभूतस्य स्मृतित्वं तत्राह—स्मरण इति स्मृतित्वावच्छेदेनेत्यर्थः । तत्तेति । तत्ताप्रकारकत्वनियमाभावात् चिन्तितार्थगोचरस्मृतौ व्यभिचारात्, तत्र चिन्तयैव पश्चात्तद्धानदर्शनादिति भावः । तथा चात्र विशिष्टसंस्कारजन्यत्वाङ्गीकारेऽपि तत्रैवोद्बोधकालाभेन तत्ताद्यभानं युक्तम् । अतो नैतावता सुषुप्तावनुभवाभावः साधयितुं योग्यः, ज्ञानस्य स्मृतिजनकत्वानियमेनास्मर्यमाणत्वस्य व्यभिचारित्वादिति संक्षेपः । प्रेमानुपाधिरसुखात्मनि नोपलब्धः स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः । प्रेयःश्रुतेरपि ततः सुखतानुमाने नैयायिकोऽपि न दृगात्मनि निह्नुवीत ॥ १ ॥ प्राज्ञे सुखं समनुभूय समुत्थितः सन् सर्वप्रकारविषयप्रतिपत्तिशून्ये । सुप्तोऽहमत्र सुखमित्यनुसंदधानः सर्वोऽपि जन्तुरवगच्छति तस्य सौख्यम् ॥ २ ॥ ननु सुषुप्तौ मनस उपरमात्तादृशवृत्त्यभावेऽपि जाग्रत्काल एव सुखमहमस्वाप्समित्यनुभवः कल्प्यतां तत्राह—जाग्रदिति । अवस्थाऽज्ञानं मनोलयश्च सुषुप्तिः । आद्यस्याधिष्ठानधिया नष्टत्वात् द्वितीयस्य चायोग्यत्वादिति भावः । ननु मास्तु प्रत्यक्षं । स्वप्नजागरयोर्मध्यकालः सुषुप्तिमान् ज्ञानसामान्याभावात्, जन्यज्ञानसामान्याभावाद्वेत्यनुमानं स्यादेवेत्यत आह—लिङ्गेति । निरुक्तहेतुद्वयस्याभासत्वेनेत्यर्थः । आश्रयेति । निरुक्तकालस्यानुपस्थितत्वात् तादृशकालरूपपक्षस्यानिर्णयेन । तथाहि—नाद्यो हेतुः, निरुक्तरीत्या तस्यासिद्धेः पक्षे ज्ञातुमशक्यत्वाच्च । नापि द्वितीयः । तस्याप्यसिद्धेः । न च जन्यज्ञानसामग्र्यभावेन तत्सिद्धिरन्योन्याश्रयापत्तेः, जन्यज्ञानसामान्याभावनिश्चयेन तत्सामग्र्यभावकल्पनं सामग्र्यभावनिश्चयेन च जन्यज्ञानाभावकल्पनमिति एतेन न किंचिदवेदिषमिति ज्ञानाभावानुमितिरित्यपि निराकृतम् । अनुमानस्य निरुक्तरीत्याऽसंभवादित्यन्यत्र विस्तरः । ननु स्मृतिरपि न संभवति स्मर्यमाणाहङ्कारस्य सुषुप्तावननुभवात्तत्राह—अहङ्कार इति । उत्थानसमये जाग्रद्दशायाम् अनुभूयते साक्षिणा विषयीक्रियते तथाच नाहङ्कारांशे स्मृतिः । तत्र हेतुमाह—सुषुप्ता-

विति लीनत्वेन स्थूलात्मनाऽसत्त्वेन तस्य अहङ्कारस्य स्मरणानुपपत्तेः अहमित्यंशस्मृत्यसंभवात्। ननु सुषुप्तावहङ्काराभावश्चेत् कथमहमस्वाप्समिति स्वापाश्रयत्वेन प्रतीतिस्तत्राह—सुखेति। रक्तं मुखमिति प्रतीतावेकत्र दर्पणे रक्तरूपमुखयोर्भानात्, यत्र मुखं दर्पणस्थं पूर्वमदृष्ट्वा रक्तरूपस्य मुखे आरोपस्तत्र, मुखे न रक्तारोपसंभवोऽधिष्ठानीभूतस्य मुखस्य पूर्वं ज्ञानाभावात् तादृशस्थलं दृष्टान्त इति भावः। सामानाधिकरण्येन एकधर्मिणि तदुभयसंबन्धावगाहिनी प्रतीतिः स्मृतिः सुखीतिवत् अहंपदार्थे सुखवत्त्वावगाहिप्रत्यक्षवत् आश्रयतया स्वापाश्रयत्वावगाहिनी। ननु साक्षिचैतन्याश्रिता स्मृतिः साक्षिणि तदुभयसामानाधिकरण्यमात्रं गृह्णाति नतु तयोराश्रयाश्रयिभावमपीत्युक्तं तन्न युक्तम्। स्मृतेरहमर्थाश्रितत्वानुभवात्तत्राह—स्मृतीति। साक्षीति अविद्योपहितचिदाश्रितत्वनियमात्। किमित्ययं नियमस्तत्राह—प्रमाणेति। प्रमाणमात्रजन्यज्ञानाश्रयत्वनियमात्। तत्र हेतुः प्रमात्वेनेति। तत्कार्यताऽहङ्कारकार्यता। एवकारार्थमाह—नतु स्मृतिसंशयविपर्ययसाधारणाप्रमात्वेनेत्यर्थः (१)। कारणत्वात् परिणामिकारणत्वात्। प्रमां प्रत्यविद्यायाः परिणामित्वं कार्यमात्रं प्रति तत्स्वीकारात्। अप्रमां प्रत्यविद्याया एव नाहङ्कारस्येति ज्ञापनाय एवकारः। स्मृतेरज्ञातविषयकत्वाभावादप्रमात्वं संशयविपर्यासयोर्बाधितार्थकत्वात्। ननु नाप्रमामात्रं प्रत्यविद्याया हेतुत्वं युक्तमनाप्तवाक्यादिजबोधे व्यभिचारात्तत्र पदज्ञानादिरूपबहिःप्रमाकरणकमनोवृत्तेरेवौचित्यादित्याशङ्क्य कार्यकारणभावकल्पनस्य लाघवगौरवतर्काधीनत्वात्तत्र सामग्रीसत्त्वेऽपि नहि प्रमाकरणिका मनोवृत्तिः किन्त्वविद्यावृत्तिरेवेत्यतिदेशेनाह—अत एवेति। प्रमां प्रत्येव मनसः परिणामित्वाभ्युपगमादेव। तत्र अनाप्तवाक्यादौ सामग्रीसम्भवेऽपि प्रमायामिव शब्दज्ञानतजन्यपदार्थोपस्थितिसम्भवेऽपि। अपराधेनेति। बाधितविषयत्वादिति भावः। अन्तरिति। लाघवादप्रमात्वावच्छिन्नं प्रत्यविद्यायाः कारणत्वकल्पनाद्भ्रमं प्रति मनसः कारणत्वायोगादिति भावः। ननु प्रमां प्रति मनसः, अप्रमां प्रत्यविद्यायाः कारणत्वे नामादौ ब्रह्मैक्योपासनावृत्तिराकस्मिकी स्यात्, तादृशवृत्तेर्भ्रमप्रमाबहिर्भूतत्वात्। तथाहि सा न प्रमा, विषयबाधात्। नापि भ्रमः, नामादौ ब्रह्मभेदस्यानावृतत्वेऽपि तदुपपत्तिः१त्पत्तेः, भेदग्रहपूर्वकत्वादिति यावत्। तथाच नाविद्याया न वा मनसस्तत्र परिमाणिता संभवतीत्यत आह—नामादिष्विति। इच्छेति। बाधकालीनेच्छेत्यर्थः। ब्रह्माध्यासः ब्रह्मैक्याकारा वृत्तिः कामादिवत् इच्छाद्वेषादिवत्। चोदनाजन्यत्वात् 'नाम ब्रह्मेत्युपासीतेत्यादिविधिवाक्यार्थस्येष्टसाधनत्वज्ञानाधीनेच्छाजन्यप्रयत्नसाध्यत्वात्। न ज्ञानमिति। ज्ञानस्योक्तप्रयत्नं विनापि दुर्गन्धादिविषयकस्योत्पत्तेः। प्रमाणव्यापाराभावे उक्तप्रयत्नसत्त्वेऽप्यनुत्पादान्नोक्तप्रयत्नसाध्यता। अत एव 'पत्न्याज्यमवेक्षत इत्यादौ ज्ञानानुकूलव्यापारे विधिरिति भावः। श्रवणादिषु विधिविषयत्वं समर्थयितुं दर्शितनियमफलं तर्केऽतिदिशति—एतेनेति। भ्रमप्रमाबहिर्भावनियमप्रदर्शनेनेत्यर्थः। मनोवृत्तित्वं इच्छादेरिव ज्ञानान्यपरिणामविशेषरूपत्वं व्याख्यातं सूचितम्। स्पष्टयति—व्याप्येत्यादि। व्याप्यारोपे; ह्रदो यदि वह्निव्याप्यधूमवान् स्यादित्यारोपे व्यापकप्रसञ्जनात्मकस्य ह्रदो वह्निमान् स्यादित्याकारपरिणामविशेषस्य

इच्छाधीनतया आपाद्यव्यतिरेकनिश्चयकालीनेच्छाजन्यत्वेन । भ्रमेति भ्रमत्वप्रमात्वशून्यत्वात् अतएव तर्कस्य भ्रमप्रमाबहिर्भूतवृत्तित्वसमर्थनादेव । मननेति । मनननिदिध्यासनरूपफलोपकार्यङ्गसहिते सहित इत्यनेन मनननिदिध्यासनयोरङ्गत्वमात्रं श्रवणस्य प्राधान्यं सूचितं, तत्र बीजमाह–श्रवणाख्य इति । तत्त्वमस्यादिवाक्यानामद्वैते तात्पर्यानुकूलमानसक्रियारूपव्यापारविशेषेत्यर्थः । आत्मज्ञानस्योपनिषत्प्रमाणमात्राधीनत्वान्न तत्र विधिर्युक्तः किंतु श्रवणादावेव । तादृशव्यापारं विना प्रतिबन्धानिवृत्तेः पुरुषार्थासिद्धेः । प्रतिबन्धश्च प्रमाणप्रमेययोर्गताऽसंभावना विपरीतभावना चेति । तत्राद्या क्रियार्थत्वादिभिर्हेत्वाभासैर्ब्रह्मात्मैक्ये वेदान्तानां प्रामाण्यं न संभवतीत्याकारकश्चित्तदोषः । द्वितीया वेदान्तानां स्वार्थपरत्वसंभवेऽपि ब्रह्मात्मैक्यं कर्तृत्वादिप्रत्यक्षविरोधात् सर्वथा नोपपद्यत इत्येवमाकारकश्चित्तदोषः । तृतीया अनादिकालप्रवृत्तदेहात्मज्ञानजनितसंस्कारप्रचयश्चित्तदोषः । तत्राद्या श्रवणेन द्वितीया मननेन तृतीया निदिध्यासनेनापसार्यते । तत्र श्रवणं वेदान्तपदवाक्यशक्तितात्पर्यावधारणम् । मननमभेदाभावेऽनिष्टप्रसञ्जनरूपस्तर्कः, यदि तयोरभेदो न स्यात्तदा समस्वभावतया प्रतिपत्तिर्न स्यादिति । निदिध्यासनं ब्रह्मात्मैक्यवृत्तीनां पौनः पुन्यम् । अत एवैतेषु श्रवणं प्रधानम् । तद्विशिष्टस्यैव शब्दस्य तात्पर्यभ्रमसंशयोत्तरशाब्दबोधे हेतुत्वादित्यन्यत्र विस्तरः । ननु श्रवणं नाम श्रुतिकरणकशाब्दबोधः, मननमनुमितिः, निदिध्यासनं धारावाहिकात्मगोचरवृत्तिः । 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरित्यादिना वाक्यकरणकश्रवणादिलाभात् । तथाच ज्ञानरूपेषु तेषु कथं विधिरुपपद्यते तत्राह–चतुर्विधेत्यादि । तस्य मनननिदिध्यासनसहितस्य श्रवणस्येत्यर्थः । चतुर्विधान्वयव्यतिरेकानेव दर्शयति–दृग्दृश्येति । दृशि दृश्यानामन्वयेन व्यतिरेक इत्यर्थः । अन्वयस्तादात्म्यादि तस्य कल्पितत्वात्तत्प्रतियोगिनामनात्मनामन्वयेनैव व्यतिरेकः सिध्यतीति भावः । तथाच स्वप्रकाशदृशस्तादात्म्येन भातं जडं यदि सत्यं स्यात्तदा जडत्वादिना स्वप्रकाशादत्यन्तविलक्षणं न स्यादिति तर्को बोध्यः । साक्षीति । साक्षिणि साक्ष्यस्यान्वयेन व्यतिरेक इत्यर्थः । व्यतिरेकश्च प्राग्वद्बोध्यः । तर्कश्चाधिष्ठानभूतनिर्विकारसाक्षितादात्म्येन भातं जडं यदि सत्यं स्यात्सविकारं न स्यादिति । आगमापायीति । आगमापायिनस्तदवधौ उत्पत्तिविनाशधर्मकस्य बाधकधीविषयेऽन्वयेन व्यतिरेक इत्यर्थः । तर्कश्च नित्यधर्मितादात्म्येन भातं जडं यदि सत्यं स्यात्तदोत्पत्तिविनाशि न स्यादिति । दुःखीति । दुःखिनः परमप्रेमास्पदेऽन्वयेन व्यतिरेक इत्यर्थः । तर्कश्च प्रेमास्पदानन्दतादात्म्येन भातं जडं यदि सत्यं स्यात्तदा दुःखि दुःखसाधनं च न स्यादिति । अनुवृत्तेति । अनुवृत्ते व्यावृत्तस्यान्वयेन व्यतिरेक इत्यर्थः । तर्कश्च अनुवृत्ततादात्म्येन प्रतीयमानं जडं यदि सत्यं स्यात्तदा मिथोव्यावृत्तं न स्यादित्यादिर्बोध्यः । यथा चैतेषां तर्काणां श्रुतिमूलत्वं तथा व्याख्यातमस्माभिर्महद्व्याख्याने । एतच्चेति पञ्चविधान्वयव्यतिरेकरूपतर्ककथनं चेत्यर्थः । तर्काणां कार्यकारणान्यत्वादितर्काणाम् । चतुर्लक्षणेति चतुरध्यायशारीरमीमांसेत्यर्थः । प्रतिपादितानां 'तदनन्यत्वमारम्भणशब्दादिभ्य इत्यादिसूत्रैर्विषयपरिशोधकतया सूचितानाम् ।

## ( संदीपनम् )

क्रमप्राप्तां सुषुप्त्यवस्थां निरूपयितुमुपक्रमते—**एवमिति** ॥ **जीवस्येति** ॥ विश्रामस्थानं सुषुप्त्यवस्था इत्यनेनान्वयः । **तदुभयं** जाग्रत्स्वप्नोभयम् कर्मक्षये कर्मणि लीने । अन्यथा पुनः स्वप्नान्तरानुपपत्तिः । प्राणमनसोरैक्यमभिप्रेत्याह—**ज्ञानशक्त्यवच्छिन्नस्येति**। एवं च तदेकं वस्तु ज्ञानशक्त्यवच्छिन्नमन्तःकरणमुच्यते क्रियाशक्त्यवच्छिन्नं सत् प्राण इत्यवधेयम् । बुद्धेः कारणात्मनावस्थानं सुषुप्तिरिति प्राचीनलक्षणं प्रलयेऽतिव्याप्तमत उपलम्भघटितं सुषुप्तिलक्षणमाह—**कारणेति** । उपलम्भो वृत्तिरूपं ज्ञानम्। ननु सुषुप्तौ विषयान्तरस्यानुभवाभाव इव सुखस्याप्यनुभवाभावात् कथं सुप्तोत्थितस्य सुखस्मरणमत आह—**तत्रेति** । ननु विशिष्टवृत्तिमुपेक्ष्य किमिति वृत्तित्रयमङ्गीक्रियते तत्राह—**अहंकाराभावाच्चेति** । अहङ्काराभाव एव कुतस्तत्राह—**सुषुप्त्यभावेति** । सम्प्रदायमनुरुध्य वृत्तित्रयमुक्तम् । वस्तुतस्तु एकैव वृत्तिः। इदं च प्रतिपादितं **श्रीपादैः**, मयापि विस्तृतमद्वैतसिद्धिटीकायां **सिद्धिसाधके** ॥ उपलम्भपदकृत्यमाह—**वृत्तिरूपस्येति** । ननु सुषुप्ताविव प्रलयेऽपि वृत्तिः कल्पनीया तत्राह—**तत्रेति** । प्रलय इत्यर्थः । सुषुप्तौ किं बीजं तत्राह—**इह चेति** ।......परामर्शस्तत्राह—**अननुभव** इति । नन्वयं परामर्श एव न भवति तत्तोल्लेखाभावादत आह—**अन्तःकरणेति** । एवं चान्तःकरणोपरागकालीनानुभवजन्यस्मरण एव तत्तोल्लेखो न स्मरणमात्र इति भावः । वस्तुतस्तु नैयायिकादिभिरपि प्रमुष्टतत्ताकस्मरणाङ्गीकारान्न केषामपि स्मरणे तत्तोल्लेखनियम इत्याह—**स्मरण** इति । **जाग्रद्दशायामिति** ॥ सुषुप्त्यवहितोत्तरक्षण इति शेषः । अन्यथा किञ्चित्कालानन्तरं जाग्रत्यपि अस्वाप्समिति प्रत्ययस्य नानुपपत्तिगन्धोपीऽति बोध्यम् ॥ शब्दाद्यभावेऽप्यनुमानमस्तु तत्राह—**लिङ्गाभावेनेति** । ईदृशस्मरणविषयस्य हेतोरभावेनेत्यर्थः । भवतु वा यथाकथंचिल्लिङ्गं तथापि हेतोराश्रयस्याहंकारस्य सुषुप्त्यवहितक्षणेऽसिद्धिरित्याह—**आश्रयासिद्ध्याचेति** । सुषुप्तावहङ्कारस्य लीनत्वादिति भावः । तर्हि स्मरणे कथमहङ्कारभानं तत्राह—**अहङ्कारस्त्विति** । **तस्याहङ्कारस्य** । तर्ह्यहमस्वाप्समिति सामानाधिकरण्यप्रतीतिः कथं तत्राह—**मुखप्रतिबिम्बाश्रय इति** । एवं चैकाश्रयसामानाधिकरण्यसम्बन्धेन यथा [ जातिः ] समवायः सन्निति प्रत्ययः, यथा वोक्तसंबन्धेन मुखप्रतिबिम्बाश्रये दर्पणे लौहित्याध्यासे रक्तं मुखमिति प्रत्ययस्तथोत्थानसमये साक्षिचैतन्ये स्वापाहङ्कारयोः सामानाधिकरण्यात्प्रत्यय इत्यर्थः। **आश्रयतया** सुखाश्रयतया । ननु भवन्मतेऽहङ्कार एव ज्ञानाश्रयो न तु साक्षिचैतन्यं तत्राह—**स्मृतिसंशयेति** । तर्हि ज्ञानाश्रयो नाहङ्कारस्तत्राह—**अहंकारस्य चेति** ॥ ननु नियामकाभावात् साङ्कर्यं स्यात्तत्राह—**प्रमाणत्वेनैवेत्यादि** । एवं चेदहङ्कारकालीनभ्रमात्मकशाब्दानुमित्यादौ का गतिस्तत्राह—**अत एवेति** ॥ एवमपि 'नाम ब्रह्मेत्युपासीतेत्यादौ का गतिस्तज्जन्याया नामनि ब्रह्मदृष्टेर्भ्रमत्वाभावादत्राह—**नामादिष्विति** । यद्यपि तस्याः प्रमात्वेऽपि न क्षतिरन्तःकरणवृत्तित्वात्तथापि वस्तुगतिमनुरुध्य ज्ञानभिन्नत्वमुक्तमिति बोध्यम् । तदुक्तमिति—**आचार्यैः** शारीरकभाष्य इति शेषः । **एतेनेति** । एतेन मानसज्ञानत्वं तर्कस्य प्रत्युक्तमित्यर्थः । **व्याप्यारोपेणेति** । तथाच नामनि ब्रह्मदृष्टिवित्तर्कोऽपि मनोवृत्तिविशेष एव नतु ज्ञानमित्यर्थः । अतएव तर्कस्य ज्ञानविलक्षणमनोवृत्तिविशेषत्वादेवेत्यर्थः । श्रवणं तु अद्वितीये ब्रह्मणि निखिलवेदान्तानां तात्पर्यावधारणानुकूलो व्यापारविशेषो न श्रोत्रजन्यं ज्ञानं 'शब्दः श्रुत इत्यादिप्रत्ययसिद्धमित्युक्तेऽर्थे हेतुमाह—**तस्येति** । वेदान्तवाक्यविचारस्येत्यर्थः । एवं च भाष्यकारैर्ज्ञानविधिरेव निराकृतो नतु श्रवणादिविधिरिति भावः । चतुर्विधान्वयव्यतिरेकौ दर्शयति-**दृक्दृश्येत्यादि** । दृक्पदार्थस्त्वद्वितीयात्मरूपप्रकाशविशुद्धानुभव-

मात्रः दृश्यपदार्थस्त्वविद्यातत्कार्यपञ्चभूततदारब्धानि सर्वाणि अविद्यासंबन्धश्च। दृश्यत्वं तु शब्दाजन्यवृत्तिविषयत्वं शब्दाजन्यान्तःकरणपरिणामविषयत्वं वा । नचाद्यस्य लक्षणस्य ब्रह्मण्यतिव्याप्तिः, सुषुप्तिकालीनसुखाकाराविद्यावृत्तिविषयत्वादिति वाच्यम् । विषयत्वरूपधर्मस्य लक्षणस्य निर्धर्मके ब्रह्मण्यभावात् ॥ अविद्यावृत्तिविषयता तु स्वप्रात्मिकैवातो नातिव्याप्तिः । द्वितीये तु लक्षणेऽतिव्याप्तिसंभावनैव नास्ति, अविद्यावृत्तेरन्तःकरणपरिणामत्वाभावात् । नापि श्रवणादिजन्यान्तःकरणपरिणामरूपज्ञानविषयत्वादतिव्याप्तिस्तदवस्था, श्रवणादिजन्याया वृत्तेर्ज्ञानभिन्नत्वस्य ग्रन्थकृद्भिरेवोक्तत्वात्। विषयत्वरूपधर्माभावाच नाद्यलक्षणेऽतिव्याप्तिः। यद्यपि दृश्यादिकाले दृगादिसत्त्वेनान्वयः सुमिलस्तथापि नित्यानां दृगादीनां व्यतिरेकाप्रसिद्धयाऽन्वयव्यतिरेकासिद्धेरयं ग्रन्थस्तर्कपरतया व्याख्येयः ॥ उक्तं च गुरुचरणैः 'चतुर्विधान्वयव्यतिरेकादितर्करूपत्वादित्यनेन । तर्कश्च—दृग् यदि दृश्यभिन्ना न स्यात्तदा दृश्याभावकालो दृक्कालो न स्यादित्यादिरूपः । एवमुत्तरत्रापि बोध्यम् । परे तु—दृश्यादिकाले दृगादिसत्त्वेनान्वयसत्त्वेऽपि दृगादिव्यतिरेकाप्रसिद्धेर्न व्यतिरेकतात्पर्यमपि त्वन्वय एव । एवमपि व्याप्तेर्भेदघटितत्वेन सिद्धो दृग्दृश्यादिभेद इति वदन्ति । नव्यास्तु सकृच्छ्रुतपदस्यार्थद्वयक्लृप्तिर्न दुष्यतीतिन्यायेन दृग्दृश्यान्वयशब्दो दृग्दृश्ययोः कालिकसामानाधिकरण्यमुक्त्वाऽवशिष्टव्यतिरेकपदेनान्वितः सन् दृग्दृश्ययोरभावं तयोरभावयोर्व्याप्तिरूपस्यान्वयस्याभावं च वक्ति ॥ तेन चायमर्थो लब्धः ॥ यदा दृश्यं तदा दृगित्यादिव्याप्त्या दृश्यसंबन्धिकालस्य दृक्संबन्धे लब्धेऽपि दृश्यसंबन्धिकालान्यत्वाभावाद्दृग् दृश्याभिन्ना, दृग्दृश्ययोर्व्याप्तावपि तदभावयोर्व्याप्त्यभावादिति दृग्दृश्यान्वयव्यतिरेकशब्दस्यार्थं वर्णयन्ति । वस्तुतस्तु दृग् दृश्यं च दृग्दृश्ये अन्वयश्च व्यतिरेकश्चान्वयव्यतिरेकौ व्यतिरेकोऽपि सामान्याभावः दृग्दृश्ययोरन्वयव्यतिरेकाभ्यामन्वयस्तु यथासंख्येन । ततश्च दृगन्वयो दृश्यव्यतिरेकः तत्सामान्याभाव इत्यर्थो लब्धः । तथाच यदा दृश्यसामान्याभावस्तदा दृगितिव्याप्तौ सिद्धायां क्व दृग्दृश्ययोरैक्यसंभावना । एवं च सिद्धोऽहङ्कारादिभिन्न आत्मा । सिद्धे च भावरूपे आत्मनि शून्यवादोऽपि परास्त इति वदन्ति । एवं सिद्धे दृग्रूपे आत्मनि तस्य जडत्वं न परिहृतम्, परप्रकाश्यत्वरूपजडत्वेऽपि तस्य निर्वाहादत आह—**साक्षीति** । एवं चाविद्योपलक्षितचैतन्यरूपस्य साक्षिणः स्वपरप्रकाशकत्वेन स्वव्यवहारेऽन्यानपेक्षत्वरूपस्वप्रकाशत्वे सिद्धे न जडत्वभावनेति भावः ॥ साक्ष्यं त्वविद्यातत्संबन्धान्तं पूर्वोक्तं वेदितव्यम् । निरस्ते जडत्वे परिहृते च शून्यवादे विज्ञानवादो न निरस्तः, तथाचागतं क्षणिकत्वमात्मनोऽत आह—**आगमापायीति**। आगम उत्पत्तिरपायो नाशस्तथाचोत्पत्तेराकस्मिकत्वासंभवेन तस्याः किञ्चित्पूर्वावधिभूतं कारणं वक्तव्यम् । एवं विनाशस्यापि प्रतियोग्यतिरिक्तं कारणं वक्तव्यम् । कारणस्य जन्यत्वे तस्यापि कारणान्तरं, तथाचानवस्थाऽतस्तत्परिहारायानया रीत्या नित्यत्वं कारणस्य साध्यते । यदा आगमापायि ततः पूर्वमवधिभूतं ब्रह्म यदा चागमापायिसामान्याभावस्तदापि तदवधिभूतं ब्रह्म । एवं च कालपरिच्छेदशून्यरूपमागतं नित्यत्वमात्मनः, तथाच न क्षणिकत्ववार्ता । अथवा क्षणिकत्वादिनापि नाशस्योत्तरावधि आश्रयभूतं किञ्चिद्वक्तव्यम्, निराश्रयनाशानुपपत्तेः । नाशपरंपराकल्पने गौरवं च । अतो यदाऽऽगमापायि तदा तदवधिभूतं ब्रह्म यदाचागमापायिव्यतिरेकस्तदापि तदवधिभूतं ब्रह्मेत्यवधृते आगतं कालपरिच्छेदशून्यत्वरूपं नित्यत्वमात्मन इति सर्वं निरवद्यम् । सर्वत्र चाभावोऽपि आत्मरूप एव । अतो न द्वैतापत्तिः । व्याप्तिग्रहस्तु यदा घटस्तदा कम्बुग्रीवादिमानितिवद्यदा दृश्यादिव्यतिरेकस्तदा दृगादीत्येकस्यैव प्रकारभेदेनेति । नन्वेतावता प्रबन्धेन

नित्यानुभवस्वरूप एवात्मेति सांख्यमतमेवोपपादितं न सुखस्वरूप आत्मेति तत्राह—दुःखीति। दुःखी अन्तःकरणावच्छिन्नं चैतन्यमहङ्कारो वा परप्रेमास्पदं, यदा दुःखिव्यतिरेकः तदापि परप्रेमास्पदमतः सिद्धं नित्यत्ववदात्मनः सुखस्वरूपत्वमिति। नन्वेवमपि परिच्छिन्नत्वेन विनाशित्वादिकमापतितमत आह—अनुवृत्तेति। अनुवृत्तत्वमनुगतत्वमत्यन्ताभावाप्रतियोगित्वमभावाप्रतियोगित्वं वा, इदं ब्रह्मण एव न जडस्य। व्यावृत्तत्वमत्यन्ताभावप्रतियोगित्वमभावप्रतियोगित्वं वा इदं तु जडस्य न ब्रह्मणः। तथा च यदा व्यावृत्तव्यतिरेकस्तदानुवृत्तमतः सिद्धमात्मनोऽपरिच्छिन्नत्वमतश्च सिद्धमात्मनोऽविनाशित्वादिकमिति दिक्। तर्हि किं वेदान्तशास्त्र एवैव तर्का नेत्याह—एतच्चेति। अभियुक्ता वेदान्तशास्त्रनिपुणाः।

तदेवं सुषुप्त्यवस्थायामस्त्यानन्दभोगः, तद्भोक्ता च सुषुप्त्यभिमानी, प्राज्ञ इत्युच्यते प्रकर्षेणाज्ञत्वात्, तदानीं विशेषावच्छेदाभावेन प्रकृष्टज्ञानाद्वा। तदा चान्तःकरणलयेऽपि तत्संस्कारेणावच्छेदान्न जीवाभावप्रसङ्गो न वा सार्वज्ञ्यापत्तिः। ईश्वराभेदप्रतिपादनं च शरीरेन्द्रियाद्यभिमानरहितत्वेनोपचारात्। संस्कारस्य च निमित्तकारणत्वेन साक्ष्याश्रितकार्योपादानकोटावप्रवेशान्न तद्भेदेऽपि साक्षिभेदः। जागरणे त्वन्तःकरणस्य प्रमात्राश्रितकार्योपादानकोटौ प्रवेशात्तद्भेदेन प्रमातृभेद एव। साक्षिण एव चाधिकोपाधिविशिष्टस्य प्रमातृत्वान्न प्रतिसंधानानुपपत्तिरिति।

( लघुव्याख्या. )

आनन्दभोगः सुखाकारा वृत्तिः। भोक्ता आश्रयः। अभिमानी अभिमानवान्। प्रकर्षेण मू (तू ?)लाज्ञानं सर्वदाऽस्ति मूलाज्ञानमपि सुषुप्ताविति प्रकर्षः। विशेषावच्छेदाभावेन वृत्तित्रयविषयान्यविषयविशेषविषयकत्वाभावेन। सौषुप्तसाक्षिण इति शेषः। विषयविशेषविषयकत्वस्य दुःखप्रयोजकत्वेन तदभावो ज्ञानस्य प्रकर्षः। प्रज्ञ एव प्राज्ञ इति। अवच्छेदात् जीवभावात्। ननु यदि न जीवभावनिवृत्तिस्तर्हि 'प्राज्ञेनात्मना संपरिष्वक्त इत्यादि परमात्मभावसंपच्छ्रवणं कथमित्याशङ्क्य न तन्मुख्यं किंतु गौणमेवेत्याह—ईश्वराभेद इति। उपचारात् गौणीलक्षणातः। ननु सुखदुःखव्यवस्थार्थं प्रमातारो भिन्नाः साक्षीत्वेक एवेत्युक्तं तन्न युक्तम्। प्रमातृशरीरप्रविष्टोपाधिभेदेन प्रमातॄणामिव साक्षिशरीरप्रविष्टोपाधिभेदेन साक्षिणोऽपि भेदावश्यंभावात्, तत्राविद्याया इव संस्कारस्यापि स्मृतिव्यवस्थान्यथानुपपत्त्योपाधित्वादित्याशङ्क्य न संस्कारविशिष्टाविद्यात्वेन स्मृतिं प्रत्युपादानता किन्त्वविद्यात्वेनैव, संस्कारस्तु निमित्तमात्रमतो न संस्कारभेदेन स्मृतिविवर्तोपादानस्य साक्षिणो भेदो युक्त इत्याशयेनाह—संस्कारस्य चेति। निमित्तकारणत्वेन स्मृतौ निमित्तकारणत्वेन साक्ष्याश्रितेति साक्षिमात्राश्रितत्वेनाङ्गीकृतस्मृतिरूपकार्योपादानभूताविद्याशरीरेऽप्रवेशात् उपादानांशतया अविशेषणत्वात्, उपादानतानवच्छेदकत्वादिति यावत् तद्भेदेन संस्कारभेदेन। प्रमातरि ततो विशेषमाह—जागरणे त्विति। उपादानेति। सुखदुःखादिकं प्रति मनसोऽसाधारणत्वादिति भावः। तद्भेदेन अन्तःकरणभेदेन। ननु पूर्वदिनस्थप्रमात्रानुभूतमद्यदिनस्थः प्रमात्रा न स्मर्येतान्यदृष्टस्यान्येनास्मरणात्तयो-

भेदादित्यत आह—**साक्षिण एव चेति**। अधिकेति मनः स्वरूपोपाधिविशिष्टस्य प्रमातृत्वात् सवृत्तिकमनोवच्छिन्नचिद्रूपस्य प्रमातुः स्वरूपत्वात्प्रतिसंधानेति स्मरणेत्यर्थः। तथाच मनोवस्थाया भेदेऽपि सर्वावस्थानुस्यूतमनस्त्वोपलक्षितस्वरूपस्यैकत्वात्तद्विशिष्टसाक्षिण एकत्वेन नानुभवस्मृत्योर्वैयधिकरण्यमिति भावः।

(संदीपनम्)

प्रासङ्गिकं समाप्य प्रकृतमनुसरति—**तदेवमिति**। 'आनन्दभुक् चेतोमुखः प्राज्ञ इत्यादिश्रुत्यवष्टम्भेन भोगं भोक्तारं च प्रतिपाद्य प्राज्ञशब्दस्य योगार्थमाह—**प्रकर्षेणेति**। सकलविशेषावच्छेदकाभावे जीवोपाधेरन्तःकरणस्याप्यभावेन जीवत्वनाश ईश्वराभेदाच्च ईश्वरवत् सुषुप्तस्य सार्वज्ञं च स्यादित्यादिशङ्कामपनुदति—**तदा चेति**। तर्हि सता सोम्य तदा संपन्नो भवतीत्यादिश्रुतेः का गतिरत आह—**ईश्वराभेदेति**। एकाविद्या, तत्प्रतिबिम्ब एको जीवः, बिम्बमीश्वरः, स एव जीवो वृत्तिमदन्तःकरणनिविष्टः प्रमाता, अन्तःकरणोपहितः साक्षी, अन्तःकरणस्य साक्षिकोटावप्रवेशे एकप्रमातृसुखादिकं सकलप्रमातृवेद्यं स्यादेकस्य भासकस्य प्रतिम्बिम्बचैतन्यस्य सर्वान् प्रत्यविशिष्टत्वात्। एवं चान्तःकरणस्य विशेषणोपहितत्वाभ्यां द्वेधा प्रवेश इति केषां चिन्मतं तद्दूषयति—**संस्कारस्य चेति**। **साक्ष्येति**। साक्ष्याश्रितं यत्कार्यं स्मरणादि तदुपादानं तत्कोटावित्यर्थः। संस्कारापेक्षया प्रमात्रुपाधेरन्तःकरणस्य वैलक्षण्यं प्रदर्शयन् प्रमातृभेदमुपपादयति—**जागरणे त्विति**। ननु प्रमातॄणामनुभवाश्रयाणां यथा परस्परं भेदस्तथा स्मर्तुः साक्षिणोऽपि भेदः प्रमातृनिष्ठस्तथाचानुभवस्मरणयोर्वैयधिकरण्यान्न साक्षिणःस्मरणमत आह—**साक्षिण एवेति**। **प्रतिसंधानं स्मरणम्**। वस्तुतस्तु प्रमात्रुपाधेरन्तःकरणस्य साक्ष्युपाधित्वानङ्गीकारेण सकलभासकात्साक्षिणो भिन्नः प्रमाता, तथा च कथं प्रमात्राश्रितकार्यभानं भासकासन्निकृष्टत्वात्, तदसन्निकृष्टभासने चातिप्रसङ्गादत आह—**साक्षिण एवेति**। नचैवमपि प्रमातुः स्वप्नप्रपञ्चसाक्षात्कार इव प्रमात्रन्तरप्रपञ्चस्यापि साक्षात्कारः स्यात् प्रमातृभिन्नसाक्षिणो भासकत्वमित्येकत्वादिति वाच्यम्। यत्प्रमात्रन्तःकरणे साक्षिप्रतिबिम्बस्तस्यैव भाननियमेन सर्वसामञ्जस्यादिति।

**मातृमानप्रभेदेऽपि प्रतिदेहं न भिद्यते।**
**साक्षी बाह्यार्थवद्यस्मात्त आत्मेत्युच्यते ततः॥**
**व्यभिचारो मिथो यद्वत्प्रमात्रादेः स्वसाक्षिकः।**
**सर्वमात्राद्यभावार्थसाक्षित्वान्न तथात्मनः॥**

**इति वार्तिककारपादैर्व्यवहारदशायामपि साक्षिभेदनिराकरणात् सुषुप्तौ तद्भेदकल्पनं केषांचिन्महामोह एवेत्यवधेयम्।**

(लघुव्याख्या.)

नन्वविद्याया इव, विनिगमकाभावान्मनसोऽपि प्रमात्रुपाधित्वेन क्लृप्तस्य, साक्ष्युपाधिकत्वमप्रतिहतं तथाच साक्षिणोऽप्यौपाधिकभेदोऽस्त्येवेति केषांचिदनभिज्ञवेदान्तिनामुक्तिः सिद्धान्तविरोधान्न युक्तेत्याह—**मातृमानेत्यादि**। आत्मेत्युच्यते 'एष त आत्मान्तर्याम्यमृत इति श्रुताविति शेषः। **व्यभिचारो मिथः**. परस्पराभावसामानाधिकरण्यादिरूपः। **स्वसाक्षिकः** आत्मसाक्षिकः। **सर्वेति**। सर्वे ये प्रमात्रादिरूपास्तदभावरूपाश्चार्थास्तत्साक्षित्वादित्यर्थः।

व्यवहारदशायामपि जागरेपि । साक्षीति । प्रतिदेहं साक्षिभेदनिराकरणात् तद्भेदकल्पनं मनउपाधिकः साक्षी तत्संस्कारोपाधिकः साक्षीति भिन्न एवेति साक्षिभेदकल्पनं महामोह एव अतिभ्रम एव । मनआदेः साक्षिशरीरेऽप्रवेशस्य बहुधोक्तेरिति भावः ।

( संदीपनम् )

उक्तेऽर्थे वार्तिककारसंमतिमाह—मातृमानेत्यादि । देहभेदेन प्रमातृप्रमाणयोर्भेदेऽपि बाह्यार्थो घटादिर्यथा न भिद्यते तथा साक्ष्यपि न भिद्यते ततस्तस्मात्कारणात् साक्षी ते तव आत्मेत्यर्थः । व्यतिरेकदृष्टान्तमाह—व्यभिचार इति । यथा परस्परं प्रमातृप्रमाणप्रमेयाणां भेदः स्वसाक्षिकः अज्ञानावच्छिन्नचैतन्यसाक्षिक इत्यर्थः । दृष्टान्तं प्रतिपाद्य दार्ष्टान्तिकमाह—न तथात्मन इति । तथात्मनः साक्षिणो भेदो नास्तीत्यर्थः । अस्यां प्रतिज्ञायां हेतुमाह—सर्वैति ॥ सकलप्रमाणप्रमात्रादीनां तेषामभावानां च साक्षित्वादित्यर्थः । सुषुप्ताविति । सुषुप्तावपीत्यर्थः । जागरणेऽपि साक्षिभेदाभावे कुतः सुषुप्तौ साक्षिभेद इत्यन्वयः ।

ननु दुःखमहमस्वाप्समिति कदाचित् कस्यचित्परामर्शात्सुषुप्तौ दुःखानुभवोऽप्यस्तु, न, तदानीं दुःखसामग्रीविरहात् । सुखस्य चात्मस्वरूपत्वेन नित्यत्वात्, शय्यादेरसमीचीनत्वेन दुःखमित्युपचाराद्दुःखमहमस्वाप्समितिप्रत्ययोपपत्तिः । अथवाऽवस्थात्रयस्यापि त्रैविध्याङ्गीकरात् सुषुप्तावपि दुःखमुपपद्यते । तथाहि—प्रमाज्ञानं जाग्रज्जाग्रत्, शुक्तिरजतादिविभ्रमो जाग्रत्स्वप्नः, श्रमादिना स्तब्धीभावो जाग्रत्सुषुप्तिः । एवं स्वप्ने मन्त्रादिप्राप्तिः स्वप्नजाग्रत्, स्वप्नेऽपि स्वप्नो मया दृष्ट इति बुद्धिः स्वप्नस्वप्नः, जाग्रद्दशायां कथयितुं न शक्यते स्वप्नावस्थायां च यत्किंचिदनुभूयते तत् स्वप्नसुषुप्तिः । एवं सुषुप्त्यवस्थायामपि सात्विकी या सुखाकारावृत्तिः सा सुषुप्तिजाग्रत्, तदनन्तरं सुखमहमस्वाप्समिति परामर्शः; तत्रैव या राजसीवृत्तिः सा सुषुप्तिस्वप्नः;तदनन्तरमेव दुःखमहमस्वाप्समिति परामर्शोपपत्तिः; एवं तत्रैव तामसीवृत्तिः सुषुप्तिसुषुप्तिः, तदन्तरं गाढं मूढोहमासमिति परामर्शः । यथा चैतत्तथा वाशिष्ठे वार्तिकामृतादौ स्पष्टम् ।

( लघुव्याख्या. )

ननूत्थितस्य सुखस्मृतिवद्दुःखस्मृतिरप्यस्त्यतस्तदन्यथाऽनुपपत्त्या नित्यसुखस्येव नित्यदुःखस्याप्यनुभवोऽस्तु, सामग्रीबाधेन जन्यसुखस्येव जन्यदुःखस्यापि मानासम्भवादित्यभिप्रेत्याशङ्कते—नन्विति । दुःखेति । तथाचात्मनो दुःखरूपतापि स्यादिति भावः । सुखदुःखयोः साम्यं परिहृत्य दुःखानुभवमन्यथा नयति—शय्यादेरित्यादि उपचारात् जाग्रत्कालीनात् शय्यादौ दुःखसाधनत्वज्ञानात् । दुःखमहमिति दुःखसाधनशय्याधिकरणकं शयनं कृतवानहमित्यर्थः । ननु शय्यादेरसमीचीनत्वेनैव दुःखप्रतीतिर्न युक्ता सुखप्रतीतेरपि शय्यादेः समीचीनत्वप्रयुक्तत्वापत्तेः, युक्तेस्तौल्यादतः पक्षान्तरमाह—अथवेति । त्रैविध्याङ्गीकारात् तापनीयादिश्रुताविति शेषः । जागरे त्रैविध्यमाह—प्रमेत्यादि । स्तब्धीभावः अहमाकारवृत्त्यन्यवृत्तिसामान्याभावः ।

एवं स्वप्नेत्यादि स्पष्टम् । सात्त्विकी सत्त्वगुणपरिणामरूपा सुखाकारा आत्मसुखविषयिका । राजसी दुःखरूपरजःपरिणामगोचरा तामसीतमोगुणविषयिका । तिस्रोऽपि वृत्तयः सत्त्वगुणस्यैव, ज्ञानत्वात् । सत्वात्सञ्जायते ज्ञानमिति स्मृत्या सत्त्वपरिणामस्यैव ज्ञानात्मवृत्तित्वोक्तेरित्यन्यत्र विस्तरः ।

( संदीपनम् )

सुखमहमस्वाप्समिति परामर्शाद्यथा सुषुप्तौ सुखानुभवस्तथादुःखानुभवोऽप्यस्त्वित्याशङ्कते—नन्विति । परिहरति—नेति । हेतुमाह—तदानीमिति । ननु तदानीं दुःखाभावेन तदनुभवाभावात् कथं दुःखपरामर्शस्तत्राह—शय्यादेरिति । वस्तुतो दुःखाभावेऽपि दुःखोपचारात्तत्परामर्श इत्यर्थः । उपचारमसहमानो वार्तिकोक्तरीत्या समाधातुं षष्ठाध्यायान्तर्गतज्योतिर्ब्राह्मणस्थमर्थमाह—अथवेति । अवस्थात्रैविध्यं वक्तुं प्रथमतो जाग्रदवस्थाकालीनान्तर्गतां जाग्रदवस्थामाह—प्रमाज्ञानमिति । क्रमप्राप्तां स्वप्नान्तर्गतां जाग्रदवस्थामाह—एवमिति । क्रमप्राप्तां सुषुप्त्यन्तर्गतां जाग्रदवस्थामाह—एवं सुषुप्ताविति । इममर्थं प्रामाणिकं कर्तुमाह—यथा चैतदिति ।

**एवमध्यात्मं विश्वः, अधिभूतं विराड्, अधिदैवं ब्रह्मा । अध्यात्मं जाग्रत्, अधिदैवं सृष्टिः, अधिभूतं रजोगुणः । एवमध्यात्मं तैजसः, अधिभूतं हिरण्यगर्भः, अधिदैवं विष्णुः । अध्यात्मं स्वप्नः, अधिदैवं पालनम् । अधिभूतं सत्त्वगुणः । एवमध्यात्मं प्राज्ञः, अधिभूतमव्याकृतं, अधिदैवं रुद्रः । अध्यात्मं सुषुप्तिः, अधिदैवं प्रलयः, अधिभूतं तमोगुणः । एवमध्यात्माधिभूताधिदैवानामेकत्वात्प्रणवावयवत्रयसहितानामुपहितानामेतेषामैक्योपासनया हिरण्यगर्भलोकप्राप्तिरन्तःकरणशुद्धिद्वारा क्रममुक्तिश्च । एतत्सर्वोपाधिनिराकरणेन साक्षिचैतन्यमात्रज्ञानेन तु साक्षादेव मोक्ष इति । तदेवं त्रयाणामप्यवस्थात्रयसहितानां विश्वतैजसप्राज्ञानामविद्यात्मकत्वाद् दृश्यत्वेन च मिथ्यात्वादनुपहितः केवलः साक्षी तुरीयाख्योऽस्मीत्यर्थः । एवं व्यवहारतः सर्वव्यवस्थोपपत्तेः परमार्थतः कस्या अपि व्यवस्थाया अभावान्न काप्यनुपपत्तिः । विस्तरेण चैतत्प्रपञ्चितमस्माभिर्वेदान्तकल्पलतिकायामित्युपरम्यते ॥ ८ ॥**

( लघुव्याख्या. )

मुख्याधिकारिणां परमहंसानां श्रवणादिद्वारकमात्मज्ञानं मोक्षोपाय इत्यभिधाय मन्दाधिकारिणामविद्वत्संन्यासिनां ज्ञानसाधनोपायमाह—एवमिति । एवमुपहितानामेतेषामैक्योपासनया हिरण्यगर्भलोकप्राप्तिरन्तःकरणशुद्धिद्वारा क्रममुक्तिश्चेति योजना । अध्यात्मं शरीरमधिकृत्य स्थितः । अधिभूतं स्थूलभूतसमष्टिमधिकृत्य स्थितः । अधिदैवं स्थूलसमष्टिभिन्नं स्वोपाधिं रजोगुणरूपमधिकृत्य स्थितः रजोगुणोपाधिको ब्रह्मा । जाग्रदिति । अध्यात्मेन विश्वेनानुभूयमाना जाग्रदवस्थेत्यर्थः । अधिदैवं ब्रह्मकार्यम् । अधिभूतं सर्वभूतान्यधिकृत्य स्थितः । एष प्रथमः समूहः । एवमध्यात्ममिति । लिङ्गमधिकृत्य स्थित इत्यर्थः । अधिभूतं सूक्ष्मभूत-

समष्टिमधिकृत्य स्थितः। अधिदैवं तदुभयान्यः सत्त्वगुणोपाधिकः। अध्यात्मं तैजसेनानुभूयमाना स्वप्नावस्था। अधिदैवं विष्णुकार्यम्। अधिभूतं सर्वभूतान्यधिकृत्य स्थितः। एष द्वितीयः समूहः। अध्यात्ममज्ञानमधिकृत्य स्थितः। अधिभूतमव्याकृतं चिदाभासादियुक्तमज्ञानमधिकृत्य स्थितः। अव्याकृतमीश्वरः। अधिदैवं तदुभयान्यस्तमोगुणोपाधिकः। अध्यात्मं प्राज्ञेनानुभूयमाना सुषुप्त्यवस्था। अधिभूतं भूतान्यधिकृत्य स्थितः। अधिदैवं रुद्रकार्यम्। एवमिति प्रणवावयवरूपाकारोकारमकाररूपा वाचकसहितानामुक्तसमूहानामेकत्वात् व्याप्यव्यापकभावमर्यादयाऽभेदात्। उपहितेति। उपहितस्वरूपाणामुक्तसमूहानामैक्योपासनया हिरण्यगर्भलोकः सत्यलोकः अनन्तरं विदेहकैवल्यम्। प्रथमावयवोऽकारो वाचकः प्रथमसमूहो वाच्यस्तयोरेकत्वं चिन्त्यम्। एवं द्वितीयावयवद्वितीयसमूहयोस्तृतीयावयवतृतीयसमूहयोरेकत्वं विचिन्त्य ततः प्रथमसमूहस्य द्वितीयेन कारणेन द्वितीयस्य तृतीयेन समूहेनैक्यं चिन्त्यम्। तच्चिन्तनेन सत्यलोकावाप्तिर्भवति। अनन्तरं तेन सह मुच्यते। 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमित्यादिश्रुतेरिति संक्षेपः। पुनरपि मुख्यानां प्रसङ्गात् कैवल्योपायमाह—एतदिति तापिन्यादौ 'अथात आदेशो न स्थूलप्रज्ञमित्यादिना सर्वोपाधिविनिर्मुक्तस्यैव मुमुक्षुज्ञेयत्वोक्तेः। पद्यार्थमुपसंहरति—तदेवमिति।

(संदीपनम्)

प्रसङ्गादन्तःकरणशुद्ध्यर्थं वार्तिकाद्युक्तामुपासनामाह—एवमध्यात्ममिति। क्रममुक्त्युपायमुक्त्वा साक्षान्मुक्त्युपायमाह—एतत्सर्वोपाधीति। अविद्यात्मकत्वादित्यादिद्वितीयार्धस्यार्थं वदन्नुपसंहरति—तदेवं त्रयाणामिति। इत्यष्टमः श्लोकः।

ननु जाग्रत्स्वप्नसुषुप्तिसहितानां त्रयाणामपि तदभिमानिनां मिथ्यात्वात्तत्साक्षिणोऽपि मिथ्यात्वं स्यादविशेषादित्याशङ्क्य विशेषाभिधानेन साक्षिणः सत्यत्वमाह—

> **अपि व्यापकत्वाद्धितत्वप्रयोगात्**
> **स्वतःसिद्धभावादनन्याश्रयत्वात्।**
> **जगत्तुच्छमेतत्समस्तं तदन्यत्**
> **तदेकोऽवशिष्टः शिवः केवलोऽहम्॥ ९॥**

'न दृष्टेर्द्रष्टारं पश्येरिति साक्षिणं प्रकृत्यातोऽन्यदार्तमिति श्रुतेः, साक्षिणोऽन्यत्सर्वं साक्ष्यं जगत् तुच्छं न तु साक्षी, बाधावधित्वात् भ्रमाधिष्ठानतयाऽज्ञातत्वाच्च, तद्बाधग्राहकाभावाच्चेत्याद्यनुक्तसमुच्चयार्थोऽपिशब्दः। 'अथ यदल्पं तन्मर्त्यमितिश्रुतेः परिच्छिन्नत्वतुच्छत्वयोः समव्याप्तत्वात्परिच्छिन्नत्वनिवृत्त्या तुच्छत्वनिवृत्तिरित्याह—व्यापकत्वादिति। 'सर्वं खल्विदं ब्रह्मेति सर्वात्मत्वोपदेशेन देशकालापरिच्छिन्नत्वादाकाशादीनां देशकालपरिच्छिन्नत्वेऽप्यापेक्षिकमहत्त्वेन व्यापकत्वोपचारात्। ननु सर्वव्यापकत्वेन

नित्यत्वाद्भावरूपत्वाच्चात्मा न दुःखनिवृत्तिरूपः, नापि सुखरूपः सुखस्यानित्यत्वेन नित्यात्मस्वरूपत्वानुपपत्तेः। तथा चात्मस्वरूपो मोक्षोऽपुरुषार्थ एवेत्याशङ्क्य नेत्याह—हितत्वप्रयोगादिति। हितत्वं पुरुषार्थत्वम्, 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मेति, 'यो वै भूमा तत्सुखं, एष एव परम आनन्दः, 'विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतिभिस्तस्य परमानन्दत्वोपदेशात्तस्य च नित्यत्वेऽपि लोके धर्मजन्यतत्तदन्तःकरणवृत्तिव्यङ्ग्यतया तदुत्पत्तिविनाशोपचारः। अज्ञानव्यवहितस्य च तस्याप्राप्तस्येव ज्ञानमात्रादविद्यानिवृत्त्या प्राप्तिरिव भवतीति तदुद्देशेन च मुमुक्षुप्रवृत्त्युपपत्तिः। अध्यस्तस्य प्रपञ्चस्य दुःखरूपस्याधिष्ठानत्वात्स एवाभाव इति दुःखाभावरूपत्वेनापि तस्य पुरुषार्थता।

(लघुव्याख्या.)

नवमं पद्यमवतारयति—नन्विति। तत्साक्षिणः अवस्थासाक्षिणः अविद्याप्रयुक्ततदभिमानिन इवाविद्याप्रयुक्ततदवभासकस्यापि मिथ्यात्वमावश्यकमिति भावः। अविशेषात् मिथ्यात्वप्रयोजकयोराविद्यकत्वदृश्यत्वयोः साम्यात्। तत्रादौ युक्त्यसहत्वेन प्राप्तं तुच्छत्वं परिहरिष्यन् तदभावे हेतुभूतामपरिच्छिन्नत्वसाधिकां श्रुतिं पठति—न दृष्टेरिति। श्रुतिस्थार्तपदस्य दुःखित्वमर्थ इति तार्किकभ्रमनिरासाय श्रुत्यर्थं विशदयति—साक्षिण इति। तुच्छं मिथ्या। तथा च 'अर्द हिंसायामिति धातुनिष्पन्नार्तपदस्य बाधितार्थकत्वान्मिथ्यात्वं शाब्दमेवेति भावः आस्तिकाभिमानिनं श्रुत्या निराकृत्य शून्यवादिनिरासाय तर्कमाह—बाधेति। बाधकधीविषयत्वादित्यर्थः। साक्षिणो मिथ्यात्वे तु बाधकप्रमाया एव दौर्लभ्यात् कुतो मिथ्यावार्तेति भावः। भ्रमेति। अतत्त्वारोपरूपभ्रमस्य तत्त्वाज्ञानपूर्वकत्वात् भ्रमकारणीभूताज्ञानविषयत्वरूपादधिष्ठानत्वात्। ननु शून्यवादिमते भ्रमो न तत्त्वाज्ञानपूर्वकः किंतु पूर्वपूर्ववासनाप्रयुक्त एव। तथाच घटाद्याकारस्येव कल्पितस्य साक्षिणोऽपि बाधः स्यादेवेत्यत आह—तद्बाधेति। साक्षिबाधग्राहकाभावादित्यर्थः। असाक्षिकस्य बाधस्यायोगात्, परवेद्यत्वे सर्वशून्यताभङ्गात्, स्ववेद्यत्वे विरोधात्, स्वप्रकाशत्वे च संज्ञाकलहप्रसङ्गात् सर्वबाधसाक्षितया सिद्धस्य साक्षिणो न बाधो युक्त इति भावः। युक्त्या नित्यत्वं प्रसाध्य श्रुत्या तदाह—अथेति। अल्पं परिच्छिन्नं मर्त्यं विनाशि बाधरूपमृत्युग्रस्तं वा। समव्याप्तत्वात् परस्परं व्याप्यव्यापकभावात्। देशेत्यादि। देशकालनिष्ठाभावाप्रतियोगित्वात्। आपेक्षिकमहत्त्वेन यावन्मूर्तापेक्षयाधिकपरिमाणवत्त्वेन व्यापकत्वोपचारात्। 'आकाशवत्सर्वगतः, वायुः सर्वत्रगो महान्' इति श्रुतिस्मृत्यादिव्यवहारात्। आत्मनोऽपुरुषार्थत्वमाशङ्कते—नन्विति। सर्वव्यापकत्वेन कारणतया सर्वदृश्यानुस्यूतसच्चिन्मात्रत्वेन नित्यत्वात् ध्वंसप्रागभावाप्रतियोगित्वात्। अतो न दुःखाभावरूपस्तस्य जडत्वादिति भावः। ननु दुःखनिवृत्तिर्मास्तु दुःखध्वंसरूपः दुःखात्यन्ताभावरूपः स्यात् तस्य नित्यत्वात्तत्राह—भावरूपत्वाच्चेति। प्रतियोग्यनिरूप्यसत्यपदार्थस्वरूपत्वादित्यर्थः। तथा चात्मा यदि दुःखाभावरूपः स्यात्तदा प्रतियोगिनिरूपणाधीननिरूपणविषयः स्यात्। न तु

तथा। अतो न दुःखाभावस्वरूप इति भावः। प्रेयः प्रियतरम्। अन्यस्मात् आत्मभिन्नात्। अन्तरतरं आरोपितत्वेन बाह्यात्सर्वस्माद्दृश्याद्यतोऽन्तरतरं ब्रह्म सच्चिदानन्दरूपत्वात् अतः स्वतादात्म्याध्यासेन प्रियादपि प्रियतरमेतदिति भावः। भूमा अपरिच्छिन्नः। नित्यत्वे आत्मनो ध्वंसप्रागभावरहितत्वे तत्तदिति स्रक्चन्दनवनितादिसंयोगजन्यवृत्तीत्यर्थः। व्यङ्ग्यतया प्रकाश्यतया। तदुत्पत्तीति। सुखमुत्पन्नं नष्टमिति व्यवहारे सुखपदस्य व्यञ्जकवृत्तौ लक्षणेत्यर्थः। ननु यदि सुखमात्मरूपतया नित्यं तर्हि सिद्धत्वात् कथं तदुद्दिश्य प्रेक्षावतां प्रवृत्तिरित्याशङ्क्य सुखस्यात्मरूपतया नित्यत्वेऽपि विस्मृतग्रैवेयकादाविव ज्ञानसाध्यायाः प्राप्तेः फलत्वसंभवात्तदुद्दिश्य प्रवृत्तिर्नानुपपन्नेत्याह—अज्ञानेति। अज्ञानरूपावरकान्वितस्येत्यर्थः। अप्राप्तस्येव नतु वस्तुगत्या ग्रामादिवदप्राप्तस्य। ज्ञानेति अपरोक्षसाक्षात्कारादविद्यानिवृत्त्या प्राप्तिरिवेति विस्मृतग्रैवेयकादेरिवेति शेषः। अत एव मोक्षस्य ज्ञानफलत्वात् पुमर्थत्वम्। अनित्यत्वे तु ग्रामादेरिव क्रियाप्राप्तत्वेऽनित्यत्वप्रसक्त्याऽपुमर्थत्वापत्तेरिति दिक्। सुखात्मना पुमर्थत्वमुपपाद्य दुःखाभावात्मनापि तदुपपादयति—अध्यस्तस्येति। इदं च विशेषणं प्रतियोग्यधिकरणतया प्रसिद्धे एवाभावस्तिष्ठतीतिपक्षे दुःखाभावस्य तत्र संभवज्ञापनाय। तथाच सुखरूपस्यात्मनो विरुद्धस्वभावत्वेन दुःखभाक्त्वायोगात्तदभावाधारत्वायोगेऽपि प्रकृष्टप्रकाशे विभिन्नसत्ताकस्य कल्पितस्योलूकान्धकारस्येवाध्यासिकदुःखप्रसक्तेर्वास्तवतदभावाधिष्ठानत्वेन तथात्वे न किमपि बाधकमिति संक्षेपः। स एव परमानन्द एव। दुःखाभावरूपत्वेनापीति अपिशब्दः सुखात्मत्वसमुच्चायकः सुखदुःखाभावान्यतरात्मकत्वेनेत्यर्थः। तस्य आत्मनः। अज्ञानाभावस्य स्वत इच्छाविषयत्वाभावेन दुःखनिदाननिवृत्तितयैव पुमर्थस्यावश्यवाच्यत्वादज्ञाननिवृत्तित्वेनेति विहाय दुःखाभावत्वेनापीत्युक्तम्। दुःखस्य नित्यपरिहृतत्वेऽप्यपरिहार्यानाद्यविद्ययाऽपरिहृतस्येव ज्ञानमात्राद्रज्जुसर्पादेरिव भ्रमनिवृत्त्या परिहृतिरिव भवतीति प्राग्वत्प्रवृत्त्युपपत्तिः। पुमर्थो द्वेधा—प्राप्तिरिष्टस्य परिहारश्च निवृत्तिरनिष्टस्य। इष्टं द्विविधम्-वस्तुतोऽप्राप्तं ग्रामादि, प्राप्तमपि भ्रमव्यवहितं ग्रैवेयकादि। परिहार्यं द्वेधा—वस्तुतोऽपरिहृतं गर्तादि, सर्वदा परिहृतमपि भ्रमव्यवहितं रज्जुभुजङ्गादि। तत्र प्रथमौ प्राप्तिपरिहारौ क्रियाधीनौ, द्वितीयौ ज्ञानमात्राधीनौ। अत्रैव च क्रियाव्यवधानात् पुमर्थत्वं युक्तमिति भावः।

( संदीपनम् )

नवमश्लोकस्यावतारिकामाह—ननु जाग्रदिति। अपीति प्रथमपदं व्याकरोति—न द्रष्टेर्द्रष्टारमिति। इयं तु बृहदारण्यकीयोषस्तब्राह्मणस्था श्रुतिः। छान्दोग्यसप्तमाध्यायस्थ 'अथयदल्पमितिवाक्यमादाय व्यापकत्वादितिपदं व्याकरोति। अथेति—छान्दोग्यतृतीयाध्यायस्थं 'सर्वं खल्वितिवाक्यमादाय व्यापकत्वं साधयति—सर्वमिति। ननु देशकालपरिच्छेदशून्यत्वं चेद्व्यापकत्वं तर्हि कथमाकाशादेर्व्यापकत्वप्रथा तत्राह—आकाशादीनां चेति। नन्वेवमस्मिन् शास्त्रे प्रवृत्तिर्न युक्ता तत्प्रतिपाद्यमोक्षस्याप्यपुरुषार्थत्वादित्याशङ्क्य परिहरति—ननु सर्वव्यापकत्वेनेत्यादिना। पुरुषार्थत्वं परमपुरुषार्थत्वम्। परमपुरुषार्थत्वे बृहदारण्यकप्रथमाध्यायद्वितीयब्राह्मणस्थं वाक्यं प्रमाणमाह—तदेतदिति। तत्रैव छान्दोग्यसप्तमाध्यायवाक्यं प्रमाणयति—यो वै भूमेति। बृह-

दारण्यकमप्याह—एष एव परमानन्द इति, विज्ञानमानन्दमिति च। ननु सुखस्यात्मस्वरूपत्वेन नित्यत्वात् कथमुत्पन्नं सुखं, विनष्टं सुखमित्यादिप्रत्ययस्तत्राह—तस्य चेति। यथा पाकान्नीलो घटो नष्टो रक्त उत्पन्न इत्यर्थनाशोत्पादयोर्नीलरक्तविषयत्वं, यथा वा ककारो नष्ट इत्यादेर्नाशस्य व्यञ्जकवायुविषयत्वं, यथा वा घटापसारणकालीनघटोनास्तीतिप्रत्ययस्य घटसंयोगध्वंसविषयकत्वं, तथा सुखं नष्टमित्यादिप्रत्ययस्य व्यञ्जकवृत्तिध्वंसविषयकत्वमित्यर्थः। यदप्युक्तमात्मस्वरूपस्य मोक्षस्याप्यपुरुषार्थत्वान्न प्रवृत्तिस्तत्राह—अज्ञानव्यवहितस्य चेति। इदं तु मत्कृतसिद्धान्तभास्करादौ विविच्य प्रकटितम्। सुखात्मत्वेन प्रवृत्तिमुपपाद्य दुःखाभावत्वेनाप्युपपादयति—अभ्यस्तस्येति।

ननु मोक्षे सुखं संवेद्यते न वा? नाद्यः, तदानीं देहेन्द्रियाद्यभावेन तद्व्यञ्जकवृत्त्यभावात्, व्यञ्जकाभावेऽपि तत्संवेदनाभ्युपगमे संसारदशायामपि तथात्वप्रसंगात्। न द्वितीयः, अपुरुषार्थत्वापत्तेः। ज्ञायमानस्यैव तस्य पुरुषार्थत्वात्। अत एव शर्करातद्भोजिनोरिवेति वैष्णवंमन्यानामुद्गार इति चेन्नेत्याह—स्वतःसिद्धभावादिति। स्वप्रकाशज्ञानरूपत्वादित्यर्थः। यद्यपि संसारदशायामविद्यावृतरूपत्वादात्मा परमानन्दरूपतया न प्रथते तथापि तत्त्वविद्ययाऽविद्यानिवृत्तौ स्वप्रकाशतया स्वयमेव परमानन्दरूपेण प्रकाशत इति न तद्व्यञ्जकापेक्षा। ननु सुखस्य स्वप्रकाशज्ञानत्वेऽपि नात्मरूपता, ज्ञानस्य धात्वर्थतया क्रियात्वेन साश्रयत्वात्, जानामीतिप्रतीतेः, ज्ञानमहमस्मीत्यप्रतीतेश्च, तथाच कथमद्वैतवाद इत्याशङ्क्य नेत्याह-अनन्याश्रयत्वादिति। 'यत्साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दमिति श्रुतेः स्वप्रकाशज्ञानानन्दरूप एवात्मा, अन्तःकरणतादात्म्याध्यासेन च तद्वृत्तौ ज्ञानाध्यासाज्जानामीति तदाश्रयत्वप्रतीतिस्तदा धात्वर्थत्वमुत्पत्तिविनाशवत्त्वं चान्तःकरणवृत्तेरेवेति, ज्ञप्तिरूपमुख्यज्ञानस्य सर्वाधिष्ठानत्वेनान्याश्रयत्वाभावान्नाद्वैतक्षतिः। तेन ज्ञानसुखात्मक आत्मा सत्यस्तद्भिन्नं च सर्वं जगदसत्यमिति सिद्धम् ॥ ९ ॥

( लघुव्याख्या. )

शङ्कते—नन्वित्यादि। मोक्षे मोक्षावस्थायाम्। तद्व्यञ्जकेति। नित्यसुखाविर्भावकेत्यर्थः। लाघवाज्जन्यज्ञानसामान्यं प्रति शरीरेन्द्रियादीनां हेतुत्वकल्पनात्। तत्र तदङ्गीकारे तु संसारावस्थातोऽविशेषः स्यादिति भावः। ननु सावच्छिन्नानुभवं प्रत्येव देहेन्द्रियादीनां हेतुत्वं नतु निरवच्छिन्नानुभवं प्रति, अतस्तदा देहेन्द्रियाद्यभावेऽपि न हानिरिति तत्राह—व्यञ्जकेति देहेन्द्रियादिरूपज्ञापकाभावेऽपीत्यर्थः। तत्संवेदनेति नित्यसुखसंवेदनेत्यर्थः। संसारदशायां मोहतत्कार्यान्यतरकाले तथात्वप्रसङ्गात् संवेद्यत्वप्रसङ्गात्। व्यञ्जकसामग्र्या अनपेक्षणादिति शेषः। पुरुषार्थत्वात् काम्यत्वात्। असंवेद्यस्य पुमर्थत्वे परकीयसुखादेरपि तथात्वापत्तेरिति संक्षेपः। अत एव संवेद्यस्य पुमर्थत्वाङ्गीकारादेव शर्करेति [ विशेषो ] ब्रह्मभावापन्नतद्भक्तयो-

१ सुखेति पा०। २ न द्वैतापत्तिः पा०।

रिति शेषः। यथा शर्कराया रसरूपत्वेन न सुखानुभवस्तत्प्रयोजकस्य शर्करासंवेदनस्याभावात्। एवं ब्रह्मभावापन्नस्याखण्डानन्दानुभवरूपत्वेऽपि न सुखाविर्भावस्तत्संवेदनाभावात्। किंतु शर्कराभोक्तुरिव तद्भक्तस्यैव भेदेनावस्थितस्यायं विष्णुर्वैकुण्ठाधिपतिः सर्वेश्वरोऽखिलगुणपरिपूर्णो मत्सेव्योऽहं तु तद्दास इति संवेदनवतः। तस्माद्ब्रह्मभावो न मोक्षः किन्तु तत्संनिधिस्थितस्य तत्प्रसादेन निःशेषदुःखनिवृत्तिविशिष्टः स्वतो नीचोच्चभावापन्नः स्वरूपानन्दाविर्भावो विदेहमुक्तिः। अपरोक्षज्ञानसत्त्वेऽपि स्वयोग्यपरमानन्दहेतुपरमभक्त्यभावे मोचकस्येश्वरप्रसादस्याभावादारब्धकर्मणा संसारानुवृत्तौ तु जीवन्मुक्तिरिति। तदेतन्मतमाश्रिता माध्वादयो वैष्णवंमन्या एव नतु वैष्णवाः। एकः समस्तं यदिहास्ति किञ्चित्तदच्युतो नास्ति परं ततोऽन्यत्। सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्। एवमेकमिदं ब्रह्म न भेदि सकलं जगत्। वासुदेवाभिधानस्य स्वरूपं परमात्मनः॥ तदेतदुपदेक्ष्यन्ते संक्षेपेण महामुने। परमार्थसारभूतं यदद्वैतमशेषतः। तद्भावभावनापन्नस्ततोऽसौ परमात्मना। भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्। इत्यादिविष्णुपुराणोक्तेः। 'ब्रह्मैव सन् ब्रह्माप्येति, ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुतेः। अधिकदर्शने दुःखद्वेषादेरपि संभवात् मधुविषसंपृक्तान्नवन्मुक्तेर्दुःखसंभिन्नसुखाविर्भावरूपत्वप्रसक्त्या हेयत्वापत्तेश्चेत्याद्यन्यत्र विस्तरः। मुक्तावुच्चनीचभावाङ्गीकारे तु 'अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते इति माण्डूक्यश्रुतिविरोधः। अनेकजन्मसाहस्रीं संसारपदवीं व्रजन्। मोहं श्रमं प्रयातोऽसौ वासनारेणुगुण्ठितः। प्रक्षाल्यते यदा सोऽस्य रेणुर्ज्ञानोष्णवारिणा। तदा संसारिपान्थस्य याति मोहश्रमः शमम्। मोहश्रमे शमं याते स्वस्थान्तःकरणः पुमान्। अनन्यातिशयाबाधं परं निर्वाणमृच्छतीति विष्णुपुराणविरोधश्च। कैवल्ये ज्ञानमात्रस्य हेतुत्वात्। भगवत्प्रसादश्चैतादृशनिष्ठाविरोधिविघ्ननिवारण उपक्षीयते। तदुक्तम्। 'तस्माददृष्टश्रुतदूषणं परं भक्त्यैकयेशं भजतात्मलब्धये, इति दिक्। स्वप्रकाशरूपत्वेऽपि ब्रह्मणो व्यञ्जकं विना संसारकाल इव मुक्तिकाले प्रकाशायोगात् कथं पुरुषार्थत्वमित्याशङ्क्य व्यञ्जकाभावेऽप्यनावृतत्वरूपविशेषबलादेव प्रकाशसंभवात्तस्य तद्युक्तमित्याह—यद्यपीत्यादि। न प्रथते न भाति। प्रकाशते भाति अनावृतत्वेन संशयाद्यविषयत्वान्न व्यञ्जकापेक्षा। तथाच मुक्तिकालेऽनावृतत्वेन भासमानस्य पुमर्थत्वं युक्तमिति भावः। पुरुषार्थस्योपपादनेऽपि नद्वैतं सिध्यति धर्मरूपतया तस्यातिरिक्ताश्रयावश्यंभावात्। नच धर्मिरूपमेव तत्, प्रत्यक्षविरोधादित्यभिप्रेत्याशङ्कते—नन्विति। आत्मरूपत्वाभावे हेतुमाह-ज्ञानस्येति। सुखज्ञानयोरेकत्वाङ्गीकारादिति भावः। साश्रयत्वात् स्वभिन्नधर्मिवृत्तित्वात्। साश्रयत्वे प्रमाणमाह—जानामीति। साश्रयत्वांशे भ्रमोऽस्तु तत्राह—ज्ञानमिति। बाधकं विना भ्रमत्वकल्पनाया अन्याय्यत्वादिति भावः। जानामीत्यादिप्रतीतेरन्तःकरणधर्मवृत्तिविषयकत्वेन सावकाशत्वात् निरवकाशश्रुतिसिद्धज्ञानात्मत्वमेवोचितमित्यभिप्रेत्य तदर्थिकां श्रुतिमुदाहरति—यत्साक्षादित्यादि। एवं चात्मनः स्वप्रकाशत्वबोधनद्वारा ज्ञानात्मत्वज्ञापिका 'यः सर्वान्तर इति व्याप-

कत्वबोधनेनाखण्डताज्ञापिका 'सत्यं ज्ञानमनन्तमिति च धर्मधर्मिभावनिरासेन साक्षात् ज्ञानात्मत्वज्ञापिका 'विज्ञानमानन्दमिति तु ज्ञानानन्दयोरेकत्वबोधिका तदेवाह—स्वप्रकाशेति। प्रत्यक्षस्य सावकाशतां दर्शयति—अन्तःकरणेति। आत्मनि मनस्तादात्म्याध्यासेनेत्यर्थः। तद्वृत्तौ अन्तःकरणपरिणामरूपायां वृत्तौ ज्ञानाध्यासात् आत्मरूपज्ञानस्य तादात्म्याध्यासात् तदाश्रयत्वप्रतीतिः जानामीति ज्ञानाश्रयत्वप्रतीतिः। तथाचास्मन्मते ज्ञानसुखादिवृत्तीनां मनोवृत्तित्वात्तादृशप्रतीतीनां विशिष्टाहङ्कारे स्वरूपज्ञानसुखतादात्म्यापन्नमनोधर्मरूपवृत्तिविषयकत्वेनानुपपत्त्यभावान्न तद्विरोधेनात्मनो ज्ञानानन्दत्वस्यासिद्धिरिति भावः। ननु यद्यात्मैव ज्ञानं तर्हि नित्यतया धात्वर्थत्वानुपपत्तिः धात्वर्थक्रियायाः कारणसाध्यत्वात् साश्रयत्वाच्च, एवं ज्ञानमुत्पन्नं नष्टमिति प्रतीतयोऽनुपपन्ना इत्याशङ्क्यान्तःकरणवृत्तेरेव धात्वर्थत्वाद्यङ्गीकारान्नानुपपत्तिगन्धोऽपीत्याह—धात्वर्थत्वमिति। धात्वर्थत्वं 'ज्ञाऽवबोधन इत्यादिधातुपदेन बोध्यक्रियारूपता वृत्तेरेव वृत्त्यवच्छिन्नचित एव ज्ञप्तिरूपसुखज्ञानस्य शुद्धचिद्रूपसुखाभिन्नज्ञानस्य अन्याश्रयत्वाभावात् अन्याश्रितत्वाभावात् न द्वैतापत्तिः नाश्रयावश्यंभावनिबन्धनद्वैतापत्तिः। क्रियारूपत्वाभावेनाश्रयानपेक्षणात्। तथाचाहङ्कारज्ञानयोर्विशिष्टविवक्षायां नाहं ज्ञानमिति प्रतीतिः, तयोर्धर्मधर्मिभावाङ्गीकारात्। निष्कृष्टविवक्षायां त्विष्टापत्तिरेवेति न काप्यनुपपत्तिरिति भावः। ज्ञानसुखात्मकः ज्ञानाभिन्नसुखात्मकइत्यर्थः॥ ९॥

( संदीपनम् )

तत्संवेदनाभ्युपगमेऽखण्डानन्दसाक्षात्काराभ्युपगमे। संसारदशायामिति आवरणकाले। चन्दनसंयोगोत्तरकालीनसुखाभिव्यक्तिवदखण्डपरमानन्दसाक्षात्कारप्रसङ्गः स्यादित्यर्थः। हेतुमाह—जानामीति आश्रयत्वसंबन्धेन ज्ञानवान्, ज्ञानाश्रयत्वं चेत्यर्थः। ज्ञानस्य साश्रयत्वे प्रतीतिमुपन्यस्यात्मनो ज्ञानात्मत्वे बाधकमाह—ज्ञानमहमिति। बृहदारण्यककहोळोषस्यब्राह्मणयोर्वाक्यमाह—यत्साक्षादिति सर्वान्तर इत्यन्तम्। तैत्तिरीयकब्रह्मवल्लीस्थवाक्यमाह—सत्यं ज्ञानमिति। बृहदारण्यकपञ्चमाध्यायस्थवाक्यमाह—विज्ञानमानन्दमिति। यद्यात्मस्वरूपं ज्ञानं तर्हि जानामीति प्रत्ययसाक्षिकं ज्ञानाश्रयत्वं कथं तत्राह—अन्तःकरणेति। तद्वृत्तावन्तःकरणवृत्तौ। एवमप्यात्मस्वरूपज्ञानस्य धात्वर्थत्वं कथं तत्राह—धात्वर्थत्वमिति। यदप्युक्तं कथमद्वैतवादस्तत्राह—ज्ञप्ति ज्ञप्तिरूपेति। उपसंहरति—तेन ज्ञानेति। इति नवमः श्लोकः॥ ९॥

ननु सर्वस्य जगतस्तुच्छत्वे तन्निषेधेनात्मत्वप्रतीतिर्न स्यात्, न हि शशविषाणं निषिध्यते, क्वचित्प्रमितं क्वचिन्निषिध्यते इतिन्यायात्। तथाच निषेधानुपपत्त्यैव न जगतस्तुच्छत्वमिति, नेत्याह—

न चैकं तदन्यद्द्वितीयं कुतः स्या-
न्न वा केवलत्वं न चाकेवलत्वम्।
न शून्यं न चाशून्यमद्वैतकत्वात्
कथं सर्ववेदान्तसिद्धं ब्रवीमि॥ १०॥

एकत्वसंख्यायोग्येकं, तदपेक्षाबुद्धिजन्यद्वित्वसंख्यायोगि द्वितीयं तदेकाभावे द्वितीयं कुतः स्यात्। द्वितीयं च तृतीयादीनामुपलक्षणम्। नन्वेकमेवाद्वितीयमितिश्रुत्यैकत्वं प्रतिपाद्यते, नेत्याह—न वा केवलत्वम्। केवलत्वमेकत्वं तस्याविद्यकत्वात्। यद्यात्मन एकत्वं श्रुत्या न प्रतिपाद्यते तर्हि प्रत्यक्षादिमानवशादनेकत्वमेव स्यादिति नेत्याह—न चाकेवलत्वमिति। अकेवलत्वमनेकत्वम् 'नेह नानास्ति किं च न, एकमेवाद्वितीयं, अथात आदेशो नेति नेति, इत्यादिश्रुतिभ्यः। तर्हि सर्वप्रतिषेधाच्छून्यमेव स्यादिति नेत्याह—न शून्यमिति। 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेतिचेद्वेद सन्तमेनं ततो विदुरिति, सत्यं ज्ञानमनन्तं ब्रह्म, सदेव सोम्येदमग्र आसीदित्युपक्रम्य, ऐतदात्म्यमिदं सर्वं, तत्सत्यं स आत्मा तत्त्वमसि, इत्यादिश्रुतिभिः सत्यत्वप्रतिपादनात्। सर्वभ्रमाधिष्ठानत्वात्सर्वबाधावधित्वाच्च। तर्हि सत्यत्वज्ञानत्वादिधर्मवदपि स्यान्नेत्याह—न चाशून्यमिति। एकमद्वितीयमितिपदद्वयेन सर्वप्रतिषेधेऽपि एवकारेण धर्मधर्मिभावादिभेदाभेदप्रतिषेधात्। सर्वत्र हेतुमाह—अद्वैतकत्वादिति। द्विधा इतं द्वीतं तस्य भावो द्वैतं तदुक्तं—द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते, इति। न विद्यते द्वैतं द्विधाभावो यत्र तदद्वैतमित्यक्षरार्थः। 'सलिल एको द्रष्टाऽद्वैत इति श्रुतेः। प्रतियोगिज्ञानस्यैव लाघवेनाभावबुद्धौ हेतुत्वाद्द्वैतस्य चानिर्वचनीयत्वाङ्गीकारेण प्रत्यक्षादिवेद्यत्वान्निषेधोपपत्तिरित्यर्थः। तर्ह्येतादृश आत्माऽङ्गुलिनिर्देशेन प्रतिपाद्यतामिति नेत्याह—कथं ब्रवीमिति। किमाक्षेपे। अद्वैतकत्वेन वागविषयत्वादवचनेनैव प्रोवाच, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, न विज्ञातेर्विज्ञातारं विजानीया इत्यादिश्रुतिभ्यः। वागविषयत्वे कथं वेदान्तानां तत्र प्रामाण्यमितिचेत्, अविषयेऽप्यात्मनि तदाकारवृत्तिमात्रेण तदविद्यानिवर्तकत्वादित्याह—सर्ववेदान्तसिद्धमिति। तथाच श्रुतिः 'यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्, 'यन्मनसा न मनुते येनाहुर्मनो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इत्यादिरविषयत्वमात्मनो दर्शयति। तदेवं वेदान्तवाक्यजन्याखण्डाकारमनोवृत्त्या अविद्यातत्कल्पितसकलानर्थनिवृत्तौ परमानन्दरूपः सन् कृतकृत्यो भवतीति सिद्धम् ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरभगवत्पूज्यपादशिष्यश्रीमधुसूदनमुनिविरचितः सिद्धान्ततत्त्वबिन्दुः समाप्तः ॥

( लघुव्याख्या. )

दशमं श्लोकमवतारयति–नन्विति । जगतः शुद्धचिन्मात्रभिन्नस्य तुच्छत्वे शशविषाणादिवदलीकत्वे तन्निषेधेन एकमेवाद्वितीयमिति द्वैतनिराकरणेनात्मतत्त्वप्रतिपत्तिः अद्वितीयात्मयाथार्थ्यज्ञानं प्रतियोगिज्ञानं विनाऽभावबुद्धेरनुदयादिति भावः । अप्रसिद्धप्रतियोगिकनिषेधोऽस्तु तत्राह–नहीति । किमिति तत्राह–क्वचिदिति । क्वचिद्देशान्तरे क्वचिद्भ्रमाधिष्ठाने निषिध्यते भ्रमप्रसिद्धिमादायापीति भावः । भ्रमस्यान्यत्र प्रमामूलकत्वदर्शनात्तत्र तद्भ्रमप्रसिद्धिमादाय तस्य निषेधेऽन्यत्र प्रमितत्वावश्यकत्वान्न भ्रममात्रप्रसिद्धिमादाय तन्निषेधस्तर्कसह इति भावः । अतएवानिर्वचनीयत्वमङ्गीक्रियत इत्यापातवेदान्तिनामुक्तिमात्रं न प्रामाणिकमित्यभिप्रेत्याह–तथाचेति । वास्तवाभावप्रतियोगित्वमेवानिर्वचनीयत्वम् । तज्ज्ञानं चाभावप्रतियोगिज्ञानाधीनम् । प्रतियोगिज्ञानं च परोक्षं भ्रमात्मकं वाऽन्यत्र प्रतियोगिप्रमाधीनम् । प्रमा च विषयसत्ताधीना । ततश्च विषयस्य ब्रह्मणि निषेधेऽन्यत्र सत्त्वमवश्यमङ्गीकार्यम् । अन्यथा तन्निषेधानुपपत्तेरित्याद्यन्यत्र विस्तरः । 'एकधैवानुद्रष्टव्यमिति'श्रुतेर्निर्विकल्पात्मज्ञानमेव कारणं न द्वितीयाभावप्रकारकम् । अतस्तज्ज्ञानार्थं प्रतियोगिसत्त्वापादनमनुपयुक्तमित्यभिप्रायकं न चैकमिति श्लोकं व्याचष्टे—एकत्वेति । अयमेकोऽयमेक इति गणनव्यवहारासाधारणकारणमेकत्वसंख्या तद्विशिष्टमित्यर्थः । तदपेक्षेति । अनेकैकत्वसापेक्षबुद्धीत्यर्थः । अयमेकोऽयमेक इत्येकत्वद्वयविषयकज्ञानेनेति यावत् । द्वितीयं कुतः स्यादिति । द्वितीयाप्रसिद्ध्या तदभावानिरूपणप्रसक्तिरिष्टैवेति भावः । नन्विति । आविद्यकत्वात् धर्मरूपत्वेन तस्याविद्याकार्यत्वादित्यर्थः । तदप्याविद्यकं बाधितमिति भावः । अनेकत्वं द्वितीयसंबन्धित्वम् । इह ब्रह्मणि नाना भिन्नं किंचन किमपि । 'एकमेवाद्वितीयमिति सजातीयविजातीयस्वगतभेदरहितमित्यर्थः । अथेति । अथ मूर्तामूर्तकथनानन्तरम् । आदेशः अज्ञातार्थज्ञापनम् नेतिनेतीति । पूर्वोक्तं मूर्तामूर्तात्मकं नास्ति नास्तीत्यर्थः । असन्नेव स भवति पुमर्थसम्बन्धी न भवति असद्ब्रह्मेति वेद चेत्, चेत् यदि असत् अविद्यमानं ब्रह्म वेद जानाति शून्यसाक्षितयापि ब्रह्मणोऽस्तित्वमावश्यकमित्यभिप्रेत्याह–अस्ति ब्रह्मेवीति । अस्तीति वेद जानाति चेत् यदि सन्तं परमार्थसदापन्नं एनं एवंविदं विदुः ब्रह्मविदो ज्ञानवन्तः । तस्मादस्तिदर्शनात् सोऽन्येषां ब्रह्मवद्विज्ञेयो भवतीत्यर्थः । श्रुत्यन्तरमाह–सत्यमिति । सत्यं कालाबाधितं ज्ञानं ज्ञप्तिरूपं अनन्तं न विद्यतेऽन्तः देशकालवस्तुपरिच्छेदलक्षणो यस्य तत् । श्रुत्यन्तरं सदेवेति । इदं नामरूपात्मकम् । अग्रे सृष्टेः पूर्वं सदेवासीत् अधिष्ठानभूतसन्मात्रमासीदित्यर्थः । यथा घटः स्वोत्पत्तेः पूर्वं मृदेव तद्वदिति भावः । ऐतदात्म्यमिदम्–एतदात्मस्वरूपं सर्वं जगत् । सदेवेत्यादौ स्पष्टं ब्रह्मात्मत्वं न लभ्यत इत्यत आह–इत्यादीति 'ब्रह्मैवेदं विश्वं 'आत्मैवेदं सर्वमित्यादिश्रुतिभिरित्यर्थः । तथाचेयं श्रुतिः श्रुत्यन्तरेणैव व्याख्यातेति भावः । आत्मैवेदमित्यादौ श्रुत्यर्थस्तु यो राधेयः स कौन्तेय इत्यादौ यथा राधापुत्रत्वेन प्रतीतः कर्णो न वस्तुतो राधापुत्रः किन्तु कुन्तीपुत्र इति तथा नामरूपात्मना प्रतीतमिदं जगत् न वस्तुतोऽस्ति किन्त्वात्मैव सद्रूपः सर्वाधिष्ठानभूत इति,

बाधायां सामानाधिकरण्यम्। अतो न सर्वाभेदकृतविकारित्वादिसंभावनापीति दिक्। श्रुत्या सत्यत्वं समर्थ्य युक्त्यापि तदाह—सर्वेति। सर्वभ्रमकारणीभूताज्ञानविषयत्वादित्यर्थः। एतदुक्तिकृत्यमाह—सर्वेति। सर्वबाधकप्रमाविषयत्वादित्यर्थः। तथाच जगद्बाधान्यथानुपपत्त्या बाधकप्रमाविषयस्य तस्य सत्यत्वमावश्यकमेव शुक्तिरजतादौ अधिकसत्ताकगोचरप्रमाया एव न्यूनसत्ताकबाधकत्वदर्शनादिति भावः। सर्वप्रतिषेधेऽपि—सजातीयविजातीयनिराकरणेऽपि। धर्मेति। धर्मधर्मिभावप्रयोजकौ यौ भेदाभेदौ तत्प्रतिषेधादित्यर्थः। भेदमात्रेऽङ्गीकृतेऽश्वमहिषयोरिव संबन्धानुपपत्तेर्भेदस्यानिर्वाच्यत्वेनाभेदस्यापि तदभावरूपस्यानिर्वाच्यत्वात्तयोर्द्वयोरपि निषेधः। सलिलमिव सलिलः स्वच्छो निरुपाधिक इति यावत्। एकः सजातीयभेदशून्यः अद्वैतः विजातीयरहितः। तथापि प्रतियोगिज्ञानस्यावश्यकत्वमागतमेव ततश्च तद्दोषतादवस्थ्यमत आह—प्रतियोगीत्यादि। ज्ञानस्यैव नतु प्रमायाः। लाघवेन प्रमात्वानिवेशलाघवेन। अगृहीताबाधितार्थकज्ञानत्वरूपप्रमात्वापेक्षया ज्ञानत्वस्य लघुशरीरत्वादिति भावः। अत्र ज्ञानस्यैव कारणत्वात् द्वैतस्य च प्रत्यक्षादिवेद्यत्वान्निषेधोपपत्तिरिति योजना। ननु प्रत्यक्षादिवेद्यस्य कथं निषेधस्तत्राह—अनिर्वचनीयेति। मिथ्यात्वाङ्गीकारेणेत्यर्थः। तथाच प्रत्यक्षादीनां न तात्त्विकं प्रामाण्यं येन तत्सिद्धस्य निषेधोऽनुपपन्नः स्यात् किन्तु व्यावहारिकं विशेष्ये विशेषणसंसर्गमात्रबोधजननादिति भावः। अङ्गुलिनिर्देशेन प्रमाणफलविषयतया। अद्वैतेति। स्वसमसत्ताकत्वसंबन्धेन यत्किञ्चिद्विशिष्टान्यत्वेन वागादिप्रमाणफलाविषयत्वादित्यर्थः। शब्दस्य पदार्थतावच्छेदकपुरस्कारेणैव प्रमितिजनकत्वस्वभावादिति भावः। अवचनेनैव वचनं विनैव प्रोवाच ज्ञापितवान् यत इति। यतो यस्मान्निर्विकल्पकाद् ब्रह्मणः वाचः वचांसि निर्धर्मकत्वान्मुख्यवृत्तेरसंभवेनासंबध्य निवर्तन्ते तद्बोधनसामर्थ्याद्धीयन्ते इदमित्थंतया प्रतिपादनेऽसमर्थानि भवन्तीति यावत्। ननु मास्तु शब्दाद्बोधो मनसा तु स्यादेव स्वच्छस्य स्वसम्बन्धार्थग्राहकत्वदर्शनादित्यत आह—मनसा सहेति। श्रुतार्थ एव मनसः प्रवृत्तिसंभवात्। श्रवणं विना मनोऽपि न ग्रहणे समर्थमिति भावः। श्रुत्यन्तरं न विज्ञातेरिति। विज्ञातेः मनोवृत्तिरूपस्य ज्ञानस्य विज्ञातारं भासकचिद्रूपं न विजानीयाः। प्रमाणफलविषयतया न जानासि निराकारत्वादिति भावः। वागविषयत्वे वचनाविषयत्वे तत्र ब्रह्मणि प्रामाण्यं तद्विषयकप्रमाजनकत्वरूपम्। अविषये फलाविषये। तदाकारवृत्तिमात्रेण शुद्धचिन्मात्रवृत्तिगोचरवृत्तिमात्रेण। तथाच तत्र वेदान्तानां प्रामाण्यं तदाकारवृत्तिरूपप्रमाकरणत्वं नतु तद्विषयकफलरूपप्रमाप्रयोजकत्वरूपमपि। तदुक्तम्—ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते। फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितमिति। अन्यथा वेदान्तानामानर्थक्यमेव स्यान्नतु तद्युक्तं 'तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुत्यैव श्रुतीनामेव तत्र प्रामाण्यसमर्थनादित्यभिप्रेत्याह—सर्ववेदान्तसिद्धमिति। सर्वे वेदान्ताः उपनिषत्तन्मूलकसूत्रभाष्यादीनि च तत्सिद्धं तत्करणकवृत्तिविषय इत्यर्थः। वृत्तिविषयत्वमेवास्ति न फलविषयत्वमित्याचार्याभिप्रायं श्रुत्या दर्शयति—यस्येति। अमतं प्रमाणजन्यफलविषयत्वेनाज्ञा-

  

तम् । मतं स्वप्रकाशचिदात्मना परिशेषाज्ज्ञातं, सर्वभासकतया प्रमितस्य प्रमाणफलाविषयत्वे स्वप्रकाशत्वमर्थात् सिद्धमेवेति भावः । तत्रोपपत्तिमाह—अविज्ञातमिति । विजानतां प्रमाणफलविषयत्वेन ज्ञातवतां पुरुषाणां अविज्ञातं स्वप्रकाशत्वेनाज्ञातम् । अविजानतां प्रमाणफलविषयत्वेनाज्ञातवतां विज्ञातं स्वप्रकाशप्रत्यगात्मना ज्ञातम् । प्रमाणजन्यफलविषयत्वं मास्तु प्रमातृवेद्यत्वमस्त्विति भ्रान्तं प्रति श्रुत्यन्तरमाह—यन्मनसेति । यद्वस्तु सर्वावभासकं मनसा विज्ञानरूपकरणेन न मनुते न फलविषयीकरोति, प्रमातेति शेषः । येन ब्रह्मणा मनः विज्ञानरूपं करणं मतं विषयीकृतम् । आहुः श्रुतय इति शेषः । तदेव सकलकरणानामविषयीभूतम् । कथं तर्हि तदुपास्यमित्याशङ्क्योपास्यं तन्न भवत्येवेत्याह—नेदमिति । यदिदमुपास्यकर्मत्वेनाभिमतम् उपासते श्रुत्यादिप्रमाणेन तत्तद्गुणवत्तया जानन्ति उपासका इति शेषः । नेदं तत् इदं सगुणत्वादिनाभिमतं, सर्वाधिष्ठानचिन्मात्राखण्डानन्दाद्वयपरमात्मरूपं न भवतीत्यर्थः । गुणवत्तयावगतस्य मायिकत्वेन परमात्मत्वायोगादिति भावः । मास्तु केवलगोचरत्वम् । घटाद्यवच्छेदेन सद्रूपस्य सन् घट इति चाक्षुषत्वानुभवात् चक्षुरादिसहकृतमनोगोचरत्वं तु स्यादेवेत्यत आह—इत्यादिरिति । 'यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यन्ति यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतमित्यादिश्रुतिरिन्द्रियागोचरत्वमपि वदतीत्यर्थः । तथाच 'सन् घट इत्यादावप्युपादानभूतं मायोपाधिकमेव भाति नतूपलक्षितमपि तदेव चास्माकं परमात्मभूतमिति भावः । अविषयत्वमिति । चित एव मुख्यज्ञानरूपत्वात्तदीयसंबन्धस्यैव मुख्यविषयतारूपत्वात्तत्सामान्याभावं फलविषयत्वनिराकरणद्वारा दर्शयन्तीत्यर्थः । वृत्तेरावरणनिवृत्तियोग्यत्वरूपाकारत्वाख्यसंबन्धस्तु न मुख्यविषयता । अतस्तस्या ब्रह्मणि स्वीकारेऽपि न विरोध इति भावः । उपसंहरति—तदेवमिति । तथाचायं समुदितग्रन्थार्थः—सकलोपाध्यतीतः परमात्मैव वस्तुतो वर्णाश्रमादिरहितः स्वकल्पितानाद्यविद्यया जीवेशादिविभागेन स्वस्वोचितानि कर्माणि कुर्वन् प्रतिदेहमहमहमिकया बद्ध इव शास्त्रजन्यज्ञानेन मुक्त इव भवति न वस्तुतो बन्धमोक्षवान्, बन्धहेतोरज्ञानस्यानिर्वाच्यत्वात् । अज्ञानस्य कल्पितस्याधिष्ठानव्यतिरेकेणाभावात् परमात्मैव जीवजगद्भावादिना व्यवह्रियमाणवस्तु नान्यत्, श्रुतियुक्तिविरोधात् । अतो द्वैततत्सत्यत्ववादो मूढानामज्ञानविजृंभित एवेति शिवम् ।

(संदीपनम्)

दशमश्लोकमवतारयति—**ननु सर्वस्येति**। तदन्यद्द्वितीयं कुतः स्यादिति व्याकर्तुं नचैकमिति वाक्यस्थमेकपदं व्याकरोति—**एकत्वसंख्यायोगीति**। नचानेकत्वमिति प्रतिज्ञायां बृहदारण्यकषष्ठाध्यायस्थवाक्यं कठवल्लीस्थं च हेतुत्वेनाह—**नेह नानेति**। छान्दोग्यषष्ठाध्यायीयवाक्यमाह—**एकमेवाद्वितीयमिति**। 'सदेव सौम्येदमासीदित्यादिबृहदारण्यकीयचतुर्थाध्यायस्थमूर्तामूर्तब्राह्मणवर्तिवाक्यमपि तत्रैव हेतुत्वेनाह—**अथात इति**। तैत्तिरीयकब्रह्मवल्लीस्थवाक्यमाह—**असन्नेवेति**। **सत्यत्वे** तैत्तिरीयकवाक्यमुदाहरति—**सत्यमिति**। छान्दोग्यवाक्यमाह—**सदेवेति**। बृहदारण्यकषष्ठाध्यायीयज्योतिर्ब्राह्मणवर्तिवाक्यमाह—**सलिल एक इति**। यदपि क्वचित्प्रमितं क्वचिन्निषिध्यत

इत्यनेन प्रतियोगिप्रमात्वेन कारणत्वमुक्तं तदपनुदति—प्रतियोगिज्ञानस्यैवेति। यदप्युक्तं निषेधानुपपत्त्यैव जगतस्तुच्छत्वं तत्राह—द्वैतस्येति। किमाक्षेप इति वाग्विषयत्वं नास्तीत्यर्थः। एतदेवाह—अद्वैतकत्वेनेति। वागविषये हेतुत्वेन श्रुतिमुदाहरति—अवचनेनैवेति। ब्रह्मवल्लीस्थवाक्यमाह—यत इति। उषस्तब्राह्मणवाक्यमाह—न विज्ञातेरिति। वागविषयत्व इति। एवं च ब्रह्मणः शास्त्रप्रतिपाद्यत्वं व्याहतमिति भावः। तदाकारेति। वृत्तेस्तदाकारत्वं ब्रह्माकारत्वं नतु ज्ञानत्वं विषय ब्रह्मणः। एवं च नाप्रामाण्यं वेदान्तस्येति भावः। केनस्थवाक्यमाह—यस्यामतमिति। तत्रत्यवाक्यान्तरमाह—यन्मनसेति। ग्रन्थस्य पर्यवसितं परमपुरुषार्थप्रयोजनत्वमुपसंहारव्याजेनाह—तदेवमिति ॥१०॥

**न स्तौमि तं व्यासमशेषमर्थं सम्यङ् न सूत्रैरपि यो बबन्ध ।**
**विनापि तैः संग्रथिताखिलार्थं तं शङ्करं नौमि सुरेश्वरं च ॥ १ ॥**

(लघुव्याख्या.)

विनापि–सूत्रैरिति। सूत्रशब्दस्य तन्तौ स्वल्पाक्षरत्वादिगुणयुक्तसङ्ग्रहवाक्ये च प्रयोगात् श्लेषमूलको व्यतिरेकालङ्कारोऽयम्। भगवत्पूज्यपादास्तु विनापि सूत्रैः सर्वार्थान् सङ्गृहीतवन्त इत्यर्थः ॥ १ ॥

(संदीपनम्)

स्वव्याख्यातदशश्लोकीकर्तुः प्रकृतवेदान्तशास्त्रप्रधानीभूतवार्तिककर्तुश्च स्तुतिरूपमन्त्यमङ्गलं सम्यक् कृतग्रन्थप्रसिद्धये करोति—न स्तौमीति ॥ तं व्यासं न स्तौमि योऽशेषमर्थं सूत्रैरपि न सम्यग्बबन्ध तैः सूत्रैर्विनापि ग्रथिताखिलार्थं तं प्रसिद्धं शङ्करं सुरेश्वरं च नौमीतिसम्बन्धः ॥ अर्थः मौक्तिकादिः। प्रकृतग्रन्थाभिधेयं च। सूत्रं तूलादिभवं पदसमूहरूपं च, बन्धनं संयोगविशेषरूपं निबन्धनं च तथा सङ्ग्रन्थनमपि। अत्र चैतादृशाशेषमहिमद्योतनेनार्थबन्धनसमर्थैः सूत्रैरपि अर्थबन्धनासमर्थात् व्यासात्, बन्धनसामग्रीं विना कृताखिलार्थग्रथनप्रकाशनरूपविभावनालङ्कारद्योत्यं दशश्लोकीकर्तुराधिक्यरूपव्यतिरेकालङ्काररूपं व्यङ्ग्यमिति बोध्यम् ॥ १ ॥

**लघुरपि बह्वर्थवहश्चिन्तामणिरिव निबन्धोऽयम् ।**
**मधुसूदनेन मुनिना विहितो गुणिनां विनोदाय ॥ २ ॥**

(लघुव्याख्या.)

लघुः अतिस्वल्पः वहः प्रापकः निबन्धः ग्रन्थः। गुणिनां सकलविद्यापारङ्गतानामीर्ष्यासूयादिरहितानाम् ॥ २ ॥

(संदीपनम्)

अथ प्रवर्तकज्ञानसम्पत्तये चिन्तामणिसाम्येन स्वकृतग्रन्थोत्कर्षं प्रतिपादयति—लघुरिति। लाघवमपकृष्टगुरुत्वं बाहुल्याभावश्च अर्थः स्वर्णादिः प्रकृतग्रन्थाभिधेयं च, मुनिना मननशीलेन एतावता लघुतरप्रकृतग्रन्थाद्बह्वर्थप्रतिपत्त्या विनोदरूपं प्रयोजनमनवद्यमावेदितम् ॥ २ ॥

**यदत्र सौष्ठवं किंचित्तद्गुरोरेव मे नहि ।**
**यदत्रासौष्ठवं किंचित्तन्ममैव गुरोर्नहि ॥ ३ ॥**

(लघुव्याख्या.)

अत्र ग्रन्थे सौष्ठवं गुणवत्त्वं सर्वार्थसङ्ग्राहकत्वादिरूपं गुरोरेव न ममेत्यर्थः। श्रुत्यर्थतदनुकूलतर्काणां श्रीमदाचार्यपरम्पराप्राप्तगुरुमूलकत्वादिति भावः। असौष्ठवं भाष्यभामतीविवरणाद्यपेक्षया कठिनरूपम्। अखिलविद्याप्रवीणतार्किकशिरोमणिभट्टाचार्यरीत्यनुसरणादिति भावः॥३॥

॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामगोविन्दतीर्थशिष्य[तथा?]-
श्रीवासुदेवतीर्थविद्याशिष्यश्रीनारायणतीर्थविरचिता
सिद्धान्तबिन्दुलघुव्याख्या संपूर्णा।

---

(संदीपनम्)

अत्रत्यस्य सौष्ठवस्य गुरुपरंपरासिद्धत्वद्योतनेन विपरीतसंभावनामसौष्ठवस्यासत्त्वेऽपि स्वकृतत्वकथनेन स्वाविनयं प्रत्याचष्टे—यदत्रेति। किञ्चिदनिर्वाच्यं किञ्चित्स्वल्पं गुरोर्नहीत्यनेन सम्यगनुरूपोपदेशभाजो ममापि तदसंभावितमेवेति ध्वनितम्॥ ३॥

बहुयाचनया मयाऽयमल्पो बलभद्रस्य कृते कृतो निबन्धः।
यददुष्टमिहास्ति यच्च दुष्टं तदुदाराः सुधियो विवेचयन्तु॥ ४॥

स्वस्य महतोऽपि लघुतरनिबन्धसूचनीयन्यूनतां शिष्यसमीहितसंपादनेन सहिष्णोः परमकारुणिकत्वं स्वस्य प्रतिपादयति—बहुयाचनयेति। बलभद्रो भट्टाचार्यः कश्चन सम्यग्भक्तः शिष्यः परमवेदान्तशास्त्रनिष्णातः॥ ४॥

तं न स्तौमि विधिं यदीयजलधावध्यस्तदेहः क्वचिन्
मूर्तिर्ब्रह्म कदाचिदेव विबुधैर्लब्धं न वा लभ्यते।
तं वन्दे मधुसूदनं यदुदिते बिन्दौ चिदानन्दितं
ब्रह्म स्थायि सदा मुदैव विबुधैर्नूनं समालभ्यते॥ १॥
बालार्थं विहितास्तथापि च गुरोः सन्दर्भगर्भा गिरो
बुध्यन्ते किल कैश्चिदेव सुचिराद्वृद्धैः समृद्धैरपि।
तस्मादत्र निगूढमर्थगहनं प्रद्योतयन्ती परं
भूयः श्रीपुरुषोत्तमप्रणयिनी वाणी समुज्जृम्भते॥ २॥
सद्व्याख्याननिरस्तदोषमचिराद्दुर्लङ्घ्यमानं बुधै-
र्यत्सिद्धान्तदुरन्तसिन्धुमकरोदाहृत्य बिन्दूपमम्।
सम्यग्लब्धसुदर्शनाय विलसद्वाणीप्रणीतश्रिये
निर्व्याजं मधुसूदनाय गुरवे तस्मै परस्मै नमः॥ ३॥

अलमन्याम्बुधिभ्रान्तैर्मुह्यन्तां विबुधैरिह॥ बिन्दुसन्दीपनाभ्यासे युक्तिमौक्तिकपंक्तयः॥ ४॥

इति श्रीमधुसूदनसरस्वतीश्रीश्रीधरसरस्वतीपूज्यपादशिष्यपरमहंसपरि-
व्राजकाचार्यश्रीपुरुषोत्तमसरस्वतीश्रीपादविरचितो बिन्दुसन्दी-
पनाख्यो ग्रन्थः समाप्तः॥ ॥ श्रीरामार्पणमस्तु॥

---

जयतु श्रीकृष्णः।

# 'गुजराती न्युस'स्थानि क्रय्यसंस्कृतपुस्तकानि।

## वेदग्रन्थाः

| | मू. रु. आ. पै. |
|---|---|
| गणेशाथर्वशीर्षम्—सभाष्यम् ... ... ... | ०—६—० |
| पुरुषसूक्त—श्रीसूक्त—लक्ष्मीसूक्त—उत्तरनारायणेन सह—... | ०—३—० |
| शुक्लयजुर्वेदीयरुद्राष्टाध्यायी— ... ... ... | ०—६—० |

## उपग्रन्थाः

| | |
|---|---|
| हिरण्यकेशीयगृह्यसूत्रम्—हिरण्यकेशीयानामुपनयनादिसंस्कारेष्वयं ग्रन्थोऽतीवोपयोगी, अद्यावधि केनापि न मुद्रितः। ... ... | ०—५—० |

## पुराण—इतिहासग्रन्थाः

| | |
|---|---|
| श्रीमद्भागवतं—चूर्णिकासहितं (स्थूलोत्तमाक्षरं) वेदस्तुतौ श्रीवल्लभाचार्यकृतसुबोधिनीटीकासहितं सुचिक्कनग्लेजपत्रात्मकं सचित्रम्। | १२—०—० |
| श्रीमहाभागवतम्—इदं देवीभागवतं वा महाभागवतमिति नाम्ना प्रसिद्धमस्ति। अस्य नामान्तरं देवीपुराणमित्यपि वर्तते, अत्र महाकाली, दाक्षायणी, गंगा, पार्वतीत्यादीनां मनोहारिण्यः कथा विद्यन्ते। श्रीरामस्कन्धपांडवादीनां कथानकानि सन्ति। **ललितासहस्रनाम भगवतीगीता** च वर्तते। अतिप्राचीनं चेदं पुस्तकं मनोहरपत्रेषु सुवाच्यैः सीसकाक्षरैर्मुद्रितम्। ... ... | २—०—० |
| श्रीरामायणम्—वाल्मीकिमुनिप्रणीतं, रामायण—तिलक, रामायण—शिरोमणि, रामायण—भूषणेति टीकात्रयोपेतम्— | |
| „ प्रथमं बालकाण्डम् ४०१ ... ... | ३—०—० |
| „ द्वितीयं अयोध्याकाण्डम् ६३८ ... ... | ५—०—० |
| „ तृतीयं अरण्यकाण्डम् ३४० ... ... | २-१२-० |
| „ चतुर्थं किष्किन्धाकाण्डम् ३२० ... ... | २-१२-० |
| „ पंचमं सुन्दरकाण्डम् ३४६ ... ... | ३—८—० |
| „ षष्ठं युद्धकाण्डम् ३६५ ... ... | ८—०—० |
| „ सप्तमं उत्तरकाण्डम् ३५५ ... ... | ६—०—० |
| सत्यनारायणपूजा—मूलमात्रं... ... ... ... | ०—३—० |
| „ „ हिन्दी... ... ... ... | ०—४—० |

| | | |
|---|---|---|
| सप्तशती—देवीसूक्तरहस्यत्रयसहिता—स्थूलाक्षरा | ( पत्राकारा ) | १—०—० |
| ,, ,, ,, | ( कौशेयवस्त्रबद्धा ) | १—४—० |
| ,, ,, मध्यमाक्षरा | ( पत्रबद्धा ) | ०—९—० |
| ,, ,, ,, | ( कौशेयवस्त्रबद्धा ) | ०-१२-० |

## नीतिशास्त्रग्रन्थाः

| | |
|---|---|
| नीतिसूत्रं—चाणक्याचार्येण विरचितं, ग्रन्थोऽयं लघुरपि नीतिसिद्धांतपूर्णो व्यवहारजिज्ञासूनामतीवोपकारकः। ... ... | ०—२—० |

## स्तोत्रग्रन्थाः

| | | |
|---|---|---|
| गणेशसहस्रनामावलिः— ... ... ... ... | | ०—३—० |
| देवीसहस्रनामावलिः— ... ... ... ... | | ०—३—० |
| विष्णुसहस्रनामावलिः— ... ... ... ... | | ०—३—० |
| शिवसहस्रनामावलिः— ... ... ... ... | | ०—३—० |
| बृहत्स्तोत्रसरित्सागरः सचित्रः—अत्र स्तोत्रकर्तॄणां चित्राणि तथा श्रीवल्लभाचार्याणां त्रिवर्णयुतं चित्रं वर्तते हरिरायजीकृताष्टपद्यः साधिकरणो मतान्तरपाठसहितो ब्रह्मसूत्रपाठोऽपि विद्यते। ... | | ५—०—० |
| विष्णुसहस्रनाम—मूलं स्थूलाक्षरं | ( पत्रबद्धम् ) | ०—३—० |
| ,, ,, | (कौशेयवस्त्रबद्धं) | ०—५—० |
| ,, ,, | ( जले क्लिन्नं न भवत्येवं ) | ०—४—० |
| विष्णुसहस्रनामयुतपंचरत्नस्तोत्रं—मूलं स्थूलाक्षरं. विष्णुसहस्रनाम, शतनाम, अष्टाविंशतिनाम, षोडशनाम, नामाष्टकं चेति। | ( पत्रबद्धं ) | ० - ३—० |
| ,, ,, ,, | ( जले क्लिन्नं न भवत्येवं ) | ०—४—० |
| ,, ,, ,, | ( कौशेयवस्त्रबद्धं ) | ०—६—० |
| स्तोत्ररत्नहारः—अत्रास्माभिः अतिप्रयासेन पूर्वस्मात्षष्टि स्तोत्राणि संगृहीतानि (४७६ स्तोत्रसंख्या, पृष्ठसंख्या १०२९) ... | | १-१४-० |
| ,, ,, ,, | ( कौशेयबद्धः ) | २—४—० |
| ,, प्रथमो भागः—स्तोत्रसंख्या २३४ मुचिक्कन | ( वस्त्रबद्धः ) | ० १४-० |
| ,, ,, ,, | ( जलेक्लिन्नो न भवत्येवं ) | १—०—० |
| ,, ,, ,, | ( कार्पासवस्त्रबद्धः ) | १—२—० |
| ,, ,, ,, | ( कौशेयवस्त्रबद्धः ) | १—४—० |
| ,, द्वितीयो भागः—स्तोत्रसंख्या २३५—४७६ मुचिक्कन | (वस्त्रबद्धः) | ०-१४-० |
| ,, ,, ,, | ( जलेक्लिन्नो न भवत्येवं ) | १—०—० |
| ,, ,, ,, | ( कार्पासवस्त्रबद्धः ) | १—२—० |
| ,, ,, ,, | ( कौशेयवस्त्रबद्धः ) | १—४—० |

पुष्टिमार्गीयस्तोत्ररत्नाकरः—पुरुषोत्तमनामसहस्रषोडशग्रन्थसर्वोत्तम-
स्तोत्रप्रभृति ( ८१ ) स्तोत्रग्रन्थसमूहात्मकः ( पत्रबद्धः ) ०-८-०
" " " ( कौशेयवस्त्रबद्धः ) ०-१० ०
गंगालहरी—(सटीका) सं. टीका ... ... ... ०-७-०
" मूलमात्रं ... ... ... ... ०-२-०

## धर्मशास्त्रग्रन्थाः

उत्सर्गमयूखः—मीमांसकश्रीनीलकण्ठभट्टविरचितः। अत्र वापीकूप-
तडागारामाणामुत्सर्गविधिः कथितः। ... ... ... ०-४-०
दानमयूखः—मीमांसकश्रीनीलकण्ठभट्टविरचितः। अत्र दानसामान्ये-
तिकर्तव्यता, मण्डपादिलक्षणम्, दानानि दानप्रयोगाश्च विस्तरेण
निरूपिताः। .... ... ... ... ... २-०-०
प्रतिष्ठामयूखः—मीमांसकश्रीनीलकण्ठभट्टविरचितः। अत्र शिवविष्ण्वा-
दिप्रतिमास्थापनं तथा जीर्णानामुद्धारः विस्तरेणोपपादितः। ... ०-६-०
प्रायश्चित्तमयूखः— ... ... ... ...
विशुद्धिमयूखः— ... ... ... ... } २-८-०
शान्तिमयूखः— ... ... ... ...

## व्याकरणग्रन्थाः

अष्टाध्यायीसूत्रपाठः—( सह त्रिमुनिकल्पद्रुमोद्योतः ) ... ०-७-०
धातुरूपावलिः— ... ... ... ... ०-३-०
लघुसिद्धान्तकौमुदी—श्रीवरदराजविरचिता, सटिप्पणी सूत्राणां अकारा-
दिकोशेन सहिता ... ... ... ... ०-८-०
शब्दरूपावलिः— ... ... ... ... ०-२-०
समासचक्रम्— ... ... ... ... ... ०-१-०
भवानीसिंहकारकरत्नम्—विद्वदादरणीयोऽयं व्याकरणग्रन्थः ... ०-८-०
सिद्धान्तकौमुदी—भट्टोजीदीक्षितकृता अष्टाध्यायीसूत्रपाठ-गणपाठ-
धातुपाठ-लिङ्गानुशासन-शिक्षा-सूत्रानुक्रमणिकया युता। ... ३-०-०
शब्दमञ्जरी—( अव्ययसमासप्रकरणधातुमालिकासहिता पंडीत अनंत
नारायण शास्त्रिणा संकलिता ... ... ... ०-६-०

## न्यायवैशेषिकग्रन्थाः

तर्कामृतम्—तरंगिणीटीकासहितं श्रीजगदीशतर्कालंकारप्रणीतम् ... ०-६-०
तर्कसंग्रहः—नीलकण्ठीटीकासहितः ... ... ... ०-१२-०

तर्कसंग्रहः—( सटीकः ) ... ... ... ... १—५—०

न्यायभाष्यम्—पंडितसुदर्शनाचार्यकृतप्रसन्नपदाटीकोपेतम् । ... ९—०—०

## वेदान्तग्रन्थाः

भेदरत्नम्—पूर्वार्धं शंकरमिश्रविरचितम्
अद्वैतरत्नरक्षणम्—उत्तरार्धं मधुसूदनसरस्वतीविरचितम् } १—०—०

पंचरत्नी भगवद्गीता—स्थूलाक्षरा ( कौशेयवस्त्रबद्धा ) १—८—०

" " ( वस्त्रबद्धा ) १—४—०

" मध्यमाक्षरा ( पत्रबद्धा ) ०—६—०

" " ( वस्त्रबद्धा ) ०—८—०

" " ( कौशेयवस्त्रबद्धा ) ०—९—०

मतान्तरपाठसमेतो ब्रह्मसूत्रपाठः— ... ... ... ०—४—०

विशिष्टाद्वैताधिकरणमाला—पञ्चनदीयपण्डितसुदर्शनाचार्यविरचिता । अत्र अथशब्दस्यानन्तर्यपरमतःशब्दस्य च कर्मज्ञानवृत्ततापरत्वं, हिरण्यगर्भादिजीवानां परमेश्वरनिरासः, योगमतनिरासः, ब्रह्मणः प्रपञ्चोपादानत्वं च, सृष्टौ वैषम्यं कर्मापेक्षम्, पशुपतिमतनिरासः, भागवतमतसंस्थापनम्—इत्यादयो विषया रामानुजमतेन सम्यङ्निरूपिताः । ... ... ... ... ... १—०—०

वेदान्तसंज्ञावली— ... ... ... ... ०-१०-०

श्रीभगवद्गीता—मध्यमाक्षरा ( पत्रबद्धा ) ०—४—०

" " ( वस्त्रबद्धा ) ०—६—०

" " ( कौशेयवस्त्रबद्धा ) ०—९—०

" स्थूलाक्षरा " १—०—०

" " ( पत्रबद्धा ) ०-१२-०

श्रीमद्भगवद्गीता—( सप्तटीकोपेता ) ... ... ... १०—०—०

श्रीमद्भगवद्गीता—( अन्याष्टटीकोपेता ) ... ... ... १०—०—०

सिद्धान्ततत्त्वबिन्दुः—श्रीमधुसूदनविरचितः ... ... ०—४—०

सिद्धान्ततत्त्वबिन्दुः—( श्रीपुरुषोत्तमसरस्वतीकृतबिन्दुसंदीपनेन श्रीनारायणयतिविरचितया लघुव्याख्यया च सहितः ) ... १—८—०

तैत्तिरीयोपनिषत्—श्रीशांकरभाष्ययुता आनंदगिरिकृतटीकोपेता च । १—०—०

पञ्चदशी—श्रीमद्विद्यारण्यमुनिविरचिता पददीपिकापूर्णानंदेन्दुकौमुदीतिटीकाद्वयोपेता ... ... ... ... ५—०—०

देवीगीता—मुद्रियमाणा ( पत्रात्मिका )

रामगीता माहात्म्यं च— ... ... ... ... ०—१—०

| | | |
|---|---|---|
| अवधूतगीता— | ( पत्रबद्धा ) | ०–४–० |
| ,, | ( कौशेयवस्त्रबद्धा ) | ० ६–० |
| गणेशगीता— | ( पत्रबद्धा ) | ०–२–६ |
| ,, ,, | ( कौशेयवस्त्रबद्धा ) | ०–५–० |
| उत्तरगीता— ... ... ... ... ... | | ०–६–० |
| नारदगीता— ... ... ... ... ... | | ०–१–६ |
| शिवगीता— | ( पत्रबद्धा ) | ०–२–६ |
| ,, ,, | ( कौशेयवस्त्रबद्धा ) | ०-१२-० |

## कोषग्रंथाः

सर्वतन्त्रसिद्धान्तपदार्थलक्षणसंग्रहः—भिक्षुगौरीशंकरेण संगृहीतः । ग्रन्थेस्मिन्वेदवेदाङ्गदर्शनस्मृतिपुराणकाव्यसाम्प्रदायिकादिविविधशास्त्रप्रतिपादितपदार्थानां द्वात्रिंशत्युत्तरशतषष्ठाधिकद्विसहस्र (२६३२) लक्षणानि सन्ति, सर्वविषयोपकारकः सुखप्रवेशसाधनभूतश्च लाक्षणिकनिबन्धोऽद्यावधि केनापि न मुद्रितः । ... ... १–०–०

पद्मचंद्रकोषः—(संस्कृत और हिंदी) व्युत्पत्तिविषयसहितः अर्वाचीनशोधसहितश्च शब्दसंख्या ३०००० ... ... ... ७–०–०

## साहित्यशास्त्रग्रन्थाः

दशरूपकम्—धनञ्जयकृतटीकोपेतं सुदर्शनाचार्यकृतप्रभाख्यटीकोपेतं च। १–०–०

## काव्यग्रन्थाः

नीतिशतकं—भर्तृहरिकृतं, श्रीरामचन्द्रबुधेन्द्रकृतया सहृदयरञ्जिन्याख्यया व्याख्यया सहितम् ... ... ... ... ०–६–०

मेघदूतकाव्यं—कालिदासकृतं मल्लिनाथकृतसंजीविनीटीकया सहितम् ... ०–८–०

| | | |
|---|---|---|
| रघुवंशः—मल्लिनाथीटीकया सहितः समग्रः... ... ... | | १–४–० |
| ,, ,, | ( प्रथमपञ्चसर्गाः ) | ०–६–० |
| रघुवंशः—( अरुणगिरिनाथव्याख्यया सहितः ) सर्गाः १–६ ... | | २–०–० |
| वैराग्यशतकम्—भर्तृहरिकृतं सटीकम् ... ... ... | | ०–६–० |
| शतकचतुष्टयम्–( भर्तृहरिकृतनीतिशृङ्गारवैराग्यशतकैः सह सटीकम् ) | | १–२–० |
| शृङ्गारशतकं—भर्तृहरिकृतं सटीकम् ... ... ... | | ०–६–० |

नैषधकाव्यरत्नम्—महाकविश्रीहर्षप्रणीतं च मल्लिनाथसूरिविरचितजीवातुसमाख्यया व्याख्यया सहितम् ) १–६ सर्गाः ( पत्रबद्धम् ) १–८–०

| | | |
|---|---|---|
| ,, ,, ,, | ( वस्त्रबद्धम् ) | २–०–० |
| ,, ,, ७–११ सर्गाः | ( पत्रबद्धम् ) | १-१२-० |
| ,, ,, ,, | ( वस्त्रबद्धम् ) | २–८–० |

किरातार्जुनीयम्—(व्याख्यानद्वयसहितम्) १—३ सर्गाः ... ०-१२-०

श्रीकृष्णविलासकाव्यम्—विलासिन्याख्यया व्याख्यया सहितम् ... ०-१२-०

गीतगोविन्दम्—महाकविश्रीजयदेवविरचितं, कुंभनृपतिप्रणीतया रसिकप्रियया व्याख्यया महामहोपाध्यायशंकरविरचितरसमंजरीव्याख्यया च सहितम् ... ... ... ... ... १—२—०

भासकथासारः—( प्रथमद्वितीयौ भागौ ) ... ... ०—८—०

नित्याह्निकम्—सस्वरम् ( वस्त्रबद्धम् ) ०—८—०

## कामशास्त्रग्रन्थाः

अनंगरंगः—महाकविश्रीकल्याणमल्लविरचितः । ... ... २—०—०

कंदर्पचूडामणिः—वघेलवंशावतंसमहाराजश्रीवीरभद्रदेवविरचितः । ... ३—०—०

कन्दर्पचूडामणिः—हिन्दीभाषानुवादेन सहितः । रीवानरेश—व्यंकटरमणमहाराजानां आश्रयेण प्रकाशितः । ... ... ... १०—०—०

कामसूत्रम्—वात्स्यायनमुनिप्रणीतं जयमङ्गलाख्यया टीकया सहितम् ... १०—०—०

कुट्टनीमतम्—(रसदीपिकाख्यया टीकया सह) ... ... ५—०—०

पंचसायकः—कविशेखरश्रीज्योतीश्वरविरचितः । ... ... १—०—०

नागरसर्वस्वम्—नेपालस्य नृपजगज्ज्योतिर्मल्लभूपकृत टीकया तनसुखरामकृतविवरणेन च सहितम् ।... ... ... ... ४—०—०

रतिरहस्यम्—दीपिकाख्यया टीकया सहितम् ... ... ५—०—०

## वैद्यकग्रन्थाः

आयुर्वेदप्रकाशः—उपाध्यायश्रीमाधवविरचितः । द्वितीयं संस्करणम् । ... २—०—०

आयुर्वेदीयनावनीतकम्— ... ... ... ... ६—०—०

गदनिग्रहः—श्रीशोढलवैद्यविरचितः । अस्य प्रयोगखण्डात्मकः प्रथमो भागः । अस्मिन् खण्डे घृततैलचूर्णगुटिकासवावलेहाख्याः षडधिकाराः सन्ति । द्वितीयं संस्करणम् । ... ... ... २—०—०

गदनिग्रहस्य द्वितीयो भागः—कायचिकित्सा शल्य—शालाक्यभूत—तन्त्र—कौमारभृत्यागदतन्त्र—रसायनवाजीकरण—पञ्चकर्मविध्याख्यनवखण्डात्मकः । ... ... ... ... ... ४—८—०

चक्रदत्तः—( संस्कृत हिंदी अनुवादेन सह ) वैद्यानामतीवोपयोगी ग्रंथः ६—०—०

नाडीपरीक्षा—श्रीरावणकृता । ... ... ...
वैद्यमनोरमा—श्रीकालिदासवैद्यविरचिता, तथा ... ...
धाराकल्पः—द्वितीयं संस्करणम् । एतद्ग्रन्थत्रयमेकत्र बद्धमेवोपलभ्यते । } १—८—०

राजमार्तण्डः—श्रीभोजमहाराजविरचितः ... ... ... १—८—०

